मीमांसा-

# न्यायप्रकाशः

आपोदेव-प्रणीत-पूर्व्वमीमांसा-प्रकरणविशेषः

पूर्व्वस्थलीनिवासि-महामहोपाध्यायोपाधिक-

श्रीकृष्णनाथ-न्यायपञ्चानन-भट्टाचार्य्य-विरचितया

अर्थदर्शनी-समाख्यया टीकया सहितः

तेनैव प्रकाशितः

तदीयान्तेवासिना स्मृतितीर्थोपाधिकेन

श्रीअक्षयकुमार देवशर्म्मणा संस्कृतः।

R672,5x2,1,5
15F3 1628

कलिकाता-नगरे

३०नं हरीतकीबागान लेनस्थ

पशुपति यन्त्रे

श्रीराजकुमार रायेण मुद्रितः

१८४५ शकाब्दाः

मूल्यम् १॥० पादोनमुद्राद्वयम्।

C.N
R672,5x2,1,5
15F3

CC.0- Jangamwadi Math Collection. Digitized by eGangotri



# न्यायप्रकाशः ।



श्रीगणेशाय नमः ।

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥
अनन्तगुणसम्पन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥

इह खलु परमकारुणिकेन भगवता जैमिन्यृषिणा अथातो धर्म्मजिज्ञासेत्यादिना द्वादशस्वध्यायेषु धर्म्मो विचारितः । तत्र

---

श्रीगणेशाय नमः ।

क्षणाज्जगन्ति संहृत्य रचयन्तं पुनः पुनः ।
बालं धूलिगृहाणीव प्रणमामि महेश्वरम् ॥
यस्याध्यापनमहिमा सञ्चारयति विबुधेतरस्य धियम् ।
सोऽखिलशास्त्रविचाराच्छान्तभ्रान्तिर्गुरुर्जयति ॥
कमलाकेशवौ नाम्ना पितरौ प्रणमाम्यहम् ।
यद्भक्तिलेशसम्पर्कादन्तरायोऽन्तमृच्छति ॥
मत्वा वाग्रूपिणीमर्थदर्शनी नाम तन्यते ।
न्याय प्रकाशटीकेयं श्रीकृष्णनाथशर्म्मणा ॥
याचे साञ्जलिबन्धोऽहं यो यो दोषोऽत्र वर्त्तते ।
तत्संस्कारश्रमभिया सर्व्वैर्नोपेक्ष्यतां बुधैः ॥

निर्विघ्नेन प्रारिप्सितपरिसमाप्तये क्रियमाणं श्रीगोविन्दवन्दनं वाचाभिलपति यत्कृपेति । गुरुवन्दनमप्यभिलपति अनन्तेति । ननु तस्मिन् धर्म्मविचारे कतमः

वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म्मः। यथा यागादिः। स हि यजेत स्वर्गकाम इत्यादिवाक्येन स्वर्गमुद्दिश्य विधीयते। तथाहि यजेतेत्यत्रास्त्यंशद्वयं यजिर्धातुः प्रत्ययश्च। तत्र प्रत्ययेऽप्यस्त्यंशद्वयम् आख्यातत्वं लिङ्त्वञ्च। आख्यातत्वञ्च दशस्तु लकारेषु विद्यते। लिङ्त्वं पुनः केवलं लिङ्येव। तत्राख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलभावकव्यापारविशेषः। सा च द्विविधा शाब्दी भावना आर्थी

---

पदार्थधर्म्मपदवाच्यतया सिद्ध इत्यवाह वेदेनेति। एतेन पुष्टिकामो घृतं पिबेदित्यादिलौकिकपुष्टिरूपप्रयोजनमुद्दिश्य विहिते घृतपानादावर्थे नातिव्याप्तिः। प्रयोजनमिति। प्रयोजनमिष्टविशेषमुद्दिश्याभिसन्धाय विहितः प्रतिपादित इत्यर्थः। इष्टसाधनतया बोधित इति यावत्। एतेन स्वर्गपुत्रादिफले नातिव्याप्तिः। स्वर्गपुत्रादेरिष्टसाधनतया वेदबोधितत्वाभावात्। अथय निःश्रेयससाधनम्। कोऽर्थो यो निःश्रेयसायेति भाष्योक्तेः निश्रेयसञ्च निश्चितं श्रेयः। बलवदनिष्टाननुबन्धीष्टमिति यावत्। तथाच इष्टसाधनत्वेन वेदबोधितत्वे सति बलवदनिष्टाननुबन्धीष्टसाधनत्वं धर्म्मत्वमिति धर्म्मलक्षणं सिद्धम्। विशेष्यदलात् श्येनेनाभिचरन् यजेतेत्यादिवेदवाक्येन इष्टसाधनतया बोधितेऽपि श्येनादौ नातिव्याप्तिः। तस्य नरकफलकत्वेन बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावात्। सत्यन्तदलाच्च भोजनादिव्यावृत्तिः। धर्म्मस्वरूपं प्रतिपादयति यथेति। यागादेर्धर्म्मपदार्थत्वे निरुक्तलक्षणाक्रान्तत्वं हेतुमाह सहीति। यजेतेत्यादिवाक्येन यागादेः स्वर्गजनकत्वेन विहितत्वं प्रतिपादयति तथाहीति। प्रकृतिप्रत्ययरूपमंशद्वयं दर्शयति यजिरिति: प्रत्यय ईतेति लिङ्रूपः। अस्त्यंशद्वयमिति। व्याप्यव्यापकरूपं धर्म्मद्वयमित्यर्थः। व्यापकधर्म्ममाह आख्यातत्वमिति। व्याप्यधर्म्ममाह लिङ्त्वमिति। व्यापकत्वं व्याप्यत्वञ्चोपपादयति आख्यातत्वमित्यादि। दश लकाराः लड़ादयः। भावना उत्पादना णिजन्तस्य भवते रूपत्वात्। तत्स्वरूपमाह भावनानामेति। भवितुरित्यादि। भवितुरुत्पत्तुः। भवनमुत्पत्तिः। तदनुकूलस्तज्जनको यो भावकस्य उत्पादकस्य व्यापारविशेषः स एव भावना नामेत्यर्थः।

प्रत्ययांशद्वितयबोध्यां भावनां विभजति सा चेति। शाब्दभावनायां भावना सामान्यलक्षणं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावना चेति। तत्र पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः शाब्दी भावना। सा च लिङ्त्वांशेनोच्यते। लिङ्श्रवणे अयं मां प्रवर्त्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेनप्रतीयमानत्वात्। यच्च यस्मात् प्रतीयते तत्तस्य वाच्यं यथा गोशब्दस्य गोत्वम्। स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। न हि वेदः पुरुषनिर्म्मितः।

वेदस्याध्ययनं सर्व्वं गुर्व्वध्ययनपूर्व्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥

---

सङ्गमयति पुरुषेति। पुरुषस्य यागादिकर्त्तुर्या प्रवृत्तिराद्यकृतिस्तदनुकूलो य उत्पादकव्यापारविशेषः सा शाब्दी भावनेत्यर्थः। तस्याः किमंशवाच्यत्वमित्यत्राह सा चेति। तस्या लिङ्वाच्यत्वमुपपादयति लिङ्श्रवण इति। नियमेन अव्यभिचारेण। तत्प्रतिपाद्यत्वमेव तद्वाच्यत्वमित्याह यच्चेति। यस्मात् शब्दात् दृष्टान्तमाह यथेति। स च व्यापारविशेषः किंनिष्ठ इत्यत्राह स चेति। तद्व्यापारस्वरूपन्तु अर्थवादप्रकरणे निरूपायिष्यते। अर्थभावनास्वरूपञ्च तत्रैव प्रदर्शयिष्यते। तथा चार्थभावनया स्वर्गादेः कर्मतयान्वयात् यागेन स्वर्गं भावयेदित्यर्थपर्य्यवसानात् यागादेः स्वर्गादिरूपप्रयोजनमुद्दिश्य वेदविहितत्वेन धर्म्मत्वं सिध्यतीति तत्र वक्ष्यते च।

वेदस्य पुरुषनिर्म्मितत्वाभावे हेतुमाह वेदस्येति। अनया कारिकया वेदस्य पुरुषनिर्म्मितत्वाभावोऽनुमानेन साधितः। तथाहि : सर्व्वं वेदस्याध्ययनं समस्तपुरुषीयवेदाध्ययनं गुर्व्वध्ययनपूर्व्वकं गुरुकृताध्ययनपूर्व्वकम्। यदि गुरोरध्ययनं प्राक् न जातं तदा तच्छिष्याणामध्ययनं न सम्भवतीति भावः। तथाच वेदाध्ययनं गुर्व्वध्ययनपूर्व्वकमिति प्रतिज्ञा। अत्र हेतुर्वेदाध्ययनसामान्यादिति। वेदाध्ययनत्वादित्यर्थः। अत्रोदाहरणमाह अधुनाध्ययनं यथेति। अधुनातनाध्ययनवदित्यर्थः। एवञ्च गुरोरप्यध्ययनस्य गुर्व्वध्ययनपूर्व्वकत्वं तस्यापि तथात्वमिति नित्यतैव वेदस्यायातेति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात्। यः कल्पः स कल्पपूर्व्वक इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्व्वज्ञत्वादीश्वरो गतकल्पीयवेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेः

---

ननु सृष्टिदशायां प्रथमजीवस्य हिरण्यगर्भस्य वैदिकसम्प्रदायप्रवर्त्तकस्याध्ययने गुर्व्वध्ययनपूर्व्वकत्वासम्भवात् तेनैव वेदस्य विरचितत्वं कल्पनीयं कथमनादित्वकल्पनेत्यतो हेत्वन्तरमाह य इत्यादि अनुपपत्तेरित्यन्तेन। य इति। प्रलयः प्रलयपूर्व्वक इत्यर्थः। सृष्टिमन्तरेण प्रलयासम्भवात् सृष्टेः पूर्व्वं प्रलयावश्यम्भावाच्चेति भावः। संसारस्य सृष्टिप्रवाहस्य। अनादित्वात् आदिरहितत्वात्। अयञ्च गतकल्पीयेत्यत्र हेतुः। ननु संसारस्यानादित्वेऽपि एकेन प्रलयेन वेदविलोपे जाते सृष्टिदशायां वेदस्यापि सृष्टिरवश्याभ्युपेया। हिरण्यगर्भादीनामपि सृष्टत्वेन तत्स्मृतिविषयत्वेन वेदस्थितिकल्पनाया असम्भवादित्यतः सर्व्वज्ञेश्वरस्मरणविषयतया वेदस्य नित्यसद्भावात्तदुपदेशवशाच्च हिरण्यगर्भादिक्रमेण सम्प्रदायप्रवर्त्तनाद्वेदस्यापौरुषेयत्वमुपपन्नमेवेति दर्शयति ईश्वरस्य चेति। सर्व्वज्ञत्वादिति। यः सर्व्वज्ञः सर्व्वविदिति श्रुतेः। तथाच तस्याध्ययनमन्तरेणापि सर्व्वज्ञतया निखिलवेदार्थज्ञानसम्भव इति भावः। उपदिशति हिरण्यगर्भायेति शेषः। यो ब्रह्माणं विदधाति पूर्व्वं यो वै वेदांश्च प्रहिणोति तस्मै इति श्रुतेः। एतेन हिरण्यगर्भीयाध्ययनस्य गुर्व्वध्ययनपूर्व्वकत्वाभावात् यद्यदध्ययनं तद्गुर्व्वध्ययनपूर्व्वकमित्येतन्नियमे व्यभिचार एव पूर्व्वोक्तानुमाने अस्वरसो दर्शितः।

ननु ईश्वरस्य गतकल्पीयवेदस्मरणाङ्गीकारे गौरवात् सर्व्वज्ञतया सर्व्वविषयक-प्रत्यक्षावभासस्यावश्याभ्युपेयत्वाच्च प्रत्यक्षप्रमाणेन ज्योतिष्टोमादीनां स्वर्गादिजनकत्वमर्थमुपलभ्य वेदस्य तद्विरचितत्वमेव सुवचमित्यत आह प्रमाणान्तरेणेति। प्रत्यक्षप्रमाणेनेत्यर्थः। अनुपपत्तेरिति कल्पभेदेन वेदस्यानन्तोत्पादविनाशकल्पनागौरवादिति भावः।

तथाच पराशरः।

न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता पितामहः।
तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पत्तेश्च। ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा। अतएव शाब्दी भावनेति व्यपदिशन्ति।

सा च शब्दी भावनांशत्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यताञ्चेति। तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थी भावना साध्यत्वेन संबध्यते एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः।

---

स्मृत्यन्तरञ्च।

नामरूपे च भूतानां कर्म्मणाञ्च प्रवर्त्तनम्।
वेदशब्देभ्य एवासौ निर्म्ममे स महेश्वरः॥
सर्व्वेषाञ्च स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्म्ममे॥

स्मृत्यन्तरञ्च।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या ततः सर्व्वाः प्रवृत्तयः॥

उत्सर्गोऽप्ययं वाचः सम्प्रदायप्रवर्त्तनात्मको द्रष्टव्यः। अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासम्भवादिति शारीरकभाष्यम्। मीमांसकमते शब्दस्य नित्यतया अनादिनिधनत्वोपपत्तिः उच्चारणस्यैवोत्पत्तिविनाशाङ्गीकारात्।

शब्दनिष्ठैव लिङादिशब्दनिष्ठैव। अतएव लिङादिशब्दनिष्ठत्वादेव। केवलायाभावनाया अनन्वयात् साकाङ्क्षत्वमाह सा चेति। अंशत्रयं विवृणोति साध्यमित्यादि। साध्यं भाव्यम्। साधनं करणम्। इतिकर्त्तव्यतामुपकारकम्। तत्र तेष्वाकाङ्क्षितेषु मध्ये। आर्थी भावनापुरुषप्रवृत्तिः। आर्थं भावनाया भाव्यत्वेनान्वये उपस्थितिसन्निकर्षं हेतुमाह एकेति। एकेन लिङादिप्रत्ययेन गम्यत्वेन बोध्यत्वेनेत्यर्थः। समानेति। एकोक्तिरूपश्रुतेरित्यर्थः। तथाच द्वयोरेव भावनयोरेकेन लिङ्पदेनाभिधानात् आर्थभावनाया एव सन्निहितोपस्थितत्वात् शाब्दभावनाकर्मत्वेनान्वयो न तु प्रकृत्यर्थयागादेस्तस्य दूरोपस्थितत्वादिति भावः। ननु यजेतेत्यादि लिङा यथा आर्थभावना प्रतिपाद्यते तथा एकत्वादिसङ्ख्या वर्त्तमानादिकालश्च प्रत्याय्यते। एवञ्च आर्थभावनावत् सङ्ख्यादीनामप्येकप्रत्ययगम्यतया सन्निहितोपस्थितत्वात् कथं तेषां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि सङ्ख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाप्ययोग्यत्वान्न तेषां भाव्यत्वेनान्वयः । करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन संबध्यते । तस्य च करणत्वं न भावनोत्पादकत्वेन सन्निकर्षस्येव रूपादिज्ञाने । सन्निकर्षात् प्राक् रूपादिज्ञानस्येव लिङादिज्ञानात् प्राक् शब्दधर्म्मभावनाया अभावप्रसङ्गात् । किन्तु भावनाभाव्यनिर्वर्त्तकत्वेन । लिङादिज्ञानं हि शब्दभावनाभाव्यार्थभावनां निर्वर्त्तयति । कुठार इव च्छेदनम् ।

---

शाब्दभावनायां कर्म्मत्वेनान्वयो नाङ्गीक्रियतामित्यत आह यद्यपीति । अयोग्यत्वादिति । कर्तृगतैकत्वसङ्ख्यायाः कालस्य च उत्पाद्यत्वासम्भवादिति भावः । करणाकाङ्क्षायां साधनाकाङ्क्षायाम् । लिङादिज्ञानं लिङादिविषयम् । करणत्वस्य कारणताविशेषत्वात् भावनायां करणीभवल्लिङादिज्ञानं किं भावनोत्पादकं स्यादित्यवाह तस्य चेति । लिङादिज्ञानस्येत्यर्थः । सन्निकर्षस्येवेति । यथा इन्द्रियसन्निकर्षस्य रूपादिविज्ञाने उत्पादकत्वं तद्वदुत्पादकत्वेन करणत्वं लिङ्गादिज्ञानस्य नेति व्यतिरेकेण दृष्टान्तः । तथात्वाङ्गीकारे दोषमाह सन्निकर्षादिति । सन्निकर्षात् प्राक् यथा रूपादिज्ञानस्याभावस्तथा लिङादिज्ञानात् प्राक् भावनाया अभावप्रसङ्ग इति पूर्व्ववद्व्यतिरेकेण दृष्टान्तः । भावनाया अभावप्रसङ्गे का हानिरित्यतो भावनाविशेषणमुक्तं शब्दधर्मेति । तथाच शब्दधर्म्मस्य शब्दसद्भावे सद्भावावश्यकत्वात् ज्ञानात् प्रागपि लिङ्गादौ तत्सत्तावश्यकीति भावः । शब्दभावनेति । लिङ्गादिशब्दनिष्ठाया भावनाया यद्भाव्यमुत्पाद्यं पुरुषप्रवृत्तिरूपं तस्य निर्वर्त्तकत्वेन निष्पादकत्वेनेत्यर्थः । तथाच यथा देवदत्तो यज्ञदत्तमश्वेन गमयतीत्यत्र देवदत्तकर्तृकायां गमनप्रेरणाक्रियायामश्वस्य न करणत्वं तस्य तत्कारणत्वाभावात् किन्तु णिजन्तगमधात्वर्थफलभूतयज्ञदत्तकर्तृकगमनक्रियायामेव । तथात्रापि भावनायां लिङ्गादिज्ञानस्य न करणत्वं तस्य तन्निष्पादकत्वाभावात् । किन्तु भावनाफलभूतपुरुषप्रवृत्तिभवनक्रियायामेवेति । पुरुषप्रवृत्त्युत्पत्तिकारणत्वात्तन्निर्वर्त्तकत्वमिति भावः । छेदनं छेदनक्रियाजन्यद्वैधीभावरूपफलम् । तथाच कुठारेण छिनत्तीत्यत्र कुठारो यथा उद्यमननिपातनाख्यव्यापाररूपच्छिदानिष्पादकत्वेन न करणं किन्तु तथाविधक्रियाजन्यद्वैधीभावरूपफलनिष्पादकत्वेन तद्वदत्रापीति भावः । उपसंहरति अत इति । लिङादिज्ञानं लिङाद्यर्थज्ञानमिति वक्तव्यम् । अर्थज्ञानमन्तरेण शब्दमात्रश्रवणात् प्रवृत्त्युत्पत्तेरसम्भवात् । थाचीतम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतो लिङादिज्ञानस्य करणत्वेनान्वयः। इतिकर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेन संबध्यते। तच्च प्राशस्त्यज्ञानं वायुर्वै क्षेपिष्ठा देवतेत्याद्यर्थवादैर्जन्यते। ते ह्यर्थवादाः स्वार्थ-प्रतिपादने प्रयोजनमनुपलभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति। स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात्। न चेष्टा-पत्तिः। अध्ययनविधुपात्तत्वेनानर्थक्यानुपपत्तेः। तथाहि। स्वाध्यायो-ऽध्येतव्य इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्त्तव्यतां बोधयन् सर्व्वो वेदः प्रयोजनवदर्थपर्य्यवसायीति सूचयति। निरर्थकस्याध्ययना-नुपपत्तेः।

---

लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥

सम्बन्धबोधः लिङादिः प्रवर्त्तनाशक्तिमत्त्वज्ञानम्।

इतिकर्त्तव्यताकाङ्क्षायाम् उपकारकाकाङ्क्षायाम्। प्राशस्त्यज्ञानं प्रवृत्तिविषयकर्म्मणः प्रशस्तताज्ञानम्। इति कर्त्तव्यतात्वेन प्रवृत्त्युपकारकत्वेन। ननु तेषामर्थवादानां प्राशस्त्यार्थता नोपलभ्यते तत्कथमेषां प्राशस्त्यज्ञानजनकत्वं वर्ण्यत इत्यत आह ते हीति। स्वार्थ-प्रतिपादने स्वारसिकार्थप्रतिपादने। प्रयोजनेत्यादि। निष्प्रयोजना इत्यर्थः। लक्षणया प्राशस्त्यलक्षणया। क्रतोः प्राशस्त्यमिति। तथाच वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्ठा देवता। वायुमेव स्वेन भागधेयेनोपधावति स एनं भूतिं गमयतीति श्रूयते। अत्र यतः। क्षिप्रगामिस्वभावतया क्षिप्रफलप्रदो वायुरस्य यागस्य देवता अतः प्रशस्तमिदं वायव्य-श्वेतालम्भनमित्येवं क्रतोः प्राशस्त्यं प्रतिपादयन्त्यर्थवादा इति भावः। ननु मुख्यार्थपरत्वानुप-पत्तिमन्तरेण लक्षणा नोचितेत्यतो मुख्यार्थपरत्वानुपपत्तिं दर्शयति स्वार्थमात्रेति। स्वारसि-कार्थमात्रेत्यर्थः। आनर्थक्येति। निष्प्रयोजनत्वेत्यर्थः। तदिष्टत्वं निराकरोति न चेति। अध्ययनविध्युपात्तत्वेन अध्ययनविधिविषयत्वेन। तदेव व्यञ्जयति तथाहीति। स्वाध्याय इति समस्तवेदोपलक्षणम्। प्रयोजनवदर्थेति। तथाच यद्यर्थवादानां निष्प्रयोजनत्वं तर्हि तेषामध्ययनविधानमनुचितमिति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः । तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान् । स चाप्राप्तमर्थं विधत्ते । यथाग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते । अग्निहोत्रहोमेन स्वर्गं भावयेदिति ।

यत्र तु कर्म्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रविधानम् । यथा दध्ना जुहुयादिति । अत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम् । दध्ना होमं भावयेदिति ।

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तं न चेदन्येन

---

वेदं विभजति स च वेद इति । प्रयोजनेति । धर्म्मविधानेनेत्यर्थः । स च विधिः । अप्राप्तं प्रमाणान्तरेणाप्राप्तम् । अर्थं निःश्रेयससाधनम् । तथाच अप्राप्तः प्रमाणान्तरेणार्थतया अनवगतो योऽर्थस्तं विधत्ते बोधयतीत्यर्थः । एतेन बलवदनिष्टाननुबन्धीष्टसाधनतयानवगतस्य बलवदनिष्टाननुबन्धीष्टसाधनस्य बोधकवाक्यत्वं विधित्वमिति विधिलक्षणं फलितम् । उदाहरति यथेति । प्रयोजनवत् बलवदनिष्टाननुबन्धीष्टसाधनम् । विधानप्रकारमाह अग्निहोत्रहोमेनेति ननु दध्ना जुहोतीत्यादेः कथं विधित्वं स्यात् होमस्य प्रमाणान्तरेण प्राप्ततया अप्राप्तार्थबोधकत्वाभावादित्यत आह यत्र त्विति । तदुद्देशेन तत्कर्म्मानुवादेन गुणमात्रविधानमिति । मात्रपदेन गुणसहितकर्म्मविधानव्यावृत्तिः । तथाच तत्र कर्म्मांशे अप्राप्तत्वाभावेन विधित्वासम्भवेऽपि गुणस्यार्थतया प्रमाणान्तरेणानवगतत्वात् अर्थभूतस्य तस्य प्रतिपादनादेव तदंशे विधित्वमक्षुण्णमिति भावः । उदाहरति यथेति । अत्र कर्म्मणः प्रमाणान्तरेण प्राप्तत्वं दर्शयति अत्रेति । गुणस्याप्राप्तत्वेन कर्म्मोद्देशेन विधानमिति प्रतिपादयति होमोद्देशेनेति । गुणमात्रविधानप्रकारं प्रतिपादयति दध्ना होममिति । एतेन गुणविधौ कर्म्मण एव भाव्यत्वं फलान्तराभावादिति दर्शितम् ।

गुणकर्म्मणोरुभयोरप्राप्तत्वे तु गुणविशिष्टकर्म्मविधानमित्याह यत्र त्विति । तत्र मीमांसकसम्मतिमाह तदुक्तमिति । न चेदिति । चेत् यदि अन्येन प्रमाणान्तरेण न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शिष्टा इति। शिष्टा उपदिष्टा इत्यर्थः। यथा सोमेन यजेतेति। अत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्। सोमवता यागेनेष्टं भावयेदिति। नचोभयविधाने वाक्यभेदः। विशिष्टस्यैकत्वात्। विशिष्टविधौ च मत्वर्थलक्षणा। यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति। नहि मत्वर्थलक्षणां विना सोमस्यान्वयः सम्भवति। यदि तावत्सोमयागयोरैकरूप्येण भावनायां करणत्वेनैवान्वयः सोमेन यागेनेष्टं भावयेदिति। तत उभयविधाने वाक्यभेदः। सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापातो यागार्थत्वानुपपत्तिश्च। यागे द्रव्या-

---

शिष्टा उपदिष्टास्तदा ते सर्व्वे एव एकविधिविधेया इति तात्पर्य्यम्। उभयोरप्राप्तत्वं दर्शयति यथेति। विशिष्टविधेः प्रकारं प्रतिपादयति सोमवतेति। ननु सोमयागयोर्द्वयोरेवाप्राप्तत्वात् द्वयोरेव विधेयत्वमतो विधेयभेदाद्वाक्यभेदापत्तिरित्यत आह नचेति। विशिष्टस्येति। सोमविशिष्टयागत्वेन एकस्यैव विधेयत्वादिति भावः।

ननु सोमविशिष्टत्वं केनाचरेण लभ्यते येन तद्विशिष्टयागस्यैकत्वं स्यादित्यत आह विशिष्टविधौ चेति। मत्वर्थलक्षणा वैशिष्ट्यलक्षणा। कस्मिन् पदे लक्षणेत्यत आह यथेति। मत्वर्थः सोमविशिष्टत्वम्। लक्षणाहेतुमनुपपत्तिं दर्शयति नहीति। अन्वयः सम्भवतीति। सोमत्वयागत्वयोः सामानाधिकरण्यासम्भवादिति भावः। यदि तु सोमयागयोर्द्वयोरेव भावनाया अन्वयः स्वीक्रियते तदा वाक्यभेदः स्यादित्याह यदि तावदिति। ऐकरूप्येण प्रधानभावेन। तथान्वयं दर्शयति सोमेन यागेनेति। उभयविधाने उभयोः करणत्वविधाने। वाक्यभेद इति। गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायेन द्वयोः करणत्वेन समत्वात् परस्परासम्बन्धात् करणभेदेन सोमेन भावयेत् यागेन भावयेदिति वाक्यभेदः स्यादित्यर्थः। दोषान्तरमाह सोमस्येति। यागवदिति। यथा यागस्य करणत्वेन फलभावनायां प्राधान्यं तथा यागनिरपेक्षसोमस्यापि प्राधान्यमापततीति भावः। तथात्वे सोमस्य यागोपकारकत्वमपि व्याहन्येतेत्याह यागार्थत्वेति। अनुपपत्त्यन्तरमाह याग इति। द्रव्येति। देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य द्रव्यविशेषसापेक्षतया द्रव्य-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नुपपत्तिश्च । प्रत्ययवाच्यभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षानिवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेऽन्वयानुपपत्तिश्च स्यात् ।

यदि च वैयधिकरण्येनान्वयः । तत्र न तावद्यागेन सोममित्यन्वयः । समानपदोपात्तत्वात् प्रत्ययवाच्यफलभावनाकरणत्वेनान्वितस्य यागस्य सोमकर्म्मभावनान्वयानुपपत्तेः । यागस्य सोमार्थत्वापत्तेश्च । न चेष्टापत्तिरदृष्टद्वयापत्तेः । न हि यागस्य

---

विशेषानुपादाने यागत्वमेव न सिध्यतीति भावः । अपरामनुपपत्तिमाह प्रत्ययेति । तथाच प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमात् प्रत्ययार्थभावनाया प्रकृत्यर्थयागेनान्वये करणाकाङ्क्षानिवृत्तेः पदान्तरोपात्तसोमेनान्वयो नोपपद्यत इति भावः ।

ननु वाक्यभेदापातान्मा भूत् सोमेन यागेनेति समानविभक्तिकतयान्वयसम्भवः । भिन्नविभक्तिकत्वेनान्वये को दोष इत्यवाह यदि चेति । वैयधिकरण्येन विभिन्नविभक्तिकतया । वैयधिकरण्येनान्वयस्य यागेन सोमं भावयेत् सोमेन यागं भावयेदिति द्विप्रकारकत्वसम्भवादादौ प्रथमं प्रकारं निराकरोति तत्रेति । वैयधिकरण्येनान्वये इत्यर्थः । यागेन सोममिति । भावयेदिति शेषः । एवञ्च श्रुतौ सोमेनेत्यस्य सोमोद्देशेनेत्यर्थः । तथा भावयेदित्यस्य उपकुर्य्यादित्यर्थः । इति वादिन आशयः । तथान्वये बाधकमाह समानेति । एकतिङन्तपदोपात्तत्वादित्यर्थः । प्रत्ययवाच्येति लिङ्वाच्येत्यर्थः । सोमकर्म्मेति सोमकर्म्मकेत्यर्थः । तथाच फलकर्म्मकभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्म्मकभावनायां नान्वयसम्भव इति भावः । ननु लिङा न फलभावनोच्यते किन्तु भावनामात्रम् । कथमन्यथा दध्ना जुहोतीत्यादौ दध्ना होमं भावयेदिति बोधः सम्भवेत् । तदत्र यागेन सोमं भावयेदिति बोधेऽपि न क्षतिरित्यत आह यागस्येति । तथाच यथा दध्ना जुहोतीत्यादौ दध्यादेर्होमोपकारकत्वं तथा यागस्यापि सोमोपकारकत्वापत्तिरित्यर्थः । अतेष्टापत्तिं निराकरोति नचेति । तत्र हेतुमाह अदृष्टद्वयेति । अदृष्टद्वयाङ्गीकारापत्तेरित्यर्थः ।

ननु यथा व्रीहीनवहन्यात् अवघातेन व्रीहीन् भावयेदुपकुर्य्यादित्यत्रावघातस्य वैतुष्यरूपफलद्वारेणोपकारकत्वं तथात्रापि दृष्टफलविशेषद्वारेणैव यागस्य सोमोपकारकत्वमस्तु न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सोमार्थत्वं दृष्टद्वारेण सम्भवति । व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद्दृष्टस्याजननात् । अतस्तेन तावत् सोमे किञ्चिददृष्टं जननीयं प्रोक्षणेनेव व्रीहिषु ।

तथा यागस्य सोमार्थत्वे भावभावनायां सोमस्य करणत्वेनान्वयो वक्तव्यः । भावनाकरणत्वञ्च भावनाभाव्यनिर्वर्त्तकत्वेनेत्युक्तम् । न च सोमो अदृष्टमन्तरेण फलं जनयितुं समर्थः । ग्रहैर्जुहोतीति वाक्यविहितहोमेन तस्य भस्मीभावात् । अतोऽदृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न यागेन सोमं भावयेदित्यन्वयः सम्भवति । करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च ।

---

त्वदृष्टद्वयमङ्गीकार्यमित्यत आह न हीति । दृष्टफलविशेषद्वारेण यागस्य सोमोपकारकत्वासम्भवमुपपादयति व्रीहिष्विति । यथा व्रीहीनवहन्तीति श्रुतिविहितेनावघातेन व्रीहिषु वैतुष्यरूपं दृष्टफलं जन्यते सोमेन यजेतेति श्रुतिविहितेन यागेन सोमे तथा किमपि दृष्टफलं न जन्यत इति भावः । अत इति । दृष्टफलाजननादित्यर्थः । तेन यागेन अदृष्टफलं संस्काररूपम् । दृष्टान्तमाह प्रोक्षणेनेति । व्रीहीन् प्रोक्षतीति श्रुतिविहितेन प्रोक्षणेन यथा व्रीहिषु संस्कार रूपमदृष्टफलं जन्यते तद्वदित्यर्थः ।

अदृष्टान्तरापातं दर्शयति तथेति । वक्तव्य इति । यागेन सोमोपकारस्य निष्फलत्वे तत्र पुरुषप्रवृत्त्यसम्भवात् यागेन सोमं भावयेत् तेन च सोमेन फलं भावयेदित्यन्वयोऽवश्याङ्गीकरणीय इति भावः । भावनायां सोमस्य करणत्वेनाङ्गीकारे कथमदृष्टापात इत्यतो भावनाकरणत्वाङ्गीकारे भावनाभाव्यस्वर्गादि निष्पादकत्वमङ्गीकरणीयमिति दर्शयति भावनाकरणत्वञ्चेति । ननु तथात्वेऽपि कथमदृष्टान्तरमापततीत्यत आह न चेति । ननु सोमः साक्षादेव स्वर्गं जनयत्वित्यत आह ग्रहैरिति । ग्रहा सोमसाधनसोमपात्राणि । जुहोति अग्नौ प्रक्षिपति । भस्मी भावादिति । सोमस्य ग्रहकरणकाग्निप्रक्षेपविधानात् भस्मीभूतस्य तस्य साक्षात् स्वर्गं जनकत्वं न सम्भवतीति भावः । तृतीयान्ततया करणत्वेनोपस्थितस्य सोमस्य लक्षणया कर्मत्वेनान्वयोऽपि न युक्त इत्याह करणत्वेनेति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ सोमेन यागं भावयेदित्यन्वयः। तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वात् यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः। नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः। करणत्वेनैवान्वयात्। तथाप्यप्राप्तत्वाद्भावना-करणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव।

ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः। तद्वाचकतृतीयाद्यभावात्। किन्तु भावनायां याग-सम्बन्धमात्रं प्रतीयते। यागस्य च भावनासम्बन्धः करणत्वेन साध्यत्वेन च सम्भवति। तत्र करणत्वांशमादाय फलसम्बन्धः। साध्यत्वांशमादाय गुणसम्बन्धस्स्यादिति चेन्नैवम्। यद्यपि भावनया

---

वैपरीत्येन वैयधिकरण्येनान्वयमाशङ्कते अथेति। तत्रादृष्टद्वयापातविरहं दर्शयति सोमस्य करणत्वेनेति। करणत्वेनोपस्थितस्य साध्यत्वेनान्वयदोषासत्त्वमपि दर्शयति नापीति। करणत्वेनो-पस्थितस्य सोमस्य कर्मत्वान्वयदोषविरहेऽपि करणत्वोपस्थितस्य यागस्य कर्मत्वेनान्वयदोषसद्-भावस्य एवेत्याह तथापीति। अप्राप्तत्वादिति। तथाच सोमेन यजेतेत्यत्र केवलायाः फल-भावनाया विधेयत्वासम्भवात् किञ्चित्करणिकाया एव तस्या विधेयत्वमवश्यमभ्युपेतव्यम्। तत्र यदि सोमकरणिकाया भावनाया विधेयत्वमङ्गीक्रियते तदा सोमस्य परिप्राप्ततया विधेयान्तर्नि-विष्टत्वानुपपत्तिः। यागकरणिकायास्तस्या विधेयत्वाङ्गीकारे तु अप्राप्तत्वात् यागस्यापि विधेया-न्तर्गतत्वसम्भवेन विशिष्टाया एव विधेयत्वं घटते। अतोऽप्राप्तत्वेन यागस्यैव फलभावनाकरणत्वे-नान्वितत्वं वाच्यमिति भावः।

आशङ्कते नन्विति। तद्वाचकेति। करणत्वकर्मत्ववाचकेत्यर्थः। तृतीयादीत्यादिपदात् द्वितीयापरिग्रहः। यागसम्बन्धमात्रमिति। एकपदश्रुत्या यागभावनयोः परस्परसम्बन्धमात्र-मित्यर्थः। करणत्वेन साध्यत्वेन चेति। यागेन भावयेत् यागं भावयेदित्यन्वयद्वयस्य विनिग-मनाविरहात् सम्भव इति भावः। फलसम्बन्धः यागेन स्वर्गं भावयेदित्येवंरूपः। गुणसम्बन्धः सोमेन यागं भावयेदित्येवंरूपः। आशङ्कां निराकरोति नैवमिति। विरोधात् ग्रामद्वयस्य यौग

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यागस्य सम्बन्धमात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः सम्भवति विरोधात्। तदवश्यं, यागेन स्वर्गं भावयेदिति करणत्वेनान्वये सति पश्चात्सोमेन यागं भावयेदिति साध्यत्वेनान्वयो वक्तव्यः। ततश्च वाक्यभेदः।

न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम्। कारकाणामेवक्रियान्वयात्। तत् सिद्धं, सोमस्य न यागे सामानाधिकरण्येन वैयधिकरण्येन वान्वयः सम्भवतीति।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथेतिकर्त्तव्यताकाङ्क्षायां सोमस्येतिकर्त्तव्यतात्वेन भावनायामेवान्वयोऽस्तु किं मत्वर्थलक्षणयेति चेन्मैवम्। सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्त्तव्यतात्वानभिधानात्।

---

पदासम्भवेन परस्परविरोधात्। अवश्यमिति वक्तव्य इत्यनेनान्वितम्। वाक्यभेद इति। यागेन स्वर्गं भावयेत् यागञ्च सोमेन भावयेदित्येवंरूप इत्यर्थः।

भावनायां यागस्य सम्बन्धमात्रं यादुक्तमङ्गीकृत्यापि सम्मतं निराकृतमिदानीं करणत्व कर्म्मत्वादुदासीनसम्बन्धमात्रमपि निराकरोति न चेति। यागस्वरूपमात्रमिति। मात्र भावपदेन करणत्वादिरूपं व्यावर्त्त्यते। कारकाणामेवेति। क्रियायाः कर्त्तृकरणादिरूपकारकसाकाङ्क्षत्वादिति भावः।

ननु भावनात्मिकायाः क्रियायाः कारकसाकाङ्क्षत्वेऽपि न तन्मात्रसाकाङ्क्षत्वम्। कथमितीतिकर्त्तव्यतासाकाङ्क्षत्वस्याप्यावश्यकत्वात्। एवञ्च यागः करणत्वेनान्वेतु, सोमस्तु कथमित्यपेक्षितेतिकर्त्तव्यत्वेनान्वयी भवतु। तथाच सोमेनेतिकर्त्तव्यतया यागेन करणेन स्वर्गं भावयेदित्यन्वयबोधः सुघटः। वाक्यभेदादिदोषास्पर्शादित्येवं शङ्कते नन्विति। आशङ्कां निराकरोतिमैवमिति। इतिकर्त्तव्यतात्वानभिधानादिति। कर्त्तृकरणयोस्तृतीयेति तृतीयायाः करणत्वार्थ एवानुशासनं नेतिकर्त्तव्यतार्थे इति भावः। नन्वत्र तृतीया इतिकर्त्तव्यतात्वार्थे लाक्षणिकीत्यवाह तचेति। तृतीयायामित्यर्थः। प्रकृतिभूत इति। प्रत्ययलक्षणापेक्षया प्रकृति लक्षणाया कथञ्चिदिष्टत्वमिति भावः। प्रकृतिलक्षणाया इष्टत्वे हेतुमाह गुणे त्विति। गुणीभूतपदार्थ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्र यदि इतिकर्त्तव्यतात्वं लक्षणयोच्यते ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा । गुणे त्वन्याय्यकल्पनेति न्यायात् । अथ वेदो वा प्रायदर्शनादित्यधिकरणोक्तसञ्जातविरोधित्वन्यायेनाख्ये प्रत्यय एव लक्षणेति चेत्तथापि सोमस्येतिकर्त्तव्यतात्वेनान्वयानुपपत्तिः । सिद्धस्य वस्तुन इतिकर्त्तव्यत्वाभावात् । क्रियाया एवेतिकर्त्तव्यतात्वात् । द्रव्यस्य

---

एव लक्षणादिरूपा अन्याय्यकल्पना न तु प्रधानपदार्थे इत्यर्थः । तथाच तृतीयान्तसोमपदेन सोमकरणकत्वप्रतीतौ तत्र सोमस्य गुणीभूतत्वमिति भावः । पुनराशङ्कते अथेति । वेदो वेति । उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषेति श्रुतौ किम् ऋगादिशब्देन तत्तल्लक्षणाक्रान्तत्वेन तत्तज्जातीयमन्त्रविशेष उच्यते । किंवा मन्त्रब्राह्मणसमुदायात्मकस्तत्तद्वेद इति संशये तृतीयाध्यायतृतीयपादे ।

श्रुतेर्जाताधिकारः स्यादिति

सूत्रेण ऋगादिजातिमधिकृत्यैव ऋगादिशब्दप्रयोगः स्यात् । तथाच यजुर्वेदस्थोऽपि ऋग्लक्षणाक्रान्तो मन्त्र उच्चैः पठितव्यः । कुतः श्रुतेः । एषाम् ऋगादिशब्दानां श्रवणादेव "तेषामृक् यत्रार्थवशेन पादव्यवस्थिति" रित्याद्युक्तलक्षणकतत्तज्जातीयमन्त्रप्रतीतेरिति पूर्व्वपक्षयित्वा ।

वेदो वा प्रायदर्शनादिति

सूत्रेण ऋगादिशब्देन तत्तद्वेद एवोच्यते । प्रायदर्शनात् उपक्रमवाक्ये वेदशब्दस्य बाहुल्येन प्रयोगदर्शनादिति सिद्धान्तितम् । उपक्रमवाक्यन्तु "प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत, तस्मात्तपस्तेपानात् त्रयो देवा असृज्यन्त, अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इति । एतदुपक्रम्यैव उच्चैर्ऋचा क्रियते इत्यादि वाक्यानामाम्नानम् । यद्यपि उपक्रमवाक्यानुरोधेन उपसंहारवाक्यस्थ· ऋगादिशब्दानामृगन्तवहुल· ऋग्वेदलक्षणावदुपसंहारवाक्यादुपक्रमवाक्यगत ऋग्वेदादिशब्दानां तदेकदेशमन्त्रलक्षणापि सुकरा । वरं विधिरूपत्वेन प्रवलादुपसंहारवाक्यादर्थवादत्वेन दुर्वलोपक्रमवाक्यस्थ·ऋग्वेदादिपदानां मन्त्रलक्षणैव श्रेयसी सम्भाव्यते । तथापि प्रथमोपस्थितार्थवादगतपदानामनुपजातविरोधित्वेन वाधकाद्देत्वभावादुपसंहारवाक्यस्थ ऋगादिशब्दानामेवोपक्रमवाक्यविरोधान्मुख्यार्थपरत्वानुपपत्तेस्तत्तद्वेदलक्षणैव समुचितेति सिद्धान्तः । तद्वदत्रापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

केवलमङ्गत्वात्। अतएवेतिकर्त्तव्यतात्वाभावात् द्रव्यस्य प्रकरणादग्रहणम्। यथाहुः।

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति।

तदेतदग्रे वक्ष्यामः। किञ्च सोमेन यजेतेति हि यागस्योत्पत्ति-

---

प्रथमोपस्थितत्वेन बलीयसः प्रातिपदिकसोमपदस्य स्वार्थप्रत्यायने विरोधाभावान्न सोमवति लक्षणा। पश्चादुपस्थितायास्तृतीयायास्तु मुख्यार्थस्य करणत्वस्याभिधाने यागस्य करणत्वोक्तिविरोधादितिकर्त्तव्यतालक्षणैवाश्रित्याशङ्कार्थः। आशङ्कां निरस्यति तथापीति। इति कर्त्तव्यत्वानुपपत्तौ हेतुमाह सिद्धस्येति। तर्हि कस्येतिकर्त्तव्यतात्वमुचित मित्यत आह क्रियाया एवेति। तदाह इतिशब्दः प्रकारार्थः। तेन कर्त्तव्यतायाः क्रियायाः प्रकार इतिकर्त्तव्यतेति योगात् क्रियाविशेषस्यैव क्रियाप्रकारत्वं सम्भवति। न द्रव्यस्य क्रियाप्रकारत्वसम्भवः इति भावः। तर्हि द्रव्यस्य कथं यागान्वय इत्यत आह द्रव्यस्येति। केवलमङ्गत्वात् इति कर्त्तव्यतेतराङ्गत्वात्। अतएव केवलाङ्गत्वादेव। प्रकरणादग्रहणमिति। प्रकरणं हि कथं कुर्य्यादित्याकाङ्क्षा। तत्र प्रकारवाचिना कथंशब्देनाभिलापादितिकर्त्तव्यताया एव ग्रहणं न तु तदितराङ्गानामिति भावः।

एतदेव प्रमापयति यथाहुरिति। नावान्तरेति। प्रकृताः प्रकरणीयाः क्रिया यागादयः वाक्योपकल्पितान् वाक्यबोधितादवान्तरक्रियायोगात् द्वारीभूतक्रियायोगादृते गुणद्रव्ये गुणं द्रव्यञ्च कथम्भावैर्यं गृह्णन्ति सम्बध्नन्ति। एतेन गुणद्रव्ययो र्यागसम्पादनाद्वारैव यागसम्बन्धत्वं न तु साक्षात्। तथा तयोर्वाक्यादेव ग्रहणं न प्रकरणादिति सिद्धम्। अग्रे प्रकरणविनियोग विचारप्रकरणे। वक्ष्यामः विशेषेण प्रतिपादयिष्यामः। ननु द्रव्येऽपीतिकर्त्तव्यतापदं क्वचित् क्वचित् प्रयुक्तम्। तच्च इति कर्त्तव्यतापदमङ्गपरमिति स्वयमेव वक्ष्यते। परन्त्वङ्गत्व लक्षणायां मानाभावात् तत्र तत्र मीमांसकप्रयुक्तमितिकर्त्तव्यतापद मुख्यैव वृत्त्याद्रव्यं बोधयेदिति द्रव्यस्यापीतिकर्त्तव्यतात्वं मीमांसासम्मतमेव ग्राह्यमित्यत आह किञ्चेति। उत्पत्तिवाक्यमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वाक्यं नाधिकारवाक्यम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याधिकारवाक्यत्वात् । उत्पत्तिवाक्ये च नेतिकर्त्तव्यताकाङ्क्षा । इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्त्तव्यताकाङ्क्षाया विस्पष्टानुत्थानात् । तस्मिंश्च, सोमस्य नेतिकर्त्तव्यतात्वेन भावनायामन्वयः । तस्माद्विशिष्टविधावन्वयानुपपत्त्या अवश्यं मत्वर्थलक्षणा वाच्येति ।

नन्वेवमपि सोमेन यजेतेत्यत्र न विशिष्टविधानं गौरवात् मत्वर्थलक्षणापाताच्च । किन्तु दध्ना जुहोतीतिवत् गुणमात्रविधानमस्तु विधिशक्तेर्गुणे संक्रमात् । यथाहुः ।

सर्व्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता ॥ इति ।

---

कर्मस्वरूपमात्रबोधकत्वादिति भावः । अधिकारवाक्यं फलसम्बन्धबोधकवाक्यम् । उत्पत्तिविधावितिकर्त्तव्यताकाङ्क्षाभावे हेतुमाह इष्टविशेषेति । कलुषितत्वेन व्याकुलत्वेन । तथाच किं भावयेदित्याकाङ्क्षाया अपर्य्यवसानेन भाव्यानन्वयात् भाव्याकाङ्क्षाव्याकुलीभूताया भावनाया नाकाङ्क्षान्तरावकाश इति भावः । अन्वयानुपपत्त्या सामानाधिकरण्येन वैयधिकरण्येन चान्वयानुपपत्त्या ।

सोमपदं मत्वर्थलक्षणापरिहाराय गुणविधित्वं शङ्कते नन्विति । एवमपि, विशिष्टविधिपक्षे सामानाधिकरण्यवैयधिकरण्याभ्यां यागकरणकभावनायां सोमस्यान्वयासम्भवेऽपि । गुणमात्रविधायं प्रमाणान्तरप्राप्तयागांशविधानासम्भवात् तत्र सोमरूपगुणमात्रविधानम् । विधिशक्तेर्विधायकत्वस्य । गुणे संक्रमात् गुणमात्रविषये समाकर्षात् । उक्तार्थे प्रमाणतया भट्टकारिकामुपन्यस्यति यथाहुरिति । सर्व्वत्रेति । आख्यातसम्बद्धे आख्यातान्विते पदान्तरे प्रधानविध्युपात्तयागादिबोधकपदेतरयागादिबोधकपदे श्रूयमाणे धातोः श्रूयमाणपदान्तर घटकधातोरनुवादता प्रधानविधिप्राप्तार्थप्रापकतया अवधारितार्थवादत्वम् । तदर्थस्य न विधेयत्वमिति भावः । यदि धात्वर्थस्य न विधेयत्वं तर्हि आख्यातस्य लिङादेः किमंशे विधायकत्वमिति जिज्ञासानिवर्त्तकं निरुक्तार्थे हेतुमाह विधिशक्त्युपसंक्रान्तेरिति । विधिशब्दो विधायकत्वस्य उपसंक्रान्तेरन्यत्र सम्बन्धात् । तथाच परिप्राप्ततया धात्वर्थांशे न विधानं किन्त्वप्राप्तत्वेन गुणांश एवेति भावः । यथा दध्ना

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन यागस्य प्राप्तत्वात्। न चास्याधिकारविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम्। उद्भिदा यजेत पशुकाम इति वदेकस्यैवोभयविधित्वोपपत्तेः। एवञ्च सोमेन यजेतेत्यत्र न मत्वर्थलक्षणा स्यात्। यदि ह्यत्र विशिष्टविधित्वं स्यात्तदान्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र तु क्वचिन्न मत्वर्थलक्षणा। न तावदेतस्मिन् वाक्ये, ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति सामानाधिकरण्येनैव नामपदान्वयात्। नापि सोमेन यजेतेत्यत्र, यागोद्देशेन सोमविधानात् सोमेन यागं भावयेदिति। नन्वनुवादेऽप्यस्ति मत्वर्थलक्षणा। अतएवोक्तम्।

जुहोतीत्यस्य जुहोतिधात्वर्थांशे न विधायकत्वम्, अग्निहोत्रं जुहुयात् स्वर्गकाम इति प्रधान विधिनैव तद्विधानात्। अतो जुहोतेर्गृहीतग्राहितया अनुवादत्वमेव। दध्नः करणताया अप्राप्ततया तदंश एव विधायकत्वमिति।

दध्ना जुहोतीत्यादौ यथा होमस्य विध्यन्तरप्राप्तत्वं, सोमेन यजेतेत्यत्र तु यागस्य तथा प्राप्तत्वं न घटते, येन तदनुवादेन गुणमात्रविधानं सम्भवेत्। प्रधानविध्यन्तराभावादिति शङ्कां निराकरोति न चेति। ज्योतिष्टोमविधेरेव प्रधानविधित्वं निराकरणे हेतुमुपदर्शयति ज्योतिष्टोमेनेति। अधिकारविधित्वेन फलसम्बन्धबोधकविधित्वेन। उभयविधित्वेति। उत्पत्त्यधिकारविधित्वेत्यर्थः। एवञ्चेति। सोमवाक्यस्य परिप्राप्तयागानुवादेन सोमकरणतामात्रविधायकत्वे सतीत्यर्थः। विशिष्टविधित्वपक्ष एव खल्वयमसम्भव इत्याह यदि हीति। ननु ज्योतिष्टोमवाक्यस्य यागविधित्वाङ्गीकारे मत्वर्थलक्षणापत्तिरित्यत आह ज्योतिष्टोमेनेति। क्वचिदिति। सोम वाक्ये ज्योतिष्टोमवाक्ये चेत्यर्थः। तत्र ज्योतिष्टोमवाक्ये मत्वर्थलक्षणाभावं दर्शयति न तावदिति। अस्मिन् वाक्ये ज्योतिष्टोमवाक्ये। तत्र हेतुमाह ज्योतिष्टोमेनेति। सोमवाक्येऽपि नेति दर्शयति नापीति। तत्र हेतुमाह यागोद्देशेनेति। अतएव गुणविधावपि मत्वर्थलक्षणाप्रसङ्गादेव। उक्तं भट्टपादैरतिशेषः।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधाने वानुवादे वा यागः करणमिष्यते।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥ इति।

अतश्च विशिष्टविधाविव गुणविधावप्यस्ति मत्वर्थलक्षणेति चेन्मैवम्। गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाङ्गीक्रियते। यदा च भावनायां धात्वर्थस्य करणत्वेनान्वयस्तदान्वयानुपपत्त्या साङ्गी-कर्त्तव्या। गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयः माना-भावात्। न हि दध्ना जुहोतीत्यत्र होमस्य करणत्वं श्रूयते तद्वाचकतृतीयाद्यभावात्। कल्प्यत इति चेन्न, गुणस्य तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात्,

---

विधान इति। विधाने प्रधानविधौ अनुवादे अङ्गविधौ वा। यागो भावनायां करणमिष्यते। याग इति कर्म्ममात्रोपलक्षणम्। करणत्वे हेतुमाह तत्समीप इति। यतस्तत्समीपे भावनावाचकलिङ्पदसन्निधौ तृतीयान्त स्तृतीयान्ततयान्वययोग्यो यागशब्द-स्तद्वाचित्वं करणताबोधकत्वं न मुञ्चति त्यजति। तृतीयान्तपदस्य करणतावाचकत्वावश्य-म्भावादित्यर्थः। अतश्चेति। गुणविधावपि यागस्य भावनायां करणत्वेनान्वयात् मत्वर्थ-लक्षणामन्तरेण गुणस्य तदन्वयानुपपत्तेश्चेत्यर्थः। आपत्तिं निराकरोति पूर्व्वपक्षी मैवमिति। यदि धात्वर्थस्य भावनायां करणत्वेनान्वयोऽभ्युपगम्यते तदैव गुणस्य तत्रान्वयानुपपत्त्या मत्वर्थ-लक्षणाङ्गीकार्य्या। गुणविधौ धात्वर्थस्य करणत्वेनान्वय एवासिद्धः प्रमाणाभावात्। तत्कथं मत्वर्थलक्षणेत्याह गुणान्वयानुपपत्त्येति। प्रमाणाभावमुपपादयति न हीति। श्रूयत इति। एतेन करणत्वं न श्रुत्यावगम्यत इति दर्शितम्। यजेतेत्यादौ सर्व्वत्रैव तृतीयाद्यभावेऽपि, यथा भावनायाः केनेति करणाकाङ्क्षत्वानुपपत्त्या अर्थापत्तिप्रमाणेन यागस्य करणत्वं कल्प्यते तथात्रापीति शङ्कते कल्प्यत इति। तत्र गुणविधौ। विधित्सितत्वेन विधातु-मिष्टत्वेन। साध्याकाङ्क्षायां, किं भावयेदिति भाव्याकाङ्क्षायाम्। साध्यत्वकल्पनाया, धात्वर्थस्य भाव्यत्वकल्पनायाः। उचितत्वादिति। तथाच गुणविधौ विधित्सितगुणस्यैव करणत्वेनान्वयेन, केनेति करणाकाङ्क्षानिवृत्तेः कथमित्याकाङ्क्षायाः संस्कारादीतिकर्त्तव्यताभि-निर्वर्त्तनीयत्वादवशिष्टया किमित्याकाङ्क्षया धात्वर्थस्यैव [illegible] [illegible]मपि करण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दध्ना होमं भावयेदिति। न चायमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवान्वयो न प्रकारान्तरेणेति। षष्ठाद्यपूर्व्व-पक्षानुत्थानापत्तेः।

षष्ठाद्ये हि यजेत स्वर्गकाम इत्यादौ प्रत्ययवाच्यायां वक्ष्य-माणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्य अपुरुषार्थत्वेन परिहृतम्। यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधि-करणमापद्येत।

---

काङ्क्षामुज्जीव्य धात्वर्थस्यापि करणत्वेनान्वयोऽभ्युपगन्तव्य इति भावः। गुणस्य करणत्वान्वयं धात्वर्थस्य साध्यत्वान्वयञ्च व्याञ्जयति दध्नेत्यादि। ननु सर्व्वत्रैव धात्वर्थस्य करणत्वेनान्वयनिय-मात् कथं गुणविधौ तस्य भाव्यत्वेनान्वयः सम्भवतीत्यापत्तिं परिहरति न चेति। नियमे व्यभिचारं प्रतिपादयति षष्ठाद्येति।, षष्ठाध्यायप्रथमपादप्रथमाधिकरणेत्यर्थः।

पूर्व्वपक्षानुत्थानं व्यञ्जयति षष्ठाद्ये हीति। भाव्यत्वमाशङ्क्येति। तथाच शास्त्र-दीपिकायां पूर्व्वपक्षकारिका—धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते।

स्वर्गादिः खलु वाक्येन श्रुतेर्वाक्यञ्च दुर्बलम्॥

अपुरुषार्थत्वेनेति पुरुषस्येष्टत्वाभावेनेत्यर्थः। कष्टं कर्म्मेति न्यायात् कर्म्ममात्रस्य द्विष्टत्वम् यावत् समधिकसुखविशेषजनकत्वं नावगम्येत। अतः प्रधानविधौ स्वारसिकेच्छाविषय स्वर्गादेरेव भाव्यत्वमुचितं, येन कर्म्मणस्तत्साधनतावगमादनन्तरं कर्म्मण्यपि पुरुषेच्छा जायते। तथाच शास्त्रदीपिकायां सिद्धान्तकारिका—

स्वर्गादिः कामनायोगात् फलत्वेनैव गम्यते।

स्वारस्यात् पुरुषाणां हि कामना फलगोचरा॥

एवञ्च यद्येकान्तत एव धात्वर्थस्य भाव्यत्वेनान्वयोऽसम्भवी, तदा असम्भवदन्वयाङ्गीकारेण पूर्व्वपक्षासम्भवात्तदधिकरणस्य निरर्थकत्वापत्तिरित्याह यदि चेति। तथाच धात्वर्थस्य भाव्यत्वेनान्वयसम्भवेऽपि प्रधानविधौ पुरुषेच्छाविषयत्वासम्भवेन भाव्यत्वानङ्गीकारः समुचित एव। परन्तु प्रधानविधिना धात्वर्थस्य इष्टविशेषसाधनत्वे प्रतिपादिते अङ्गविधिजन्यबोधवेलायां तत्र धात्वर्थस्य पुरुषेच्छाविषयत्वसम्भवात् भाव्यत्वं सुघटमेवेति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च वाजपेयाधिकरणे तन्त्रसम्बन्ध आशङ्क्य परिहृतः। धात्वर्थस्य करणत्वेनैवान्वये तन्त्रसम्बन्धशङ्कैव न स्यात्। तत्र तन्त्रसम्बन्धशङ्कापरिहारौ च व्याख्यातौ।

किञ्च न धात्वर्थस्य करणत्वेनैवान्वयः। गुणकामाधिकरणे

---

अन्यत्रापि यागस्य भाव्यत्वाशङ्का कृतेत्युपदर्शयति किञ्चेति। वाजपेयाधिकरण-इति। प्रथमाध्यायचतुर्थपादे वाजपेयेन स्वाराज्यकामो यजेतेति विधेः किं गुण-विधित्वं कर्मनामधेयत्वं वेति संशये पूर्व्वपक्षः। यजेतेत्याख्यातपदं फलगुणाभ्यां तन्त्रेणान्वेतु कर्म्मतया फलेन, करणतया च वाजपेयगुणेऽन्वयात् न मत्वर्थे लक्षणा नापि वाक्यभेदः। आवृत्त्यन्वय एव वाक्यभेदप्रसक्तेः। भिद्यते चेद्वाक्यं भिद्यताम्। यागेन स्वाराज्यं भावयेत् यागञ्च वाजपेयाख्यगुणेनेति। न चैकेनाख्यातेन यागस्य कर्म्मत्वकरणत्वे युगपत् प्रतिपादयितुं न शक्यते इति वाच्यम्। आख्यातेन सम्बन्धमात्रप्रतिपादनात्। तस्य च साधारणत्वादिति। तथाच शास्त्रदीपिकायां पूर्व्वपक्षकारिका—

सर्व्वेष्वाख्यातशब्देषु तन्त्रसम्बन्धसम्भवात्।
मत्वर्थलक्षणादोषो नास्तीत्याचिख्यतेऽधुना॥
कर्म्मत्वं करणत्वं वा नाख्यातेनाभिधीयते।
यागादेः किन्तु सम्बन्धमात्रं साधारणञ्च तत्॥ इति।

अत्रैव सिद्धान्तकारिका—सम्बन्धमात्रतात्पर्य्ये नैकस्याप्यन्वयी भवेत्।
तद्विशेषपरत्वे तु स्यादन्यतरसङ्गतिः।
रूपद्वयपरत्वन्तु विनावृत्त्या न लभ्यते।
तस्मान्नाख्यातशब्दस्य तन्त्रसम्बन्धसम्भवः॥ इति।

यद्याख्यातात् सम्बन्धमात्रं धात्वर्थभावनयोरवगतं, तदा नैकस्यापि फलगुणयोः सदन्वयः स्यात्। फलस्य साधनापेक्षत्वात् यागकारणिकैव भावना फलसम्बन्धमर्हति। तथा गुणस्य साध्यापेक्ष-त्वात् यागकर्म्मिकयैव भावनया सम्बन्धः। अनिर्द्धारितोभयरूपता तु नैकेनाप्यन्वीयते अयो-ग्यत्वात्। तदावश्यं विशेषपरता अभ्युपगन्तव्या। तस्मात् वाजपेयं सुरा द्रव्यमस्मिन्निति सुरायद्रविधानात् तत्प्रख्यतया नामधेयत्वमिति सिद्धान्तः।

धात्वर्थस्य करणत्वेन भावनायामन्वयनियमस्तावदास्तां, पदार्थान्तरेण सम्बन्धान्तर मप्यङ्गीकर्त्तव्यमित्याह किञ्चेति। गुणकामाधिकरणे द्वितीयाध्यायद्वितीयपाद-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात् । तथाहि दध्नेन्द्रियकामस्य जुहुयादित्यत्र न तावद्धोमो विधीयते । तस्य वचनान्तरेण विहितत्वात् । नापि होमस्य फलसम्बन्धः । गुणपदानर्थक्यापत्तेः । नापि गुणसम्बन्धं विधत्ते । फलसम्बन्धपदानर्थक्यापातात् । नाप्युभयसम्बन्धं विधत्ते । प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः । यथाहुः ।

प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

---

वर्त्तिनि दध्यादिद्रव्यसफलत्वाधिकरणे । आश्रयत्वेन दधिनिष्ठकरणत्वस्य आश्रयत्वेन । अतएव शास्त्रदीपिकायां तदधिकरणे दधिहोमसम्बन्धयं आश्रयाश्रयिभाव इत्युक्तम् । भाष्यकारैरप्युक्तम् । दध्नो होमेन सम्बध्यमानत्वात् फलं भविष्यतीति । एवञ्च दध्नेन्द्रियकामस्येत्यस्य होमाश्रितेन दध्नः करणत्वेन इन्द्रियं भावयेदिति वाक्यार्थः । तथाच, तत्र धात्वर्थस्य करणत्वेन कर्म्मत्वेन वा भावनायां नान्वयः । तत्र दध्नः करणत्वेन, इन्द्रियस्य च कर्म्मत्वेनान्वयात् । धात्वर्थस्य तु दधिकरणत्वस्य आश्रयत्वेनेति धात्वर्थस्य भावनान्वय एव नास्तीति क्व तावत् करणत्वेनान्वयनियम इति भावः । आश्रयत्वेनान्वयं व्यञ्जयति तथाहीति । वचनान्तरेण अग्निहोत्रं जुहुयात् स्वर्गकाम इति प्रधानविधिना । होमस्य प्रधानविधिप्राप्तहोमस्य । गुणपदेति । दधिपदेत्यर्थः । गुणसम्बन्धः केवलद्रव्यसम्बन्धः । अनेकविधाने होमस्य दधिगुणकत्वमिन्द्रियफलकत्वञ्चेति धर्म्मद्वयविधाने । वाक्यभेदापत्तेः परिप्राप्तं होमं दध्ना भावयेत् परिप्राप्तहोमेनेन्द्रियं भावयेदिति वाक्यद्वयापत्तेः । अत्र सिद्धान्तसम्मतिमाह यथाहुरिति । वार्त्तिककारा इति शेषः ।

प्राप्ते प्रमाणान्तरविहिते । अनेक एकाधिकः । अप्राप्ते विध्यन्तराप्राप्ते स्ववाक्यमात्रप्राप्ये इति यावत् । एकयत्नतः एकेन :वाक्येन । उभयत्रान्वितमेतत् । एतेन वाक्यभेदेनानेकोऽपि गुणो विधातुं शक्यः इति सिध्यति । ननु प्रकृते गुणद्वयविधानं न सम्भवति दध्न एव गुणत्वात् इन्द्रियस्य गुणत्वाभावात् । तत्कथमनेकगुणविधानमापादयसीत्यत आह अत्रेति । कर्म्मपदवदिति । यथा कर्म्मपदं प्राप्तपदार्थमात्रोपलक्षणं तथा गुणपदञ्च विधेयपदार्थमात्रोपलक्षणमित्यर्थः । अतएव सामान्येनाह एकोद्देशेनेति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत्र च कर्म्मपदवत् गुणेत्युपलक्षणम्। एकोद्देशेनानेकविधाने वाक्यभेदात्।

अतएव ग्रहैकत्वाधिकरणे ग्रहं सम्मार्ष्टीत्यत्र ग्रहोद्देशेन एकत्वसम्मार्गविधौ वाक्यभेदात् ग्रहैकत्वमविवक्षितमित्युक्तम्।

रैवत्यधिकरणे च एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम-साम कृत्वा पशुकामो ह्येतेन यजेतेत्यत्र वारवन्तीयस्य रेवती-

---

उपलक्षणत्वस्य सिद्धान्तसम्मतत्वं प्रतिपादयति अतएवेति। ग्रहैकत्वाधिकरणे तृतीयाध्यायप्रथमपादस्य सर्व्वेषां ग्रहाणां सम्मार्गाद्यधिकरणे। ग्रहोद्देशेनेति। क्रियान्तरं विधातुं सिद्धस्य निर्द्देश्यत्वमुद्देश्यत्वमिति लक्षणात् ग्रहस्य सोमयागे प्राप्ततया उद्देश्यत्वं सिद्धम्। एवञ्च प्राप्ते कर्म्मणीत्यत्र कर्म्मपदमुपलक्षणमित्यङ्गीकार्य्यम्। प्राप्तग्रहांशेऽपि धर्म्मद्वयविधानापादनादिति सिद्धम्। एकत्वसम्मार्गेति। एतेन गुणपदस्याप्युपलक्षणत्वं साधितम्। एकत्वस्य गुणत्वाभावेऽपि तस्य विधेयत्वापत्त्या वाक्यभेदस्यापादितत्वात्।

अन्यत्रापि दर्शयति रैवत्यधिकरणे चेति। द्वितीयाध्यायद्वितीयपादगते वारवन्तीयादीनां कर्म्मान्तरताधिकरणे। एतस्यैवेति। अत्रायं विस्तरः। त्रिवृदग्निष्टुदग्निष्टोम इत्यादिवाक्यविहिताग्निष्टुदाख्ययागसन्निधौ श्रूयते। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। अग्निष्टोमस्य प्रकृतिभूतस्य विकृतिरूपः कश्चिदेकाहसाध्यो यागविशेषोऽग्निष्टुन्नामकः। स त्रिवृत्स्तोमयुक्ततया त्रिवृदित्युच्यते। अग्निष्टोमसमापनमन्त्रसमाप्यत्वादग्निष्टोम इत्युच्यते च। रैवत्यो नाम ऋचः। वारवन्तीयं सामविशेषः। स चाग्निष्टोमे गीयत इत्यग्निष्टोमसामेत्युक्तम्। रेवतीषु ऋक्षु मध्ये वारवन्तीयं नामाग्निष्टोमसाम गीत्वा पशुकाम एतेन यजेतेत्यर्थः।

अत्र संशयः। किमयं दध्नेन्द्रियकामस्येतिवत् अग्निष्टुतौ गुणफलविधिः। अग्निष्टुति रेवतीसंज्ञकऋग्गणमध्ये पशुकामेन वारवन्तीयं साम गातव्यमिति। अथवैतत् कर्म्मान्तरं पशुकामो रेवतीषु वारवन्तीयं साम गीत्वा यजेतेति। अत्र सन्निधिबलात् एतस्यैवेत्येतच्छब्दाच्च अग्निष्टुद्गुणफलविधिरिति पूर्व्वपक्षे सिद्धान्तः। यद्यग्निष्टुति रेवतीनामृचां प्राप्तिः स्यात्तदा परिप्राप्तासु रेवतीषु वारवन्तीयसामसम्बन्धात् पशुरूपफलमिति गुणफलविधिः सम्भवेत् वाक्यभेदाभावात्। परन्तु अग्निष्टुति रेवतीसम्बन्ध एव न प्राप्यते। एवञ्च अग्निष्टुति रेवतीसम्बन्धस्य च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रैवतीषु वारवन्तीयसम्बन्धसत्त्वाच्च फलमिति विधातव्यम् । तदा वाक्यभेदापत्तिरतः कर्मान्तर-विधिरेव पशुकामो रैवतीषु वारवन्तीयं साम गीत्वा यजेतेति । तथाच भाष्यकारैः, न ह्येतस्य रैवत्यः सन्ति यासु वारवन्तीयं भवेत् । तत्र रैवत्यो भवन्ति तासु च वारवन्तीयं विधीयते इति वाक्यं भिद्येतेत्युक्तम् । ननु रैवत्याख्यऋग्गणान्तर्गीयमानवारवन्तीयसामकरणत्वेन यागाश्रितेन पशुं भावयेदिति विधानान्न वाक्यभेदसम्भवः । होमाश्रितेन दधिकरणत्वेनेन्द्रियं भावयेदिति-वत् । यदि तु तथाविधसामकरणत्वस्याप्राप्ततया विधेयत्वात् विधेयभेदेन वाक्यभेद आवश्यक उच्यते, तदा दध्नोऽपि होमकरणत्वस्याप्राप्तत्वेन विधेयत्वसम्भवात् तत्रापि वाक्यभेदो दुर्वार इति चेन्न । दध्न इव साम्नो यागकरणत्वस्यासम्भवात् । तथाहि साम्नो न यागाश्रितत्वं किन्तु तदङ्गभूतस्तोत्रसम्बद्धत्वम् । अङ्गद्वारेण सत्यप्युपकारकत्वे आश्रया-श्रयित्वं न सम्भवतीति दृष्टान्तवैषम्यम् । देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य द्रव्यदेवता-घटिततया दृष्टान्ते द्रव्यस्य दध्नः करणत्वस्य होमाश्रितत्वं सम्भवति ।

यदि तु परम्परया साम्नो मन्त्रस्य यागोपकारकत्वेन यागसाधनत्वं मन्यते तत्रोच्यते । होमस्य द्रव्यदेवतासाधनकतया यस्य कस्यचिद्द्रव्यस्य होमकरणताया आवश्यकत्वात् दध्नोऽपि करणतायाः शास्त्रमन्तरेणापि लोकादेव प्राप्ते दृष्टान्ते फलमात्रं विधेयम् । अतः पदार्थद्वयविधानाभावादेकमेव वाक्यम् । न च तर्हि दध्ना जुहोतीत्यत्रापि दध्नः प्राप्तत्वेनाविधेयत्वात् होमस्य च तथात्वाद्वाक्यस्यानुवादत्वापत्तिस्तस्य गुणविधित्वसिद्धान्तभङ्गश्च स्यादिति वाच्यम् । दध्नः प्राप्तत्वेऽपि आवश्यकत्वेनाप्राप्तत्वेनावश्यकाङ्गत्वेन विधानाद्विधेय-त्वोपपत्तेर्वाक्यस्य गुणविधित्वोपपत्तेश्च । दध्नेन्द्रियकामस्येत्यत्र तु दध्नो नावश्यकाङ्गत्वेन विधानम् । येन द्रव्यान्तरमपहाय दध्ना हूयते । येन हूयते तस्येन्द्रियं स्यादिति पाक्षिक-भावेनैव विधानात् । अतो न तस्य विधेयत्वम् । प्रकृते तु रैवतीमध्यपठ्यमानवारवन्तीय-साम्नः यागसाधनतायाः शास्त्रमन्तरेणाप्राप्यतया विधेयत्वावश्यम्भावेन गुणफलोभयविधाना-द्वाक्यभेदो भवत्येव । तथाच न्यायमालायाम्—

"दध्नो होमजनकत्वं न शास्त्रेण बोधनीयं तस्य लोकतोऽवगन्तुं शक्यत्वात् । फलसम्बन्ध एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः । इह तु रैवत्यृगाधारवारवन्तीयसाम्नो ऽग्निष्टुत्कर्मसाधनत्वं पशुजनकत्वं चेत्युभयस्य शास्त्रगम्यत्वाद्दुर्वारो वाक्यभेद" इत्युक्तम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सम्बन्धे अग्निष्टोमसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदा-पत्त्यापत्त्यापत्तेः — 

---

नन्वेवम् अग्निष्टुत्सन्निधौ एतस्यैव रेवतीषु वारवन्तीयं सामेति श्रुतौ प्रकृतान्तवाचिना एतच्छब्देन अग्निष्टुत्परामर्शविरोध इति चेन्न। अथैष वायुरित्यादिवदेतच्छब्दस्य प्रशस्यमान-विधेयकर्मपरत्वात्। तस्माद्यागान्तरमेव, न त्वग्निष्टुतौ गुणविधिरिति सिद्धम्।

रेवतीसम्बन्धे इत्यादि। यद्यपि रेवत्यृगाधारवारवन्तीयस्य अग्निष्टुत्सम्बन्धः फलसम्बन्धश्चेति विधेयद्वयापादनमेव समुचितं प्रतिभाति तथापि रेवतीषु ऋक्षु वारवन्तीयसाम्नोऽनाम्नानात् तत्र तत्सम्बन्धस्याप्रसिद्धतया पुरुषप्रयत्नसाध्यत्वात् तस्यापि कर्त्तव्यत्वेन विधानावश्यम्भावात् सम्बन्धत्रयस्यैव विधेयत्वमापादितम्। अग्निष्टोमसम्बन्धे अग्निष्टुत्सम्बन्धे। अग्निष्टुतोऽपि गौण्याग्नि-ष्टोमत्वाङ्गीकारात्। वाक्यभेदात् अग्निष्टुति रेवतीर्ऋचः पठेत् तासु च वारवन्तीयमग्निष्टोम-साम गायेत् तेन च पशुं भावयेदित्येवंरूपात्। भावनोपसर्ज्जनं गुणभावेन भावनाया-मन्वितम्। भावनान्तरम् अग्निष्टुदितरप्रधानीभूतयागान्तरकरणिका भावना। विधीयत इति। तथाच पशुकामो रेवतीषु वारवन्तीयं ज्योतिष्टोमसाम कृत्वा एतेन यजेतेति कर्म्मान्तरविषयकप्रधानविधौ कृत्वेति करोतिना भावनावगमात् आख्यातेन च भावना-प्रतीते रेवतीषु वारवन्तीयसामभावनाप्रयुक्तेन यागविशेषेण पशुं भावयेदिति बोधः। तस्मात् क्वचिदेकत्वादिसंख्याविधाने क्वचिच्च मन्त्रादिसम्बन्धविधाने च वाक्यभेदापादकेन प्राप्ते कर्म्मण्यत्र गुणपदस्योपलक्षणत्वावश्यकत्वात् उभयविधानं दधिद्रव्यस्य इन्द्रियफलस्य चेत्येतयोर्द्वयोः पदार्थयोर्विधानम्।

ननु रेवतीषु वारवन्तीयं कृत्वा यजेतेत्यत्रेव दध्नेन्द्रियकामस्य जुहुयादित्यत्रापि वाक्यभेद-भयात् प्रधानकर्म्मान्तरविधानमस्त्वित्यत आह नापीति। गौरवात् प्रधानविध्यन्तरकल्पना-गौरवात् कर्म्मान्तरकल्पनागौरवाच्च। प्रकृतहानेति। अग्निहोत्रहोमप्रकरणीयत्वेऽपि तद्धानिः। कस्यापि अप्रकृतस्य यागान्तरस्य कल्पना। तयोः प्रसङ्गादित्यर्थः। मत्वर्थलक्षणेति। दधि-होमयोः सामानाधिकरण्येनान्वयाय दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणाप्रसङ्गा-दित्यर्थः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नापि दध्येव केवलं करणत्वेन विधीयत इति युक्तम्। केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः। कर्तृव्यापारव्याप्यत्वनियमात् करणत्वस्य। किं तर्हि विधीयत इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वम्। फलभावनायां करणत्वेन विधीयते। प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात्। एवञ्च दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः। करणत्वञ्च किं-

---

विधीयते प्रतिपाद्यते। केवलस्य दध्नः करणत्वेन विधानस्यायुक्तत्वे हेतुमाह केवलस्येत्यादि। व्यापारानाविष्टस्य कर्तृव्यापाररहितस्य। व्यापारानाविष्टस्य करणत्वानुपपत्तौ हेतुमाह कर्तृव्यापारेति। कर्त्रधीनव्यापाराभाववद्वृत्तित्वनियमा दित्यर्थः। अयमाशयः। करणत्वं व्यापारवत्कारणत्वम्। व्यापारद्वारेण क्रियाजन्यफलनिर्वर्त्तकत्वमिति यावत्। तत्र गृहस्थितस्य कुठारादेश्छेदनक्रियाजन्यकाष्ठाद्यवयवविभागरूपफलनिष्पादकत्वाभावदर्शनात् कर्त्र-धीनव्यापारमन्तरेण न सम्भवति। सम्भवति तु तथाविधव्यापारसम्बन्धादेव। तत्र च कर्तु रुद्यमननिपातनक्रियाजन्यकाष्ठकुठारसंयोगो व्यापारः। इह तु अलौकिके इन्द्रियजनने दध्नो द्रव्यस्य गृहस्थितकुठारस्येव करणत्वं न सम्भवत्येव। यद्यपि कुठारेण काष्ठं छिनत्तीति लौकिकवाक्ये करणत्वाभिधानादेव कुठारकाष्ठसंयोगरूपो व्यापारः प्रतीयते तथापि दध्नेन्द्रियं भावयेदित्यलौकिकवाक्ये दध्नः करणत्वाभिधानेऽपि अलौकिकेन्द्रियजनने दध्नो व्यापारस्य प्रत्यक्षादिप्रमाणागोचरतया करणताबुद्धिर्दुर्घटा। वह्निना सिञ्चतीतिवदप्रामाण्यमेवा-पद्येत वाक्यस्येति।

तस्मात् यस्य करणत्वमभिमतं तद्दर्शयितुमाह किं तर्हीति। दधिकरणत्वं दधिनिष्ठं करणत्वम्। फलभावनायामिन्द्रियभावनायाम्। ननु प्रातिपदिकार्थस्य दध्नःकरणत्वमुपेक्ष्य-. तृतीयार्थकरणत्वस्य करणत्वाङ्गीकारे किं बीजमित्यत्राह प्रत्ययार्थत्वेनेति। दध्नोऽपीति। प्रातिपदिकार्थदध्यपेक्षयेत्यर्थः। प्राधान्यादिति। दध्नेति पदेन दधिनिष्ठकरणत्वप्रतीतौ दध्नो विशेषणतया करणत्वस्य तु विशेष्यतया भानादिति भावः। दधिकरणत्वस्य करणत्वविधाने वाक्यार्थं दर्शयति एवञ्चेति। ननु यदि फलभावनायां दधि न करणं किन्तु तत्करणत्वमेव करणं तर्हि तत्करणत्वं किं सम्बन्धि? करणत्वस्य ससम्बन्धिकतया सम्बन्धिविशेषाकाङ्क्ष त्वादित्याह करणत्वञ्चेति। किंप्रतियोगिकं किंसम्बन्धि। सन्निधिप्राप्तः जुहुयादित्यनेन सान्निध्या-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन सम्ब-ध्यते। ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः।

प्रकृतमनुसरामः। तत्सिद्धं धात्वर्थस्य न करणत्वेनैवान्वय इति। किं तर्हि क्वचित् करणत्वेन क्वचित् साध्यत्वेन क्वचिदा-श्रयत्वेनेति। गुणविधौ च साध्यत्वेनैवान्वयः सम्भवतीति न मत्वर्थलक्षणया प्रयोजनम्। किञ्च गुणविधौ मत्वर्थलक्षणायां

---

दुपस्थितः। आश्रयत्वेन करणभावास्पदत्वेन। यत्सिन्नाश्रये तस्य करणत्वं तत्त्वेनेति यावत्। तथाच होमाश्रितं यत् दधिनिष्ठकरणत्वं तेनेन्द्रियं भावयेदिति पर्य्यवसितोऽर्थः।

ननु यागेऽपि कथं दध्नः करणत्वसम्भवः। व्यापारमन्तरेण करणत्वासम्भवादिति चेन्न दध्नेति तृतीयया करणत्वोल्लेखमुखेन दधियागसम्बन्धरूपव्यापारस्यापि प्रतिपादनात्। यागस्य द्रव्यदेवतासाधनकत्वावश्यकत्वेन दधियागसम्बन्धस्य सुप्रतीतत्वाच्च। नन्वेवं दधिनिष्ठकरणत्व स्यापि भावनाकरणत्वमनुपपन्नम्। तस्यापि व्यापारानुपलब्धेः। न हि दध्नो यागसम्बन्ध-स्येव तत्करणत्वस्य भावनासम्बन्धः सम्भवतीति चेत्तदपि न, दध्नो यागकरत्वजन्यस्यादृष्टविशेष रूपव्यापारस्य सुगमत्वात्। तथाच केवलाद्दध्नो नादृष्टविशेषो जायते यस्य व्यापारत्वमङ्गीकृत्य भावनायां करणत्वं मन्तव्यम्। यदा तु दध्नो यागकरणत्वं जायते तदैवालौकिकक्रिया सम्बन्धेनादृष्टविशेष उत्पद्यते अतो दधिकरणत्वस्यैव स्वजन्यादृष्टविशेषरूपव्यापारवत्तया भावना-भाव्येन्द्रियनिर्वर्त्तकत्वरूपभावनाकरणत्वं सूपपन्नं न पुनः केवलस्य दध्न इति सर्वं निरुपद्रवम्।

प्रकृतं धात्वर्थस्य भावनायां करणत्वेनान्वयनियमव्यभिचारम्। अनुसरामः उपसंहरामः उपसंहरति तदिति। अन्वयस्य नानाप्रकारत्वं दर्शयितुमाह किमिति। अन्वयस्य किम्प्रकारत्व मित्यर्थः। क्वचिदिति। प्रधानविधौ करणत्वेन। गुणविधौ साध्यत्वेन। गुणफलविधावाश्रयत्वे-नेत्यर्थः। इति एवंरीत्यान्वयस्य त्रिप्रकारत्वात्। न मत्वर्थलक्षणेति। सोमेन यजेतेत्यस्य प्रधानविधित्वाङ्गीकारे या मत्वर्थलक्षणा सम्भाव्यते सा नेति पूर्व्वपक्षोपसंहारः।

ननु विधाने वानुवादे वा यागः करणमिष्यत इति वार्त्तिकोक्तेर्भवदभिमतगुण विधावपि मत्वर्थलक्षणावश्यकीति कथं मत्वर्थलक्षणाया निष्प्रयोजनत्वमुच्यत इत्यत आह किञ्चेति। इति वक्तव्यम् इत्यस्योत्तरं वक्तव्यं, गुणविधित्वपक्षेऽपि मत्वर्थ-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम् । न तावत् श्रुतिः । मत्वर्थलक्षणायां तृतीया श्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्यात् । न गुणस्याङ्गत्वे । समभिव्याहारात्मकं वाक्यमिति चेत् तत् किं स्वतन्त्रमेव मानमुत लिङ्गश्रुती कल्पयित्वा । नाद्यः बलाबलाधिकरणविरोधात् । तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वा अङ्गत्वे मानमित्युक्तम् । द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्तिकल्पने व्यर्थः प्रयासः समाश्रितः स्यात् । विशिष्टविधौ चागत्या तदाश्रयणम् ।

---

लक्षणावश्यकत्वाभिमानिनेति शेषः । तथाच गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वमेव न स्यादिति भावः । तत्रादौ श्रुतेर्मानत्वं निराकरोति न तावदिति । श्रुतिर्विभक्तिरूपा विनियोक्त्री श्रुतिः । मत्वर्थलक्षणायां सत्यामिति शेषः । तृतीया श्रुतिः दध्नेत्यादितृतीयाविभक्तिः । मत्वर्थस्यैव गुणसम्बन्धस्यैव । एकवारव्यवच्छेदमाह नेति । गुणस्य दध्यादिगुणस्य । अङ्गत्वे धात्वर्थाङ्गत्वे, मानमित्यनुषङ्गः । श्रुतेर्मानत्वासम्भवेऽपि वाक्यमेव मानमित्याह समभिव्याहारेति । शेषशेषिबोधकपदयोः सहोच्चारणमित्यर्थः । तदपि दूषयितुं विकल्पेन पृच्छति तत् किमिति । तद्वाक्यम् । स्वतन्त्रं मानान्तरनिरपेक्षम् ।

स्वतन्त्रप्रमाणतां निराकरोति नाद्य इति । बलाबलेति । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां विरोधे परपरस्य दौर्बल्याधिकरणे । कथं विरोध इत्यत आह तत्र हीति । तथाच वाक्यस्य स्वतन्त्रप्रमाणतैवासिद्धेति भावः । भवतु द्वितीयः पक्ष एवाङ्गीकार्य्य इत्यत आह द्वितीये इति । प्रत्यक्षां दध्नेत्यादौ श्रूयमाणाम् । श्रुतिं तृतीयाश्रुतिम् । व्यर्थः प्रयास इति । दध्नेत्यादौ श्रूयमाणतृतीयाश्रुत्यैव दध्यादेर्गुणत्वसिद्धौ सम्भवन्त्यां दध्यादिपदे मत्वर्थलक्षणाङ्गीकारेण दध्यादेर्गुणत्वाभावप्रसक्तौ तत्साधनाय दध्ना जुहोतीति वाक्यान्तरं कल्पयित्वा तद्घटकतृतीयारूपश्रुत्यन्तरकल्पने, प्रत्यक्षविधिघटिकाया एतस्या एव तृतीयाया आवृत्त्यान्वयमङ्गीकृत्य दधिमता होमेन फलं भावयेत् दध्ना च होमं भावयेदित्यर्थद्वयकल्पने वा, प्रयासाश्रयणं निरर्थकमिति भावः ।

विशिष्टविधौ गुणविशिष्टप्रधानविधौ । तथाच यत्रोत्पत्तिवाक्यान्तरं न श्रूयते तत्र : गुणविशेषविशिष्टयागविधिश्रुतौ तस्यैव गुणविशिष्टप्रधानविधित्वाभ्युपगमा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च भवतु श्रुत्यन्तरकल्पनं तथापि तत्सहकृतः प्रत्यक्ष एव वा विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, उत कल्पितं विध्यन्तरम्। कल्पितमिति चेन्न, श्रुतविधेर्व्यर्थत्वापत्तेः। न हि तेन तदा गुणो विधीयते। कल्पितविध्यन्तराङ्गीकारात्‌ नापि धात्वर्थः, तस्य च वचनान्तरेण विहितत्वात्।

अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्त इति चेत्, तर्हि तत्र कथं धात्वर्थस्यान्वयः। करणत्वेनेति चेन्न, अन्वयानुपपत्तेः। न हि सम्भवति दध्ना होमेन चेत्यन्वयः। साध्यत्वेनैवान्वयो दध्ना होमं भावयेदिति चेन्न, तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात्।

---

वश्यकत्वात् मत्वर्थलक्षणया अन्वयं सम्पाद्य गुणस्य धात्वर्थाङ्गत्वसम्पादनायागत्या पूर्वोक्तप्रयासाश्रयणम्। प्रकृते तु ज्योतिष्टोमेन यजेतेत्युत्पत्तिविधिप्राप्तेः सोमेन यजेतेत्यस्य गुणविधित्वाङ्गीकारेणोपपत्तौ कथं तथाविधप्रयास आश्रयणीय इति भावः।

श्रुत्यन्तरकल्पनेऽपि तस्यां कल्पितश्रुतौ यदि धात्वर्थस्य करणत्वेनान्वयोऽङ्गीक्रियते तदा वाक्यभेदापत्तिः। यदि तु तत्र साध्यत्वेनान्वयोऽभ्युपेयते तदा धात्वर्थस्य करणत्वेनैवान्वय इति प्रतिज्ञाहानिः। तद्वानौ स्वीकृतायां प्रत्यक्षश्रुताविव सा प्रतिज्ञाहानिः स्वीक्रियताम् अलं श्रुत्यन्तरकल्पनेनेत्याह किञ्चेत्यादिना। तत्सहकृतः कल्पितश्रुत्यन्तरसहकृतः विधिर्दध्ना जुहोतीत्यादिः। धात्वर्थाङ्गत्वेन होमाङ्गत्वेन। गुणं दध्यादिकम्। अन्त्यकल्पमाशङ्कते कल्पितमिति। श्रुतविधेः दध्ना जुहोतीति प्रत्यक्षविधेः। व्यर्थत्वापत्तेः विधायकत्वाभावेन निष्प्रयोजनत्वापत्तेः। ननु माभूद्गुणविधायकत्वं किन्तु धात्वर्थहोमविधायकत्वादेव साफल्यमस्य स्यादित्यत आह नापीति। धात्वर्थ इति। तेन विधीयत इत्यनुषङ्गः। तस्य धात्वर्थस्य। वचनान्तरेण प्रधानविधिना।

आद्यपक्षमिदानीं निराकर्तुमाशङ्कते अथेति। कल्पितश्रुतीति। वाक्यान्तरकल्पनया आवृत्त्यान्वयकल्पनया वा, प्राप्ततीयाश्रुतीत्यर्थः। अन्वयानुपपत्तौ हेतुमाह न हीति। दध्ना होमेन चेति भावयेदिति शेषः। वाक्यभेदापत्तेरिति भावः। उपेक्षितमिति। अनादृतं स्यादित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विवक्षितवाक्यार्थस्य विनैव मत्वर्थलक्षणयाङ्गीकृतः स्यात् । तस्मान्न गुणविधौ मत्वर्थलक्षणा ।

यत्तु विधाने वानुवादे वेति वार्त्तिकं तत्प्रतीतिमवलम्ब्य, न वस्तुगतिम् । तथाहि यावद्धि अग्निहोत्रं जुहुयादिति वाक्यं नालोच्यते । केवलं दध्ना जुहोतीति वाक्यमालोच्यते । तदा षष्ठाद्यन्यायेन होमस्याभाव्यतां जानतां प्रतिपदाधिकरणभावार्थाधिकरणवासनावासितानां भवत्येतादृशी मतिर्यद्दधिमता होमेनेष्टं भावयेदिति । प्रतिपदाधिकरणे हि सोमेन यजेतेत्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वयः उत एकस्यैवेति सन्दिह्य प्रधानसम्बन्धलाभात् विनिगमनाविरहाच्च सर्व्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव भावनाकरणत्व-

---

क्लृप्तविधेरपि अङ्गविधित्वाविशेषादिति भावः । यदि तु गुणविधावपि धात्वर्थस्य करणत्वेनैवान्वय इति स्वाभिमतसिद्धान्त इदानीमुपेक्ष्यते तदा सोमेन यजेतेति वाक्यस्य गुणविधित्वपक्षेऽपि अनुपपत्त्यभावाल्लक्षणामन्तरेणापि मद्विवक्षितोऽर्थो भवतावश्यमङ्गीकृतो भवेदित्याह विवक्षितेति ।

गुणविधौ मत्वर्थलक्षणावादं निराकृत्योपसंहरति तस्मादिति । ननु विधाने वानुवादे वा यागः करणमिष्यत इत्यस्य वार्त्तिकसिद्धान्तस्य तर्हि को विषय इत्यत आह यत्त्विति । प्रतीतिमापाततः प्रतीतिम् । वस्तुगतिं वास्तविकीं प्रतीतिम् । तदेवोपदर्शयति तथाहीति । वाक्यं प्रधानविधिः । षष्ठाद्यन्यायेन षष्ठाध्यायप्रथमपादीयप्रथमाधिकरणेन । होमस्याभाव्यतामिति । तत्र स्वर्गादिफलस्यैव भाव्यत्वसिद्धान्तनादिति भावः । प्रतिपदेति । द्वितीयाध्यायप्रथमपादीयप्रथमाधिकरण एव प्रतिपदाधिकरणं भावार्थाधिकरणञ्च भाष्यकारादिभिर्दर्शितम् । तद्वासनया तदर्थज्ञानजन्यसंस्कारेण । वासितानां संस्कृतानाम्, जातसंस्काराणामिति यावत् । ननु तत्तदधिकरणे किं सिद्धान्तितम् । येन तज्ज्ञानजन्यदृढतरसंस्कारवशात् गुणविधावपि तत्तद्गुणवता यागेनेष्टं भावयेदिति प्रतीतिर्झटित्युदेतीत्यतस्तद्दर्शयति प्रतिपदाधिकरणे हीति । उक्तं द्वितीयाध्यायप्रथमाधिकरणे पार्थसारथिमिश्रादिभिः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्युक्तम् । भावनाकरणत्वं हि भावनाभाव्यनिर्वर्त्तकतया । भाव्यञ्च स्वर्गादि नादृष्टमन्तरेणेत्यनेकेषां करणत्वे अनेकादृष्टकल्पनाप्रसङ्गात् । तस्मादेकस्यैव करणत्वम् ।

यदाप्येकस्य तदापि किं द्रव्यगुणयोः फलभावनाकरणत्व मुत धात्वर्थस्येति भावार्थाधिकरणे सन्दिह्य द्रव्यगुणयोरेव भावना करणत्वम् । भूतं भव्यायोपदिश्यत इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वं पदश्रुतेर्बलीयस्त्वादित्युक्तम् । अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति । यदा त्वग्निहोत्रं जुहोतीति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात् तदुद्देशेन गुणमात्रं विधीयत इत्यालोचनान्न मत्वर्थलक्षणेति । अतएवोक्तं पार्थसारथिमिश्रैराघाराग्निहोत्राधिकरणे । फलतो गुणविधिरयं न प्रतीतित इति यद्वा एतद्वार्त्तिकमधिकारविध्यभिप्रायम् । उद्भिदा यजेतेत्यादौ-

---

भावार्थाधिकरणे द्वितीयाध्यायप्रथमाधिकरणशेषांशे । भूतं । द्रव्यादि । भाव्याय फलाय । इत्युक्तमिति । शास्त्रदीपिकाकारादिभिरेवेति शेषः । तथाच शास्त्रदीपिकायां सिद्धान्तकारिका ।

भावनैव हि भाव्येन फलेनान्वेतुमर्हति ।
धात्वर्थः करणं तत्र लाघवात् सन्निकर्षतः ॥ इति ।

एतद्वाक्येति । अग्निहोत्रं जुहुयादिति प्रधानभूतविधिवाक्यान्तरेत्यर्थः । गुणपदे दध्यादिपदे । आघाराग्निहोत्राधिकरणे आघाराद्यपूर्व्वताधिकरणे द्वितीयाध्यायद्वितीयपादारचिते ।

नन्वदूरदर्शिनां माहशामेव दध्ना जुहोतीत्यादावापाततः सम्भवति धात्वर्थस्य करणता प्रतीतिः । न पुनर्वार्त्तिककाराणां श्रुतिमीमांसापारदर्शिनाम् । तत्कथमनुवादे यागस्य करणत्वमिति तदुक्तावापातिकप्रतीतिवर्णनमिति यत आह यद्वेति । अधिकारेति । कर्म्मनन्यफलस्वाम्यबोधकविध्यभिप्रायमित्यर्थः । तदभिप्रायकत्वे हेतुमाह उद्भिदेति । प्रथमाध्याय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नामधिकारात्। तत्र हि यागो विधीयतामुत्पत्तिवाक्यसिद्धो वानूद्यतामुभयथापि करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम्। अन्यथा अन्वयानुपपत्तेरिति। तस्माद्गुणविधौ विनापि मत्वर्थलक्षणया अन्वयोपपत्तेर्न मत्वर्थलक्षणेति। अतश्च

---

चतुर्थपादे उद्भिदा यजेत पशुकाम इत्यादौ उद्भिदादिशब्दानां कर्मनामधेयताधिकरण एव विधाने वानुवादे वेति वार्त्तिककारैरित्याशयः। यद्यपि उद्भिदा यजेत पशुकाम इत्यादीनां यथा कर्मजन्यफलस्वाम्यबोधकत्वेनाधिकारविधित्वं तथा अप्राप्तकर्मविधायकत्वेन उत्पत्तिविधित्व मपीत्युत्पत्त्यधिकारविधित्वम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेतिवत्। तथाप्यधिकारविधि-त्वाविशेषात् तदुपक्रमवार्त्तिकवाक्यस्य अधिकारविधित्वमक्षतम्। ननूद्भिदा यजेत पशुकाम इत्यादीनां तत्तन्नामकयागविशेषविधायकत्वान्नानुवादत्वमित्यत आह तत्रेति। तेषु अधिकार-विधिषु मध्ये इत्यर्थः।

यागो विधीयताम् उद्भिदा यजेत पशुकाम इत्यादिविधिभिः। अनूद्यतां वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः। वर्षासु रथकार आदधीतेत्यादिविधिभिः। उभयथापि यागविधायकत्वे तदनुवादकत्वे वा। करणत्वेनान्वयादिति। यागस्येति शेषः। तद्वाचित्वं करणतावाचित्वम्। अन्यथा उभयत्रैव यागस्य करणत्वानङ्गीकारे। अन्वयानुपपत्ते रिति। तथाच उद्भिदा यजेतेत्यादय उत्पत्त्यधिकारविधयो विधानपदेनोक्ताः। वसन्ते ब्राह्मणोऽग्निमादधीतेत्यादयः केवलाधिकारविधयस्तु अनुवादपदेनाभिहिताः। तत्र उत्पत्त्य धिकारविधिषु यागस्य करणत्वानङ्गीकारे अन्वयानुपपत्तिः स्पष्टैव। केवलाविधिकारविधिषु तु उत्पत्तिविधिप्राप्तयागस्य करणत्वमङ्गीकृत्य यदि वसन्तकालविशिष्टो ब्राह्मणोऽग्न्याधानं भावयेदिति यागस्य भाव्यत्वं मन्यते तदा तेषां कर्मजन्यफलभोक्तृत्वाप्रतिपादकतया अधिकारविधित्वमेव व्याहन्येत। तस्मादेषामधिकारविधित्वोपपत्त्यर्थं वसन्तकालावच्छिन्नजीवनवान् ब्राह्मणोऽग्न्या-धानेन फलं भावयेदित्यवश्यमेव वक्तव्यम्। प्रकारान्तरेणान्वयासम्भवादिति भावः।

गुणविधावपि मत्वर्थलक्षणावश्यकीति यदापादितं तदापत्तिनिरासमुपसंहरति तस्मादिति। नन्वेवमपि सोमेन यजेतेत्यत्र न विशिष्टविधानं गौरवान्मत्वर्थलक्षणापाताच्च। किन्तु दध्ना जुहोतीतिवत् गुणमात्रविधायकत्वमस्त्वित्यादिग्रन्थेन कृत। पूर्व्वपक्षापत्तिनिरासेन दृढीकृत्य इदानीमुपसंहरति अतश्चेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सोमेन यजेतेत्यत्र न विशिष्टविधानं किन्तु गुणमात्रविधानम्। यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्मिन् वाक्ये विधीयत इति युक्तम्। अन्यथा मत्वर्थलक्षणापत्तेरिति।

अत्रोच्यते। यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा। तथापि यागस्याप्राप्तत्वात् सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं सम्भवति। न च ज्योतिष्टोमेनेत्यादिना प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः। कर्म्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। तेन च विहितस्य कर्म्मणः फलविशेषसम्बन्धमात्रमधिकारविधिना क्रियते। फलविशेषसम्बन्धबोधकस्याधिकारविधित्वात्। यथा आग्नेयोऽष्टाकपालो भवतीति। एतद्विहितस्य कर्म्मणः फलविशेषसम्बन्धमात्रं दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्ते। तस्याधिकारविधित्वं नोत्पत्तिविधित्वम्।

स्यादेतत् दर्शपौर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं सम्भवति। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः।

---

निश्छिद्रीकृतेऽपि तस्मिन् पूर्व्वपक्षे सिद्धान्तमाह अत्रोच्यत इति। ननु ज्योतिष्टोमेन यजेतेत्यस्याधिकारविधित्वे कथमुत्पत्तिविधित्वानुपपत्तिः। उभयरूपत्वात्तस्येत्यत उत्पत्त्यधिकारविध्योः स्वरूपं प्रतिपादयति कर्म्मस्वरूपमात्रेत्यादि। तेन उत्पत्तिविधिना। उत्पत्त्यधिकारविध्योरुदाहरणमाह यथेति। आग्नेय इति। इदञ्च उत्पत्तिवाक्यम्। द्रव्यदेवताबोधकतया कर्म्मस्वरूपमात्रबोधकत्वात्। फलसम्बन्धमात्रमिति। स्वर्गकामपदेनेति शेषः।

दर्शपौर्णमासाभ्यामित्यस्योभयविधित्वाङ्गीकारे आग्नेयोऽष्टाकपाल इत्यस्य वैयर्थ्यप्रसङ्गात्। दर्शपौर्णमासाभ्यामित्यस्याधिकारविधित्वमेव युक्तम् ज्योतिष्टोमवाक्यस्य तु उत्पत्त्यधिकारविधित्वाङ्गीकारे न कस्यापि वैयर्थ्यमिति पूर्व्वपक्षी शङ्कते स्यादेतदिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नहि तेन तदा कर्म्म विधीयते। तस्य दर्शपौर्णमासाभ्यामित्यनेन विहितत्वात्। नापि गुणविधानं सम्भवति। प्राप्ते कर्म्मणि अनेकगुणविधाने वाक्यभेदापत्तेः। अत आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपौर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम्। ज्योतिष्टोमेनेत्यस्याधिकारविधेरुद्भिदा यजेत पशुकाम इत्यादिवदुत्पत्तिविधित्वे स्वीक्रियमाणे न कस्यचिदानर्थक्यम्। सोमेन यजेतेत्यस्य गुणविधित्वात्। यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेन्नैवम्। यद्यपि सोमेन यजेतेत्यत्र लाघवान्न वाक्यभेदस्तथापि ज्योतिष्टोमेनेत्यस्मिन् वाक्ये कर्म्मस्वरूपे तस्य फलसम्बन्धे च विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव। सोमेन यजेतेत्येतद्वाक्यविहितकर्म्मणः फलसम्बन्धमात्रविधाने तदभावात्। उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम्।

---

दिति। नन्वाग्नेयोऽष्टाकपाल इत्यादिना यागो विधीयतां कथमानर्थक्यमित्यत आह नहीति। अथाग्नेयोऽष्टाकपाल इत्यस्य गुणविधित्वं स्यादित्यत आह नापीति। अनेकगुणेति। अग्निदेवताया अष्टाकपालसंस्कृतहविषश्चेत्येतद्गुणद्वयविधाने इत्यर्थः। नन्वाग्नेयोऽष्टाकपाल इत्यस्यानर्थक्यवत् प्रकृते सोमेन यजेतेत्यस्यानर्थक्यापत्तिरित्यत आह सोमेनेति। गुणविधित्वात् गुणविधित्वाङ्गीकारात्। आग्नेयवाक्यवदत्र गुणद्वयविधानं नापततीत्याह सोममात्रेति।

सिद्धान्ती निराकरोति नैवमिति। सोमवाक्ये एकमात्रगुणविधानात् वाक्यभेदाभावेऽपि ज्योतिष्टोमवाक्ये विधेयद्वयामासाद्गौरवमिति भावः। गौरवलक्षण इति। न वाक्यगौरवं किन्त्वर्थगौरवमिति भावः। ननु स्वमते कथं तद्गौरवं परिहरणीयमित्यत आह सोमेन यजेतेति। तदभावात् तथाविधगौरवाभावात्। गत्यन्तराभावादेव क्वचित्तथाविधगौरवाङ्गीकार इत्याह उद्भिदेति। वचनान्तराभावेन उत्पत्तिविध्यन्तराभावेन।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च सोमेन यजेतेत्यत्रापि कर्म्मस्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम् । श्रूयमाणेन विधिना गुणस्याविधेयत्वात् । विशेषणविधेरार्थिकत्वात् । सर्व्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः । ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्म्मस्वरूपं फलसम्बन्धश्चेति श्रूयमाणेनैव विधिना विधातव्यमिति सुदृढो गौरवलक्षणो वाक्यभेदः । यथाहुः ।

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यते ॥ इति ।

---

नन्वेवं सोमवाक्येऽपि भवन्मते तथाविधगौरवं स्यादित्यापत्तिं निराकरोति न चेति । कर्म्मस्वरूपे इति । भवन्मते तस्योत्पत्तिविधित्वादिति भावः । श्रूयमाणेन गुणविधायकतया श्रूयमाणेन । तथाच गुणो न गुणविधायकत्वेन रूपेण श्रूयमाणविधिबोधितः किन्तु तद्गुणविशिष्टकर्म्मविधायकत्वेन रूपेण श्रूयमाणविधिबोधित इति भावः । ननु यदि गुणविधायको विधिर्न श्रूयते तदा कथमस्य विधेयत्वमित्यत आह विशेषणविधेरिति । गुण विधेरित्यर्थः । आर्थिकत्वात तात्पर्य्यागतत्वात् । तथाच गुणविशिष्टकर्म्मणो विधेयत्वे गुणस्यापि विधेयतावच्छेदकतयैव विधेयत्वमिति भावः । न केवलं सोमवाक्ये किन्तु सर्व्वत्रैव विशेषणविधिरार्थिक इत्याह सर्व्वत्र हीति । ननु ज्योतिष्टोमवाक्यस्योत्पत्त्यधिकारविधित्वाङ्गीकारेऽपि अन्यतरविधेरार्थिकत्वे उभयविधानं न गौरवायेत्यत आह ज्योतिष्टोमेनेत्यस्येति । श्रूयमाणेनैवेति । तथाच भवतां मते तस्योभयविधित्वाङ्गीकारात ज्योतिष्टोमाख्येन यागेन भावयेदित्युत्पत्तिविधिना बोधिते तेन यागेन स्वर्गं भावयेदित्यधिकारविधिना बोधयितव्यमित्युभयमेव आवृत्त्या श्रूयमाणविधिद्वयबोधितमिति सुस्पष्टो गौरवलक्षणो वाक्यभेद इति भावः ।

अत्रैव वार्त्तिककारसम्मतिमाह यथाहुरिति । श्रौतेति । शब्दानां श्रौतव्यापारस्य श्रवणेन्द्रियजन्यज्ञानस्य नानात्वे अतिगौरवम् । यदि विधिवाक्यघटकशब्दा आवृत्तिवशाद्वारं वारं श्रूयन्ते तदा गौरवातिरेक इति तात्पर्य्यम् । एकेति । एकया उक्त्या अवसितानां समाप्तानाम् अनावृत्तानामिति यावत् । शब्दानाम् अर्थेन तात्पर्य्येण कस्यचित् पदार्थस्याक्षेप आविर्भावनं न विरुध्यत इत्यर्थः । ज्योतिष्टोम वाक्यस्योभयविधित्वे ज्योतिष्टोमेन भावयेत्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च सोमेन यजेतेत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदस्तथापि मत्वर्थलक्षणा स्यादिति वाच्यम्। तस्याः स्वीक्रियमाणत्वात्। लक्षणातो वाक्यभेदस्य जघन्यत्वात्; लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः। पदवाक्यदोषयोर्मध्ये पद एव दोषकल्पनाया उचितत्वात्। गुणे त्वन्याय्यकल्पनेति न्यायात्।

अतएव जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात् पदद्वयाभ्यामवस्थाविशेषो लक्ष्यत इत्युक्तम्। तस्मात् वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्य्या। तस्मात् सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययम्। गौरवलक्षणवाक्यभेदापत्तेः।

किञ्च सोमेन यजेतेत्यत्र यागविधाने गुणार्थविधानं स्यात्।

---

ज्योतिष्टोमेन स्वर्गं भावयेदित्येकस्यैव वाक्यस्य द्विःश्रवणकृतमर्थद्वयं गौरवात् विरुद्धम्। सोमवता यागेन भावयेदित्यादौ तु सकृदुच्चरितादेव वाक्यात् सोमविशिष्टयागरूपार्थस्य विधेयस्य प्राप्तिः। तत्र सोमस्याङ्गभावोऽर्थाच्चिन्न इति न विरुध्यत इति भावः।

इदानीं मत्वर्थलक्षणादोषापत्तिमिष्टापत्त्या परिहरति न चेति। लक्षणास्वीकारे हेतुमाह लक्षणात इति। जघन्यत्वात् गत्यन्तराभावेनाश्रयणीयत्वात्। हेतुमाह लक्षणा हीति। पद एव दोषकल्पनाया इति। पददोषाङ्गीकारस्यैवेत्यर्थः। तत्र प्रमाणमाह गुणे त्विति। आकाङ्क्षादिमत्पदकदम्बस्य वाक्यतया एकैकपदस्य वाक्यघटकत्वेन गुणत्वादिति भावः। अतएवेति। वाक्यभेदापेक्षया लक्षणाया लघुत्वादेवेत्यर्थः। पदद्वयाभ्यामिति। एतन्मते वाक्येऽपि लक्षणाङ्गीकारात् गम्भीरायां नद्यां घोष इत्यत्र यथा गम्भीरापदनदीपदरूपपदद्वयसमुदायस्य गम्भीर नदीतीरे लक्षणा तथा जातपुत्रपदकृष्णकेशपदयोरवस्थाविशेषलक्षणेति भावः। अवस्थाविशेषो यौवनावस्था। मत्वर्थलक्षणादोषं निराकृत्य सोमेन यजेतेत्यस्य प्रधानविधित्वसिद्धान्तमुपसंहरति तस्मात् सोमेनेति।

गुणविधित्वाङ्गीकारेऽपि न दोषविशेषानिस्तारस्तत्कथं मत्वर्थलक्षणातो बिभेषीत्याह किञ्चेति। गुणार्थविधानम् एकपदरूपविनियोगगुणार्थविधानम्। तथाच स्विड्यर्थभावनायां करणाकाङ्क्षया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गुणविधाने तु वाक्यार्थविधानम् तच्च श्रुत्यर्थविधानसम्भवे अयुक्तम्। यथाहुः।

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे। इति।

वाक्यार्थः पदान्तरार्थ इत्यर्थः। ज्योतिष्टोमेनेत्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम्। तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च। तस्माज्ज्योतिष्टोमेनेत्ययमधिकारविधिरेव।

अपि च कर्म्मस्वरूपविधिस्तत्र स्वीकार्य्यो यत्र कर्म्मणो रूपमुपलभ्यते। यागस्य च द्वे रूपे द्रव्यं देवता चेति। सोमेन

---

मेकपदोपस्थितयागस्य करणत्वेनान्वये यागेन भावयेदिति विधानमिति भावः। वाक्यार्थविधानम् एकवाक्यगतलिङ्घटितपदेतरपदविशेषार्थविधानम्। तथाच एकपदोपस्थितधात्वर्थयागस्य भावनायां करणत्वान्वयमुत्सृज्य एकवाक्यगतसोमरूपपदान्तरार्थस्य करणत्वेनान्वयेन सोमेन भावयेदितिविधानमिति भावः। अयुक्तमिति। सन्निहितधात्वर्थमपहायासन्निहितसोमस्य करणत्वान्वयाङ्गीकारस्यान्याय्यत्वादिति भावः। अतएवोक्तं सन्निहिते बुद्धिरन्तरङ्गेति। अत्र मीमांसकसम्मतिमाह यथाहुरिति। पदान्तरार्थ इति। लिङ्घटितपदेतरतद्वाक्यघटकपदविशेषार्थ इत्यर्थः।

अस्मन्मते ज्योतिष्टोमवाक्येऽपि न वाक्यार्थविधानमित्याह ज्योतिष्टोमेनेत्यत्रापीति। यागस्यैवेति। न पदार्थान्तरस्य विधानमित्येवकारार्थः। तद्वाक्ये यागेतरपदार्थस्य लिङर्थभावनायां करणत्वेनान्वयासम्भवादिति भावः। तदङ्गीकाराच्चेति चकारो यागस्यैव विधानादिति प्रागुक्तहेतुं समुच्चिनोति तस्मादिति। यस्मात् प्रतिवादिमते ज्योतिष्टोमवाक्ये गौरवलक्षणो वाक्यभेदः सोमवाक्ये च वाक्यार्थविधानदोषः। अस्मन्मते तु सोमवाक्ये मत्वर्थलक्षणाभावमिति लाघवं तस्मादित्यर्थः।

ज्योतिष्टोमवाक्यस्य द्रव्यदेवतान्यतरप्रकाशकत्वाभावेन उत्पत्तिविधित्वं न सम्भवत्येवेत्याह अपि चेति। कर्म्मस्वरूपविधिः कर्म्मस्वरूपबोधको विधिः। यागात्मककर्म्मणः किं रूपमित्यत्राह यागस्य चेति। द्रव्यश्रवणेऽपि देवताश्रवणाभावात् कथं सोमवाक्यस्योत्पत्तिविधित्वं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यजेतेत्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वात्। अव्यक्तत्वञ्च स्वार्थचोदितदेवताराहित्यम्, न तु देवताराहित्यमात्रम्। ऐन्द्रवायव्यं गृह्णातीति वाक्यविहितग्रहदेवतानां सत्त्वात्। ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात्। तथापि द्रव्यमुपलभ्यत एव। तेनापि यागस्वरूपं ज्ञातुं शक्यमेव। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र च न द्रव्यं देवता वा श्रूयते। अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं यागसामान्यस्याविधेयत्वात्। विशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यादतो नायं कर्म्मोत्पत्तिविधिः।

---

सम्भवतीत्यत आह सोमेति। ननु अव्यक्तत्वं यदि अव्यक्तदेवताकत्वं तर्हि कथमस्य यागत्वं स्यात्। देवतोद्देशेन द्रव्यत्यागस्यैव यागपदार्थत्वादित्यत आह अव्यक्तत्वञ्चेति। स्वार्थेति। स्वबोधकवाक्यार्थावगतदेवताशून्यत्वम्। तथा यागबोधकवाक्यार्थानवगतदेवताकत्वमिति यावत्। देवताराहित्यस्य अव्यक्तपदवाच्यत्वे सोमयागस्याव्यक्तत्वाङ्गीकारोऽनुचितः स्यादित्याह न त्विति। ऐन्द्रेति। ऐन्द्रवायव्यम् इन्द्रवायुदेवताकम्। ग्रहं गृह्णातीत्यर्थः।

ननु ग्रहणोद्देश्यदेवताप्राप्तावपि यागस्य देवताराहित्यमेव प्रतीयते इत्यत आह ग्रहणेति। ग्रहणसम्बन्धिनीभिरित्यर्थः। प्रसङ्गतः अन्यत्र प्रवर्त्तनात्। यागोपकारस्य यागस्वरूपसम्पादनस्य। तथापीति। यद्यपि देवता नोपलभ्यत इत्यन्वयि। द्रव्यं सोमरूपम्। ज्योतिष्टोमवाक्यस्य द्रव्यदेवतान्यतरबोधकत्वाभावेऽपि यद्युत्पत्तिविधित्वमङ्गीक्रियते तदा यागस्वरूपज्ञानं क्लेशसाध्यं स्यादित्याह ज्योतिष्टोमेनेति। यागविशेषेति। यागविशेषस्वरूपज्ञानमित्यर्थः। क्लेशेन स्यादित्यन्वयि। क्लेशसाध्यत्वे हेतुमाह यागसामान्येत्यादि। तथाच यागविशेषस्यैव ज्योतिष्टोमनामकत्वं यागसामान्यस्य तन्नामकत्वानुपपत्तेरित्यनुमानगम्यत्वादिति भावः। विधेयत्वात् बोधनीयत्वात्। अत इति। द्रव्यदेवताविरहेण यागस्वरूपज्ञानस्य क्लेशसाध्यत्वादित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नन्वेवमपि अग्निहोत्रं जुहोतीत्ययमपि होमोत्पत्तिविधिर्न स्यात्, रूपाश्रवणात्। तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात्। तथाचाघाराग्निहोत्राधिकरणविरोधः। तत्र हि अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोतीत्यादीनाञ्च गुणविधित्वमुक्तमिति चेत् सत्यम्। अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यते अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात्। तदेतदग्रे वक्ष्यामः। तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते। अन्यथा आनर्थक्यापत्तेः दध्ना। जुहोतीत्यस्य च नानर्थक्यं गुणविधित्वात्। अतोऽग्निहोत्रं जुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम्। ज्योतिष्टोमेनेत्यस्य च नान-

---

ननु रूपाश्रवणेऽपि क्वचिदुत्पत्तिविधित्वं क्वचिच्च रूपश्रवणेऽपि गुणविधित्वं दृश्यते तत्र का गतिरित्याशङ्कते नन्विति। ननु तदुभयत्राप्यन्यत्र वैपरीत्यमेवेत्याशङ्कामपनेतुमाह तथाचेति। विरोधे हेतुमाह तत्र हीति। तत्र द्वितीयाध्यायद्वितीयपादवार्त्तिके तदधिकरणे इत्यर्थः। उक्तं भाष्यकारादिभिः। आशङ्कांनिराकरणायाह सत्यमिति। वस्तुमङ्गीतोत्यर्थः। नन्वग्निहोत्रशब्दादग्निदेवताकत्वप्रतीतौ कथं रूपानुपलब्धिरित्यत आह अग्निहोत्रशब्दस्येति। कोऽयं तत्प्रख्यन्याय इत्यत आह तदेतदिति।

उत्पत्तिविधित्वमिति। कर्मणः स्वरूपमात्रबोधकस्योत्पत्तिविधित्वात् रूपनिर्देशेनेव नामनिर्देशेनापि कर्मणः स्वरूपबोधकत्वाविशेषादिति भावः। अन्यथेति। नामनिर्देशेन स्वरूपबोधकत्वानङ्गीकारे इत्यर्थः। आनर्थक्यापत्तेरिति। उत्पत्तिविध्यादिचतुर्विधविधिविशेषेष्वनन्तर्भावान्निष्प्रयोजनत्वापत्तेरित्यर्थः। ननु यथा दध्ना जुहोतीत्यस्योत्पत्तिविधित्वानङ्गीकारे अग्निहोत्रं जुहोतीत्यस्यानर्थक्यं तथाग्निहोत्रविधेरुत्पत्तिविधित्वाभिमानेऽपि दध्ना जुहोतीत्यस्य वैयर्थ्यमस्त्वित्याशङ्कायामाह दध्ना जुहोतीत्यस्य चेति। गुणविधित्वादिति। गुणविधिष्वन्तर्भूतत्वेन गुणविशेषसमर्पकतया सप्रयोजनत्वादित्यर्थः।

ननु तर्हि ज्योतिष्टोमवाक्यस्याप्युत्पत्तिविधित्वानङ्गीकारे आनर्थक्यमस्त्वित्यत आह

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्थक्यमधिकारविधित्वोपपत्तेः । अतः किमर्थं सम्भवति रूपवति वाक्ये कर्म्मविधाने तद्रहिते तत् स्वीकार्य्यम् ।

किञ्च दध्ना जुहोतीत्यस्य कर्म्मोत्पत्तिविधित्वे पयसा जुहोतीत्यनेनेतत्कर्म्मानुवादेन न पयो विधातुं शक्यते उत्पत्तिशिष्टदध्यवरोधात् । उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् । अतस्तेनापि विशिष्टं कर्म्मान्तरं विधेयम् । तथाचानेकादृष्टकल्पनागौरवम् । अग्नि-

---

ज्योतिष्टोमेनेति । अधिकारेति तस्याधिकारविधिष्वन्तर्भावात् फलसम्बन्धार्थकतया सार्थकत्वादित्यर्थः । किमर्थमित्यादि । रूपवति द्रव्यदेवतान्यतरबोधके वाक्ये सोमेन यजेतेत्यादौ कर्म्मविधाने यागस्योत्पत्तिविधित्वे सम्भवति तद्रहिते द्रव्यदेवतारहिते ज्योतिष्टोमवाक्यादौ किमर्थं तत् यागविधानं स्वीकार्य्यमित्यर्थः ।

तथाच रूपनाम्नो रूपस्यैव विशेषेण स्वरूपावगमहेतुत्वात् नाम्नस्तु सामान्यतस्तदवगमकत्वात् रूपबोधकवाक्यस्यैव उत्पत्तिविधित्वं न्याय्यं न पुनर्नामवद्वाक्यस्य । यथा सोमवाक्यस्योत्पत्तिविधित्वं न ज्योतिष्टोमवाक्यस्य । यत्र तु नामवद्वाक्यस्य वैयर्थ्याद्रूपवद्वाक्यस्योत्पत्तिविधित्वं न सम्भवति तत्र नामवद्वाक्यस्योत्पत्तिविधित्वं स्वीकार्य्यं न रूपवद्वाक्यस्य । यथाग्निहोत्रवाक्यस्यैवोत्पत्तिविधित्वं न दधिवाक्यस्य । एवमुद्भिदा यजेतेत्यादावपि । तत्रापि रूपवद्वाक्यस्योत्पत्तिविधित्वासम्भवादिति भावः ।

ननु यथा यजमानो यूप इत्यत्र यूपस्य यजमानवदूर्द्ध्वत्वरूपगुणविधायकत्वं तथाग्निहोत्रं जुहोतीत्यस्यापि यागस्याग्निहोत्रनामकरूपगुणविधायकत्वमस्तु न वैयर्थ्यमित्यत आह किञ्चेति । उत्पत्तीति । उत्पत्तिविधिविहितदधिद्रव्येण अवरोधात् । यागस्य सद्रव्यीकरणादित्यर्थः । अत्र हेतुमाह उत्पत्तिशिष्टेति । हि यस्मात् । आकाङ्क्षायाः गुणाकाङ्क्षायाः । उत्पत्तिशिष्टेनैव उत्पत्तिविधिबोधितगुणेनैव । तेनापि पयसा जुहोतीत्यनेनापि । विशिष्टं द्रव्यविशिष्टम् । कर्म्मान्तरम् । विधेयमिति । पयसा जुहोतीत्यस्यापि भवन्मते गुणविधित्वासम्भवेन प्रधानविधित्वापातादिति भावः । तत्र को दोष इत्यत आह तथाचेति । अनेकादृष्टेति । अनेकपरमापूर्व्वेत्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

होत्रं जुहोतीत्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्म्मणो द्रव्याकाङ्क्षायां युगपदेव खलेकपोतन्यायेन दध्ना जुहोति पयसा जुहोतीत्यादिवाक्यैर्गुणा विधीयन्त इति नानेकादृष्टकल्पना-गौरवम्।

अतोऽग्निहोत्रं जुहोतीत्ययमुत्पत्तिविधिः। पयसा जुहोतीत्यादयस्तु गुणविधय इति युक्तम्। सोमेन यजेतेत्यत्र रूपवति वाक्ये कर्म्मोत्पत्तिविधाने स्वीक्रियमाणे न किञ्चिद्दूषणं पक्षद्वयेऽप्येकस्यादृष्टस्य तुल्यत्वात्। तस्माद्युक्तं सोमेन यजेतेत्ययमेवोत्पत्तिविधिरिति। अलमनया विधिनिरूपणानुगतप्रपञ्चनिरूपणचिन्तया। प्रकृतमनुसरामः। तत्सिद्धं विधिः प्रयोजनवन्तमप्राप्तार्थं विधत्त इति।

स च विधिश्चतुर्विधः। उत्पत्तिविधि र्विनियोगविधि रधिकारविधिः प्रयोगविधिश्चेति। तत्र कर्म्मस्वरूपमात्रबोधको-

---

अग्निहोत्रवाक्यस्योत्पत्तिविधित्वे तु नैतदित्याह अग्निहोत्रमिति। कर्म्मणो अग्निहोत्रनामकयागस्य। खलेकपोतेति। तथाचोक्तम्।

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।
तथैव सर्व्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥ इति।

युक्तं प्रागुक्तयुक्तिसिद्धम्। अयमेवेत्येवकारेण ज्योतिष्टोमवाक्यव्यावृत्तिः। प्रकृतं विधिनिरूपणम्। विधिपदार्थनिरूपणमुपसंहरति तत्सिद्धमिति।

विधिं विभजति स च विधिरिति। चतुर्विध इति। अप्राप्तार्थप्रापकत्वरूपविधित्वस्य सर्व्वानुगतत्वेऽपि विभाजकोपाधिभेदात् परस्परं भेदः। अतो विभाजकोपाधिभेदं प्रतिपादयितुमाह तत्रेति। तेषु विधिषु मध्ये इत्यर्थः।

उद्देशक्रमप्राप्तमुत्पत्तिविधिमाह कर्म्मस्वरूपेति। कर्म्मणो यत् स्वरूपं तन्मात्रस्य बोधको योविधिः स उत्पत्तिविधिरित्यर्थः। उत्पत्तिः कर्त्तव्यतया प्राथमिकप्रतीतिः। सा च कर्म्मणो नामनिर्द्देशेन द्रव्यदेवतात्मकरूपविशिष्टकर्म्मनिर्द्देशेन सम्भवति। अतः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधिरुत्पत्तिविधिः। यथाग्निहोत्रं जुहोतीति। उत्पत्तिविधौ च कर्म्मणः करणत्वेनान्वयः। होमेनेष्टं भावयेदिति। न तु होमं कुर्य्यादिति साध्यत्वेन। तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यगतफलसम्बन्धो न स्यात्। करणत्वेन त्वन्वये होमेनेष्टं भावयेत् किन्तदिष्टमित्याकाङ्क्षायां फलविशेषसम्बन्धो घटते।

न चोत्पत्तिविधाविष्टवाचकपदाभावेन कर्म्मणा इष्टं भावयेदिति कथं वाक्यार्थं इति वाच्यम्। विधिश्रुतेरेवेष्टबोधकत्वात्। सा हि पुरुषार्थेषु पुरुषं प्रवर्त्तयन्ती कर्म्मणः फलसम्बन्धमात्रं बोधयति। तस्माद्युक्तमुत्पत्तिविधौ कर्म्म करणत्वेनान्वेतीति। अतएवोद्भिदा यजेतेत्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते उद्भिदा यागेन भावयेदित्यन्वयोपपत्तेः। येषामपीष्टसाधनत्वं

---

कश्चित् कर्म्ममात्रोत्पादकः। कश्चिच्च द्रव्यदेवताविशिष्टकर्म्मोत्पादकः। तयोरुभयोरपि कर्म्मस्वरूपबोधकत्वादुत्पत्तिविधित्वम्। नामनिर्द्देशेन द्रव्यदेवताविशिष्टकर्म्मनिर्द्देशेन च कर्म्मणः स्वरूपविज्ञानसम्भवात्। एवञ्च मात्रपदं कर्म्मणः फलसम्बन्धव्यावर्त्तकम्। तत्र प्रथमं नामनिर्द्देशोदाहरणमाह यथाग्निहोत्रमिति। होमेन अग्निहोत्राख्यहोमेन। कुर्य्यादिति भावयेदित्यर्थः। साध्यत्वेन कर्म्मत्वेन। साध्यत्वेनान्वये दोषमाह तथा सतीति। साध्यस्य भवन्मते होमस्य। साध्यान्तरेति। साध्यविशेषान्वयेन भावनायाः साध्याकाङ्क्षानिवृत्तेः साध्यस्य च साध्यान्तरनिराकाङ्क्षत्वादिति भावः। अधिकारवाक्येति। अग्निहोत्रं जुहुयात् स्वर्गकाम इति वाक्येत्यर्थः। होमस्य करणत्वेनान्वये फलान्वयः सुघट एवेत्याह करणत्वेनेति।

विधिश्रुतेरिति। लिङ्पदश्रुतेरित्यर्थः। तस्या इष्टबोधकत्वं साधयति सेति। विधिश्रुतिरित्यर्थः। पुरुषार्थेषु पुरुषाभिलषितेषु। पुरुषं प्रवर्त्तयन्ती पुरुषप्रवृत्तिमुत्पादयन्ती। फलसम्बन्धमात्रं यत्किञ्चिदिष्टसम्बन्धावश्यम्भावम्। इष्टविशेषसम्बन्धरहिते कर्म्मणि पुरुषप्रवृत्त्यसम्भवादिति भावः। कर्म्मणः करणत्वेनान्वयमुपसंहरति तस्मादिति। अतएव कर्म्मणः करणत्वेनान्वयावश्यम्भावादेव। तृतीयान्त इति। करणभूतेन यागेनान्वयसम्भवादिति भावः। तदेव दर्शयति उद्भिदा यागेनेति। केचित्तु लिङर्थं इष्टसाधनत्वम्। तथाच यजेतेति लिङा



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लिङ्गर्थंस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्न एव। न हि सम्भवति याग इष्टसाधनमुद्भिदेति। तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात्।

ननु तथाप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः। न हि सम्भवति होमेन भावयेदग्निहोत्रमिति। सत्यं श्रूयमाणा तावद् द्वितीया अर्थाक्षिप्तसाध्यत्वानुवादिका। होमस्य हि करणत्वेनान्वयात् असाधितस्य करणत्वानुपपत्तेः। तस्याश्चानन्वयोपस्थितौ

---

यजनमिष्टसाधनमिति वाक्यार्थ इत्याहुस्तन्मते उद्भिदा यजेत ज्योतिष्टोमेन यजेत अश्वमेधेन यजेत श्येनेनाभिचरन् यजेतेत्यादौ नाम्नां तृतीयान्ततया निर्देशानुपपत्तिरित्याह तेषामपीति। अन्वयानुपपत्तिं प्रतिपादयति न हीति।

ननु याग इष्टसाधनमित्यत्र यागशब्देन पुंस्त्वादिरूपं लिङ्गमेकत्वरूपा सङ्ख्या चोच्यते। तृतीयार्थस्य तदेकतरेणान्वयोऽस्त्वित्यत आह तृतीयोपात्तस्येति। तृतीयावाच्यस्येत्यर्थः। कारकस्य करणत्वस्य। लिङ्गसङ्ख्येति। कारकस्य क्रियेतरान्वये कारकत्वव्याघातात् परस्पराकाङ्क्षाविरहाच्च न लिङ्गसङ्ख्याभ्यामन्वययोग्यत्वमिति भावः।

अग्निहोत्रं जुहोतीत्यादौ नाम्नां तृतीयान्तत्वव्यभिचारमाशङ्कते नन्विति। तथापीति। भवन्मतेऽपीत्यर्थः। अर्थाक्षिप्तेति। होमेनेष्टं भावयेदित्यत्र होमस्यापि भाव्यत्वमर्थात् प्राप्तमिति भावः। साध्यत्वेति। होमेन भावयेदित्यनेनैव होमस्य साध्यताया अर्थादेवावधारितत्वात् अग्निहोत्रं होमं भावयेदिति वाक्यार्थस्यानुवादत्वमिति भावः। साध्यत्वस्यार्थाक्षिप्तत्वं साधयति होमस्य हीति। असाधितस्य अनुत्पादितस्य। करणत्वानुपपत्तेरिति। होमस्य दात्रादिवत् सिद्धरूपत्वाभावेन साध्यत्वावश्यकत्वादिति भावः।

ननु भावनायां साधनत्वेनान्वितस्य होमस्य साध्यत्वेनान्वयो न सम्भवति विरोधात्। यत्साध्यत्वमादाय अग्निहोत्रपदस्य सामानाधिकरण्यं स्यात्। आवृत्त्या अग्निहोत्रं होमं भावयेत् तेनेष्टं भावयेदित्येवं वाक्यार्थे अङ्गीकृते वाक्यभेदापत्तेरित्यतः शास्त्रदीपिकासिद्धान्तमुपन्यस्यति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सा अक्तून् जुहोतीतिवत् तृतीयार्थं लक्षयति। अग्निहोत्रेण होमेनेष्टं भावयेदितीत्युक्तं पार्थसारथिमिश्रैः अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः। तद्धितसुप्प्रत्ययविधौ कर्म करणत्वेनान्वेतीति।

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति। स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते। दध्ना होमं भावयेदिति।

एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान, समाख्यारूपाणि। एतत्सहकृतेन विनियोग-विधिना अङ्गत्वं परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं पारार्थ्यापरपर्य्यायं

---

तस्यार्थ इति। द्वितीयाया इत्यर्थः। अनन्वयेति। प्रागुक्तहेतोरिति भावः। अक्तूनिति। अक्तूनिति द्वितीया यथा अक्तुभिरिति तृतीयार्थं लक्षयति तथाग्निहोत्रमिति द्वितीयापि तृतीयार्थं लक्षयतीत्यर्थः। उक्तं शास्त्रदीपिकाप्रथमाध्यायचतुर्थपादे अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणे इति शेषः।

विनियोगविधिं निरूपयति अङ्गेति। अङ्गप्रधानयोः सम्बन्ध उपकारकोपकार्य्यभावः। उदाहरति यथेति। तस्याङ्गप्रधानसम्बन्धबोधकत्वं साधयति स हीति। हि यस्मात्। स विधिः। तृतीयेति। तृतीयया तृतीयाश्रुत्या प्रतिपन्नः करणताप्रतीतिबलादवगतः अङ्गभाव उपकारकभावो यस्य तस्य दध्नो होमसम्बन्धं होमोपकारकत्वं विधत्ते बोधयतीत्यर्थः। बोधन-प्रकारमाह दध्नेति। तृतीयया होमभावनायां दध्नः करणत्वावगमात् होमोपकारकत्वसिद्धिः। धात्वर्थस्य करणत्वेनान्वयमुपेत्य भाव्यत्वान्वयवोधनं त्वर्थसंग्रहटीकायां द्रष्टव्यम्।

एतस्य विधेर्विनियोगविधेः। सहकारिभूतानि अङ्गप्रधानसम्बन्धबोधने सहकारिकारण-भूतानि। षट् प्रमाणान्याह श्रुतिलिङ्गेति। परोद्देशेति। परोद्देशेन प्रधानकर्म्मण उपकारो-द्देशेन प्रवृत्तस्य पुरुषस्य कृतिव्याप्यत्वं कृतिसाध्यत्वं तद्रूप मित्यर्थः। पारार्थ्येति। पारार्थ्यमेव अपरपर्य्यायो नामान्तरं यस्य तत्। परोपकारकत्वमिति यावत्। अतएव "शेषः परार्थत्वा"दिति शेषलक्षणसूत्रव्याख्यायां "यः परस्योपकारे वर्त्तते स शेषः" इति भाष्यम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञाप्यते । तत्र निरपेक्षो रवः श्रुतिः । सा च त्रिविधा—विधात्री, अभिधात्री, विनियोक्त्री चेति ।

तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिविधा विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपा च । तत्र विभक्तिश्रुत्याङ्गत्वं यथा व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् ।

न चोत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्व-

---

श्रुतिं लक्षयति तत्रेति । तेषु प्रमाणेषु मध्ये इत्यर्थः । निरपेक्षः । स्वार्थप्रत्यायने पदान्तराकाङ्क्षारहितो यो रवः शब्दः सा श्रुतिरित्यर्थः । श्रुतिं विभजति सा चेति । विधात्री प्रवर्त्तयित्री । अभिधात्री अभिधया स्वार्थं प्रतिपादयन्ती । विनियोक्त्री प्राधनेष्वङ्गस-म्बन्धबोधिका ।

तासां स्वरूपमाह तत्रेत्यादिना । लिङादीत्यादिना विध्यर्थप्रत्ययान्तरस्य ग्रहणम् । लिङादीनां शब्दान्तरनैरपेक्ष्येण प्रवर्त्तनारूपस्वार्थप्रतिपादनद्वारेण प्रवर्त्तकत्वात् । व्रीह्यादि त्यादिपदात् मुख्यार्थपरा अन्ये प्रतिपदिका धातवश्च ग्राह्याः । मुख्यार्थपराणां स्वस्वार्थप्रतिपादने शब्दान्तरापेक्षाभावात् । श्रवणादेवेति शब्दान्तरापेक्षां विनेत्यर्थः । सम्बन्ध उपकारकत्वम् । विनियोक्त्र्याः श्रुतेस्त्रैविध्यमाह सा चेति । एकाभिधानरूपा एकोक्तिरूपा । एकपदरूपेत्यत्र पदं सुप्तिङन्तरूपम् । विभक्तिरूपां विनियोक्त्रीमुदाहरति तत्रेति । तासु विनियोक्त्रीषु श्रुतिष्वित्यर्थः । व्रीहिभिरिति । यद्यपि अत्र विधात्र्यभिधात्र्योरप्युदाहरणत्वमुचितम् । यथा यजेतेति लिङा भावनाप्रतीतिर्विधात्र्या श्रुत्या जायते । व्रीहिशब्दश्रुत्या शस्यविशेषस्य प्रतीति र्यजिश्रुत्या च कर्मविशेषस्य प्रतीतिरभिधात्र्या श्रुत्या भवति । सर्व्वदैव तासां तत्तदर्थ-प्रत्यायने निरपेक्षत्वात् श्रुतित्वमक्षुण्णम् । एवमन्यत्रापि । तथापि तत्तदुदाहरणत्वस्यानायासगम्यत्वा-दङ्गभाव प्रतिपादकविनियोगश्रुत्युदाहरणत्वं दर्शयति तृतीयेति ।

ननु पुरोडाशेन यजेतेति श्रुत्या पुरोडाशस्य द्रव्यतया यागोपकारकत्वं प्राप्त'

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मिति वाच्यम्। पुरोडासप्रकृतितयोपपत्तेः। पशोरिव। हृद-याद्रिरूपहविःप्रकृति तया यागाङ्गत्वम्। न च साक्षात् पशो-रेवाङ्गत्वं किन्न स्यादिति वाच्यम्। तस्य विशसनात्। अव-दीयमानत्वाच्च हृदयादीनाम्। अवदीयमानं हि हविः। यथा पुरोडाशादि। मध्यात् पूर्व्वार्द्धाच्चावद्यतीति वाक्यात्। हृदया-दीनि चावदीयमानानि न पशुः। हृदयस्याग्रेऽवद्यतीति वाक्यात्। अतो हृदयादीन्येव हवींषि। पशुस्तु प्रकृति-द्रव्यम्।

---

तत्कथं व्रीहीणां यागोपकारकत्वमुच्यमानमुपपद्यते इत्याशङ्कां निराकरोति न चेति। उत्पत्तिशिष्टेति। उत्पत्तिविधिविहितेत्यर्थः। पुरोडाशावरुद्ध पुरोडाशद्रव्येण द्रव्याकाङ्क्षा-रहिते। पुरोडाशप्रकृतितया पुरोडाशोपादानकारणतया। उपपत्तेः परम्परया यागोपकार-कत्वस्योपपत्तेः। तत्र दृष्टान्तमाह पशोरिवेति। यथा पशोर्हृदयादिरूपहविः प्रकृतितया पशुना यजेतेति यागाङ्गत्वमुपपन्नं तथा प्रकृतेऽपीति।

तत्र साक्षादेव पशोरङ्गत्वशङ्कामपाकरोति न चेति। विशसनात् वधात्। वधेन-पशुनाशात् कथं तस्य कारणत्वसम्भव इति भावः। ननु पशुपदं पशुगतनिखिलावयवपरमित्यत आह अवदीयमानत्वाच्चेति। कर्त्तनेन खण्डखण्डीक्रियमाणत्वादित्यर्थः। हृदयादीनामवदीय मानत्वेऽपि कथं निखिलावयवस्य न हविष्ट्वमित्यत्राह अवदीयमानं हीति। अवदीयमानस्यैव हविष्ट्वे दृष्टान्तमाह यथेति। पुरोडाशादीति। यथा अवदीयमानं पुरोडाशादिद्रव्यमेव हविर्न सर्व्वं तथेत्यर्थः। तस्यावदीयमानत्वे प्रमाणमाह मध्यादिति। मध्यात् पूर्व्वार्द्धाच्चावदाय खण्डखण्डं विधाय तेन जुहोतीत्याशयः। हृदयादीनामेवावदीयमानत्वं प्रमापयितुमाह हृदयादीनि चेति। हृदयस्याग्रेऽवद्यतीति। यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेत्युप-क्रम्याम्नानात् हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इति वाक्यादित्यर्थः। अत इति। पशोर्हृदयादीन्यवदाय तेन जुहोतीति प्राप्तेरित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम्। तस्य जीवत एव पर्य्यग्निकृतं पात्नीवतमुत्सृजतीत्युत्सर्गविधानात्। यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम्।

एवं व्रीह्योऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति। आरुण्यस्यापि क्रयाङ्गत्वं तृतीयाश्रुत्या। न चामूर्त्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम्। एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः।

व्रीहीन् प्रोक्षतीति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्। स्वरूपे आनर्थक्यात्। व्रीहिस्वरूपस्य प्रोक्षणं विनानुपपत्त्यभावात्। किन्त्वपूर्व्वसाधनत्व-

---

एवञ्च यत्रावदानादिश्रुतिर्नास्ति तत्र परम्परयोपकारकत्वे प्रमाणाभावात् साक्षादेव पशोरङ्गत्वमित्याह पात्नीवतेति। जीवत एवेति। उत्सर्गविधानादित्यन्वितम्। पर्य्यग्निकृतमिति। त्वाष्ट्रं पात्नीवतमालभेतेत्युपक्रम्येत्यादिः। पर्य्यग्निकरणञ्च मन्त्रविशेषेण ज्वलदङ्गारभ्रामणेन संस्करणम्। इति अनया श्रुत्या।

एवं तद्वत्। प्रकारान्तरेण परम्परयोपकारकत्वं दर्शयति आरुण्यस्येति। अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीति ज्योतिष्टोमप्रकरणीयश्रुतिबोधितस्येति शेषः। क्रयाङ्गत्वं सोमक्रयोपयोगित्वम्। अमूर्त्तस्येति। गुणपदार्थत्वादारुण्यस्येति भावः। एकहायनीति। एकहायनीरूपं यत् द्रव्यं गवात्मकं तस्य परिच्छेद इतरव्यावर्त्तनं तद्द्वारेत्यर्थः। तदुपपत्तेः क्रयाङ्गत्वोपपत्तेः।

द्वितीयाश्रुत्युदाहरणमाह व्रीहीनिति। व्रीह्यङ्गत्वं व्रीह्युपकारकत्वम्। ननु यथा व्रीह्यादेर्यागाङ्गत्वं यागस्वरूपोत्पादकत्वं तथा प्रोक्षणस्य व्रीह्यङ्गत्वं किं व्रीहिस्वरूपोत्पादकत्वमित्यत आह तच्चेति। आनर्थक्यान्निष्प्रयोजनत्वात्। प्रोक्षणं विनापि व्रीहिस्वरूपस्य सिद्धत्वमित्येवानर्थक्ये हेतुमाह व्रीहिस्वरूपस्येति। तर्हि प्रोक्षणस्य व्रीह्यङ्गत्वं किंरूपमित्यत आह किन्त्विति। अपूर्व्वेति। प्रोक्षणेन व्रीहीणां संस्काराधाने कृते यदपूर्व्वसाधनत्वं तन्निबन्धनमेव प्रोक्षणस्य व्रीह्युपकारकत्वमित्यर्थः। प्रोक्षणस्य व्रीहीणामपूर्व्वसाधनतोत्पादकत्वे अन्वयव्यतिरेकौ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रयुक्तम्। यदि व्रीहिषु प्रोक्षणं क्रियते तदा तैर्यागेऽनुष्ठिते अपूर्व्वं भवति नान्यथेति। अतः प्रकरणसहकृततया द्वितीयया श्रुत्या तण्डुलनिर्वृत्तिप्रणाल्या यदपूर्व्वसाधनत्वं तदङ्गत्वं प्रोक्षणस्योच्यते इति।

एवं सर्व्वेष्वप्यङ्गेषु अपूर्व्वप्रयुक्तत्वं वेदितव्यम्। एवमिमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्। यत्तु वाक्यीयोऽयं विनियोग इति तन्न तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं भवति तावल्लिङ्गाद्रशनामात्राङ्गमेव स्यात्। स्योनन्ते सदनं कृणोमीत्यस्येव सदनाङ्गत्वम्। श्रौतविनियोगपक्षे तु

---

दर्शयति यदीति। प्रकरणीति। एतेन यद्यागप्रकरणीया प्रोक्षणश्रुतिस्तद्यागापूर्व्वसाधनत्वं प्रोक्षणेन क्रियते इति सिध्यति। प्रणाल्या परम्परया। प्रोक्षितस्यावघातस्तेन तण्डुलनिष्पत्तिस्ततः पेषणं ततः पुरोडाशनिष्पत्तिस्ततो होमस्तस्मादपूर्व्वमित्येवंरूपयेति यावत्।

सर्व्वेषु अवघातादिषु। द्वितीयाश्रुतेरुदाहरणान्तरमाह एवमिति। प्रोक्षणस्यापूर्व्वसाधनत्वप्रयुक्तमङ्गत्वमिव मन्त्रस्यापूर्व्वसाधनताप्रयुक्तमङ्गत्वमित्यर्थः। इमामिति। ऋतस्य सत्यफलस्य इमां रशनां बन्धनरज्जुम् अगृभ्णन् गृहीतवन्त इत्यर्थः। इति अनेन मन्त्रेण। अश्वाभिधानीमश्वरशनामादत्ते गृह्णीयादित्यर्थः। अश्वाभिधान्यङ्गत्वम् अपूर्व्वसाधनताप्रयुक्तं तदुपकारकत्वम्। मन्त्रान्तरेणाश्वाभिधानीं गृहीत्वा यागानुष्ठाने कृते अपूर्व्वानुत्पत्तेः। मन्त्रस्याश्वाभिधानीग्रहणे विनियोगस्य वाक्यविनियोगत्वं निराकरोति यत्त्विति। लिङ्गस्य मन्त्रार्थप्रकाशनसामर्थ्यस्य। बलीयस्त्वेनेति। बलीयस्त्वं पश्चादुपपादयिष्यते। रशनामात्राङ्गत्वं पश्वन्तररशनाग्रहणस्याप्यङ्गत्वम्।

दृष्टान्तमाह स्योनमिति। अस्य एतन्मन्त्रस्य। इवेति। यथा मन्त्रलिङ्गात् मन्त्रपूर्व्वांशस्य सदने विनियोगो न पुनरंशान्तरादुभयत्र समग्रमन्त्रविनियोगस्तद्वदित्यर्थः। तावच्छुत्येति। अश्वा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यावल्लिङ्गद्वयनामाबाङ्गत्वं तावच्छ्रुत्वा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववत् अशक्ताभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याशक्ताभिधान्यङ्गत्वम् । तस्माच्छ्रौत एवायं विनियोगः ।

यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्ति विनियोगो ज्ञेयः ।

पशुना यजेतेत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधान श्रुतेः । एकपदश्रुत्या च यागाङ्गत्वम् ।

---

भिधान्यां विनियोगः क्रियत इत्यन्वयः । लिङ्गाच्छ्रुतेर्बलवत्त्वे दृष्टान्तमाह ऐन्द्र्येति । श्रुतेर्बलवत्त्वबीजञ्चाग्रे प्रदर्शयिष्यते ।

सप्तमीश्रुतेरुदाहरणमाह यदाहवनीय इति । आहवनीयः संस्कारविशेषसंस्कृतो वह्निः । होमाङ्गत्वमिति । आहवनीयं विना होमापूर्व्वं न स्यादिति भावः । विभक्तिश्रुत्या चतुर्थ्यादिश्रुत्या । अत्र विभक्तिपदं कारकविभक्तिपरमिति कश्चित् । अन्ये तु विभक्तिमात्रपरमित्याहुः । अतएव शास्त्रदीपिकायां षष्ठीश्रुत्यावगम्यत इति वाक्येन षष्ठ्या अपि श्रुतित्वमभिहितम् ।

विभक्तिरूपां विनियोक्त्रीमुदाहृत्य समानाभिधानरूपां तामुदाहरति पशुनेति । समानेति । समानमेकं यदभिधानमुक्तिस्तद्रूपश्रुत्येत्यर्थः । तथाच पशुनेत्यत्र तृतीयैकवचनरूपा या एका उक्तिस्तयैव एकत्वपुंस्त्वे करणकारकञ्चोच्यते । अत एकोक्तिगम्यत्वरूपसन्निकर्षात् एकत्वपुंस्त्वयोः करणकारकाङ्गत्वं करणीभूतस्य पशोरेकत्वपुंस्त्वबोधकतयाऽन्तरव्यावर्त्तकत्वमिति भावः । पशुनेत्यत्र विभक्त्यंशे समानाभिधानश्रुतिमुदाहृत्य यजेतेत्यत्रापि विभक्त्यंशे तामुदाहरति यजेतेति । आख्यातेति । ईतप्रत्ययस्य प्रथमपुरुषैकवचनतया एकत्वसंख्या आर्थीभावना चोच्यते । तयोश्च एकोक्तिप्रतिपाद्यत्वेन सन्निहितत्वादेकत्वसंख्याया आर्थभावनोपकारकत्वमेकाभिधानश्रुतिसिद्धमित्यर्थः । तथाच यागात्मकव्यापारनिचयस्य एकक्रतित्वाप्यत्वं स्यात् । एवञ्च एकोपक्रमेण यागस्य कियन्तमंशं निर्वर्त्य तद्दिनकर्त्तव्यश्राद्धादिरूपकर्म्मान्तरं समाप्य आरब्धयागस्य शेषांशसमापने न यागसिद्धिः । उपक्रमभेदेन क्रतिभेदादिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न चामूर्त्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम्। कर्त्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्त्ता चाक्षेपलभ्यः। आख्यातेन हि भावनोच्यते। सा च कर्त्तारं विनानुपपन्ना समाक्षिपति।

ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्त्तेति। आख्यातवाच्य एव किं न स्यात्। आख्यातश्रवणे भावनाया इव कर्त्तुरपि प्रतिपत्तेः। न च भावनयैवाक्षेपसम्भवे किमिति तद्वाचकत्वं कल्पनीयमिति साम्प्रतम्। तथा सति आख्यातवाच्यकर्त्रैव

---

अत्रैव यजेतेति पदे एकपदश्रुत्युदाहरणं दर्शयति एकपदेति। एकपदं यजेतेति लिङन्तपदं तद्रूपया श्रुत्या। यागाङ्गत्वम् आख्याताभिहितसङ्ख्याया इत्यनुषङ्गः।

अमूर्त्तायाः सङ्ख्याया यागाङ्गत्वानुपपत्तिशङ्कामपाकरोति न चेति। अमूर्त्तायाः गुणपदार्थत्वेन मूर्त्तिरहितायाः। तस्याः एकत्वसङ्ख्यायाः। कथमिति। अमूर्त्तस्य वस्तुनः स्वातन्त्र्येण विनियोगासम्भवादिति भावः। यागाङ्गत्वं यागोपकारकत्वम्। निराकरणे हेतुमाह कर्त्तृपरिच्छेदेति। कर्त्तुरितरव्यावर्त्तनद्वारेणेत्यर्थः। तदुपपत्तेः यागाङ्गत्वोपपत्तेः। तथाच यथा एकत्वपुंस्त्वावच्छिन्नः पशुः करणं, तथा कर्त्ताप्येकत्वावच्छिन्न एवेति भावः। स एव यागस्य, बहुकर्तृकत्वन्तु विशेषविधिमहिम्नैव।

ननु वाक्ये कर्तृपदाश्रवणात् एकत्वसङ्ख्यायाः कथं तत्परिच्छेदकत्वसम्भव इत्यत आह कर्त्ता चेति। आक्षेपेति। आक्षेपेण आकर्षणेन लभ्यः प्राप्य इत्यर्थः। कः कर्त्तारमाक्षिपेदित्यत आह आख्यातेन हीति। सा भावना। कर्त्तारं विनेति। अयमाशयः। भावना कृतिः सा च चेतनव्यापारविशेषरूपा। अतः स्वाश्रयचेतनसाकाङ्क्षत्वेन शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति न्यायात् यावत् कर्त्ता नोपादीयते तावदाख्यातोपस्थापितापि भावना वाक्यार्थपरिसमाप्तिमपारयन्तीकर्त्तुं कर्त्तारमध्याहारयत्येवेति भावनैव कर्त्तारमाकर्षतीति।

ननु कर्त्तुर्नाक्षेपलभ्यत्वं किन्तु आख्यातवाच्यत्वमेवेत्याशङ्कते नन्विति। आख्यातवाच्यत्वे हेतुमाह आख्यातश्रवण इति। कर्त्तुरपीति। यत् यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यमिति नियमादिति भावः। आक्षेपादेव कर्त्तुर्लाभसम्भवे कथमाख्यातस्य तद्वाचकत्वकल्पनागौरवमित्याशङ्कां निराकरोति न चेति। साम्प्रतमित्यनेनान्वितम्। साम्प्रतं युक्तम्। यदि तथा

भावनाक्षेपसम्भवे तद्वाचकत्वमपि न स्यात्। किञ्च भावनाया न केवलं कर्त्रैव सम्बन्धः। कारकान्तरेणापि सम्बन्धात्। अतः सा न झटिति कर्त्तारमाक्षिपेत् विशेषाभावात्। कर्त्ता तु भावनयैव सम्बद्धो न कारकान्तरेण। गुणानाञ्च परार्थत्वाद-सम्बन्धः समत्वात् स्यादिति न्यायात्। अतः स झटिति तामाक्षिपेदिति स एवाख्यातवाच्यः। भावना तु आक्षेपलभ्यैव किन्न स्यात्।

किञ्चैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्। तेषामपि कर्त्तृवदाक्षेपलाभसम्भवात्। किञ्च यदि

---

भवन्मते कर्त्तुराख्यातवाच्यभावनयां आक्षेपसम्भवे आख्यातस्य कर्तृवाचकत्वानङ्गीकारस्तथा-स्मन्मतेऽपि भावनाया आख्यातवाच्यकर्त्रा आक्षेपसम्भवे आख्यातस्य भावनावाचकत्वानङ्गीकारोऽपि सम्भवतीत्याह तथा सतीति।

अत्र विनिगमनामाह किञ्चेति। सा भावना। विशेषाभावादिति। कर्तुर्झटित्याक्षेपे विशिष्टप्रमाणाभावादित्यर्थः। कर्त्तुः कारकान्तरसम्बन्धाभावे हेतुमाह गुणानामिति। गुणानामप्रधानानां परार्थत्वात् प्रधानोपकारकत्वात् असम्बन्धः परस्परं नान्वयः। समत्वात् परस्परं गुणप्रधानभावाभावादित्यर्थः। तथाच सर्व्वेषां कारकाणां क्रियामात्रसापेक्षत्वेन क्रियामात्रोपकारकत्वात् परस्परं गुणप्रधान भावाभावाच्च न कर्त्तृकारकेण कारकान्तरं सम्बध्यत इति भावः। अत इति। कर्त्तुर्भावनामात्रसम्बन्धादित्यर्थः। स कर्त्ता। तां भावनाम्। स एवेत्येवकारेण भावना नाख्यातवाच्येति दर्शितम्। आक्षेपलभ्या कर्त्तृक्तताकर्षणादवगम्या।

यदि भावनया आक्षेपसम्भवादाख्यातस्य कर्त्तृवाचकत्वं नाभिमन्यते तदा कर्त्तुरिव करणादीनामपि तथैवाक्षेपसम्भवात् तृतीयादीनामपि करणादिवाचकत्वं नाङ्गीक्रियेतेत्याह किञ्चेति। एवमिति। कर्त्तृकारकस्य भावनाक्षेपलभ्यत्वे सतीत्यर्थः। कर्त्तुः शब्दवाच्यत्वाभावे आख्यातैकवचनलभ्यमेकत्वमपि कर्त्रन्वयि न स्यात्। तथा सति एकत्वसङ्ख्यायाः कर्त्तृपरिच्छेदद्वारा यागाङ्गत्वाभिधानमसङ्गतं स्यादित्येव दूषणमाह। किञ्चेति कर्त्रन्वये बाधकमाह नहीति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कर्त्ता न वाच्यः स्यात् कथमेकत्वं तेनान्वियात्। न हि शाब्द मशाब्देनान्वेतीति युक्तम्। अन्यथा ऊहादिलोपप्रसङ्गः। किञ्च देवदत्तः पचतीति सामानाधिकरण्यं न स्यात्। न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते। एकार्थनिष्ठत्वाभावात्। कर्तृवाचकत्वे तूपपद्यत एव।

लः कर्त्तरीति व्याकरणस्मृतिविरोधस्तु कर्त्तुरनभिधेयत्वे स्पष्ट

---

शाब्दं शब्दादुपस्थितं वस्तु अशाब्देन अर्थाक्षिप्तेन पदार्थेन अन्वेति अन्वयमर्हतीति इति न युक्तमित्यर्थः। अन्यथेति। शाब्दस्याशाब्देनान्वयाभ्युपगमे इत्यर्थः। ऊहादीनामित्यादि-पदादनुषङ्गपरिग्रहः।

तथाच विकृतिषु प्राकृतमन्त्रे पठ्यमाने यत् यत् पदमसमवेतार्थं तत्परित्यागेन समवेतार्थं पदपरिकल्पनमूहपदार्थः। अनुषङ्गोऽपि वाक्यान्तरे जनितान्वयबोधस्य पदस्य वाक्यान्तरे अन्वयार्थानुसन्धानम्। एतच्च ऊहस्थले विकृतौ यत् यत् पदमसंलग्नार्थं तत्तत्पदपरित्याग एवास्तु। संलग्नार्थकपदकल्पनन्तु न स्यात्। तत्पदार्थस्य अशाब्दत्वेऽपि अर्थाक्षिप्तत्वेन वाक्य-घटकपदार्थस्यान्वयसम्भवात् एवमनुसङ्गस्थलेऽपि वाक्यान्तरीयपदार्थस्योपस्थितत्वेन वाक्यान्तरे तत्पदान्वयमन्तरेणापि तद्वाक्यघटकपदार्थस्यान्वयसम्भवात् तत्पदस्यान्वयार्थानुसन्धानमपि नाव श्यकमिति भावः। कर्त्तुराक्षेपलभ्यत्वे दूषणान्तरमाह किञ्चेति। देवदत्तः पचतीति। इति अत्र। देवदत्तपदाख्यातपदयोरिति यावत्। सामानाधिकरण्यं विभिन्नरूपेणैकार्थबोधक-त्वम्। सामानाधिकरण्यानुपपत्तौ हेतुमाह एकार्थेति। एकार्थबोधकत्वाभावादित्यर्थः। यदि देवदत्तपदस्य देवदत्तत्वेन देवदत्तबोधकत्वम्, आख्यातस्य कर्तृत्वेन देवदत्तबोधकत्वं स्यात्तदैव सामानाधिकरण्यं स्यात्। इह तु देवदत्तपदस्य देवदत्तबोधकत्वम् आख्यातस्य तु भावनाबोधकत्वमिति विभिन्नार्थकत्वात् सामानाधिकरण्यं न स्यादिति भावः।

यजेतेत्यत्र कर्त्तुराख्यातवाच्यत्वानङ्गीकारे कर्त्तरि वाच्ये आख्यातानुशासनं विरुध्येतेत्याह लः कर्त्तरीति। यद्यपि लः कर्म्मणि च, भावे चाकर्म्मकेभ्य इति पाणिनिसूत्रं, तथापि कर्म्मणि चेति चकारेण कर्त्तरि कृदिति पूर्व्वसूत्रात् कर्त्तरीत्यस्यानुवृत्तेः कर्त्तरि कर्म्मणि चेत्यवश्यवक्तव्य-त्वात् लः कर्त्तरीत्युक्तम्। ल इति लड्लिड्।दीनां दशानामाद्यवर्णमात्रग्रहणेन तद्दशकस्य

SRI JAGADGURU VISHWARADHYA
... SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 1252

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एव। किञ्च कर्त्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः। तृतीया हि अनभिहितयोः कर्त्तृकरणयोर्विहिता। आख्यातेन च कर्त्ता नाभिहित इति कर्त्तृवाचिनो तृतीया स्यादेव। कर्त्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति। तस्या अनभिहिताधिकारत्वात्। देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव। प्रथमाया अभिहितकारकविभक्तित्वात्। प्रातिपदिकार्थमात्रवाचित्वाद्वा।

न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात् प्रथमावैयर्थ्यम्।

---

साधारणी संज्ञा। आद्यचरमावयवग्रहणात् ल इति प्रथमाबहुवचनान्तमिति काशिका। तथाच दश लकाराः कर्मणि कर्त्तरि च स्युः। अकर्मकेभ्यस्तु भावे चकारात् कर्त्तरि च वाच्ये इत्यर्थः। विरोध इति। कर्त्तुराख्यातवाच्यत्वाभावे पाणिनिस्मृतौ कर्त्तरि वाच्ये आख्यातानुशासनविरोधः स्पष्ट एवेति विरोध इति भावः। ननु लः कर्त्तरीत्यत्र वाच्य इति न स्पष्टमवगम्यते। कर्त्तरि आक्षेपलभ्ये इत्यर्थस्यापि सम्भवादित्यत आह किञ्चेति। अनभिधेयत्वे अवाच्यत्वे। कर्त्तृपदस्य तृतीयान्ततापत्तिबीजमाह तृतीया हीति। अनभिहितयोरिति। अनभिहिते इत्यधिकृत्य कर्त्तृकरणयोस्तृतीयेति सूत्रेण कर्त्तरि तृतीयानुशासनादिति भावः। नाभिहित इति। भवन्मते कर्त्तुराख्यातवाच्यत्वानभ्युपगमादिति भावः। तर्हि प्रथमैव कुतः प्राप्नोतीत्यत आह प्रथमा त्विति। अभिहितकारकेति। यस्मिन् वाच्ये विधीयन्ते त्यादितध्यादितद्धिताः। समासो वा भवेद्यत्र स उक्तः प्रथमा भवेदिति कारिकया व्याकरणान्तरसूत्रेण च उक्ते अर्थे प्रथमाविधानादिति भावः। पाणिनिमतेन समाधत्ते प्रातिपदिकार्थमात्रेति। "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे"ति पाणिनिसूत्रेण द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यत इति न्यायात् मात्रपदस्य प्रत्येकमन्वये प्रातिपदिकार्थमात्रे प्रथमाभिहिता। मात्रपदान्वयाच्च यत्र द्वितीया तृतीयादिप्राप्तेरविधेयत्वं तत्रैव प्रथमेति सिद्धम्। एवञ्च कर्त्तुराख्यातवाच्यत्वे कर्त्तुरभिहितत्वेन अनभिहितकर्त्तृकरणविहिततृतीयायाः प्राप्त्यभावात् प्रथमैव स्यादिति भावः।

ननु यदि प्रथमायाः प्रातिपदिकार्थादर्थान्तरं नास्ति, तदा प्रथमावैयर्थ्यमित्याशङ्कां परिहरति न चेति। वैयर्थ्यमित्यनेनान्वितम्। तस्याः साफल्यमुपदर्शयति तस्या इति। किञ्चेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लिङ्गसंख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात्। केवलप्रातिपदिकार्थस्य प्रयोगासाधुत्वाच्च। ततश्च यदि कर्त्ता न वाच्यः स्यात् देवदत्तेन पचतीति प्रयोगः स्यात्। तस्मादाख्यातवाच्यः कर्त्तेति सिद्धमिति पूर्व्वपक्षसंक्षेपः।

अत्राहुः। स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते। अनन्यलभ्यः शब्दार्थ इति न्यायात्। अतएव न गङ्गापदस्य तीरमर्थः। लक्षणयैव प्रतिपत्तिसम्भवात्। अतएव च न वाक्यार्थे शक्तिः। एवञ्चाख्यातवाच्यभावना कर्त्तारं विना नुपपन्ना कर्त्तारमाक्षिपतीत्याक्षेपादेव कर्त्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम्।

न च विनिगमनाविरहः, कृतिमान् हि कर्त्ता, एवञ्च कृतेरेव भावनापरपर्य्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवे,

---

विभक्तिं विना लिङ्गसङ्ख्ययोरप्रतिपत्तेरिति भावः। प्रयोगेति। नापदं शास्त्रे प्रयुञ्जीतेति न्यायादिति भावः। ततश्चेति। यतोऽभिहिते कर्त्तरि प्रथमा, अनभिहिते तु तृतीयेति सिद्धान्तस्तत इत्यर्थः। पूर्व्वपक्षमुपसंहरति तस्मादिति।

सिद्धान्तयति अत्राहुरिति। प्रकारान्तरेण आक्षेपादिना। तेन कर्त्तुराक्षेपलभ्यत्वेन न शब्दार्थत्वमिति दर्शितम्। अत्र प्रमाणमाह अनन्येति। शब्दार्थोऽनन्यलभ्यः अन्यलभ्य शब्देतरलभ्यो न स्यादित्यर्थः। तथाच शब्दादन्येन लभ्यते चेदर्थस्तदासौ शब्दार्थ एव न भवतीति भावः। एतन्न्यायादेव लाक्षणिकार्थस्य न शब्दमुख्यार्थत्वं लक्षणया तदर्थलाभादित्याह अतएवेति। अर्थः शक्योऽर्थः। न वाक्यार्थ इति। वाक्यप्रतिपन्नार्थस्य शब्देतरलभ्यत्वादिति भावः।

एवञ्चेति प्रकारान्तरेण लभ्यस्य शब्दार्थत्वाभावे सतीत्यर्थः। किमिति किन्निमित्तम्। नन्वाख्यातस्य भावनावाचकत्वाङ्गीकारेण कर्त्तुराक्षेपलभ्यत्वस्येव कर्त्तृवाचकत्वाङ्गीकारेण भावनाया आक्षेपलभ्यत्वस्यापि सम्भवात् विनिगमनाविरहेणोभयवाचकत्वमस्त्विति निराकरोति न चेति। भावनाभाववाचकत्वे आश्रयरूपां विनिगमनां निराकरणे हेतुमाह कृतिमान् हीति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न तद्वतः कर्त्तृवाचित्वं कल्पनीयं, गौरवप्रसङ्गात् । न च भावना कारकान्तरेणापि सम्बद्धा तदुज्झित्वा न झटिति कर्त्तारमाक्षिपतीति वाच्यम् । सा हि यथा नियमेन कर्त्रा सम्बद्धा न तथा करणादिकारकान्तरेण । तिष्ठतीत्यादिषु तया तदनाक्षेपात् । अतः प्रथमं सा कर्त्तारमेवाक्षिपति न कारकान्तरम् । अतएव चाख्याताभिहिता संख्या न कारकान्तरेण सम्बध्यते । तस्य प्रथममनुपस्थितेः ।

अतएव तृतीयादिविभक्तीनां करणादिवाचित्वम् । भावनायास्तैः सह नियतसम्बन्धाभावेन तया तेषां नियमेनानाक्षेपात् ।

---

आकृत्यधिकरणेति । आकृतिशक्त्यधिकरणन्यायेनेत्यर्थः । "आकृतिस्तु क्रियार्थत्वा"दिति प्रथमाध्यायतृतीयपादसूत्रेणेति यावत् । तथाच तदधिकरणे जातावेव शब्दशक्तेरङ्गीकारात् भावनात्वमाख्यातपदशक्यम् । तेनभावनाव्यक्तिशक्त्यङ्गीकारे अनन्तशक्तिकल्पनागौरवं परिहृतम् । तद्वती भावनापरपर्य्यायकृतिमत: । गौरवप्रसङ्गादिति । कृतित्वेन शक्तिकल्पनापेक्षया कृतिमत्वेन शक्तिकल्पनायां शक्यतावच्छेदकगौरवादिति भावः । पूर्व्वपक्षयितृवर्णितामाख्यातस्य कर्तृवाचकत्वसाधिनीं विनिगमनामपाकरोति न चेति । तदुज्झित्वा कारकान्तरं परित्यज्य । तथाच कर्त्तुः साधारणाक्षेपलभ्यत्वम् । भावनायास्तुसाधारणाक्षेपलभ्यत्वमिति भावः । अपाकरणे हेतुमाह सा हीति । नियमेन अव्यभिचारेण । न तथा न नियमेन सम्बद्धा । तथाच तिष्ठतीत्यादौ सर्व्वत्रैव कर्त्तुरव्यभिचारात् कर्म्मकरणादीनाञ्च व्यभिचारात् कर्त्रैवाव्यभिचारेण सम्बन्ध इति भावः । तया भावनया । अतएव भावनया कर्त्तुःप्रथमाक्षेपादेव । सङ्ख्या एकवचनादिप्रतिपाद्यैकत्वादिसङ्ख्या । प्रथममिति । तथाच प्रथमोपस्थितेन कर्त्रैवान्वितायाः सङ्ख्यायाः अनन्तरोपस्थितेनान्वयासम्भवादिति भावः ।

ननु करणादीनामपि प्रथममनन्तरं वा आक्षेपलभ्यत्वात् तृतीयादिविभक्तीनां तद्द्योतकत्वमस्तु न तद्वाचकत्वमित्यत आह भावनाया इति । तैः करणादिभिः । नियमेनेति । तथाच नियम सम्बन्धिनं कर्त्तारं विना भावनानुपपत्तेरर्थापत्त्याकर्त्तुर्लभ्यत्वम् । करणादीनान्तु नार्थापत्त्या लभ्यता । अनियतसम्बन्धितया तद्विनापि भावनोपपत्तेः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आख्यातश्रवणात् प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च। न च शाब्दी संख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम्। कर्त्तुर्लक्षणाङ्गीकारात्। यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति। एवं लक्षितः कर्त्ता एकत्वेनान्वेष्यति। अतएव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते। कर्त्तुर्लक्षणाङ्गीकारात्। न च मुख्ये सम्भवति किमिति लाक्षणिकत्वं स्वीकार्य्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात्। अन्यथा, सिंहो देवदत्त इति सामानाधिकरण्यं

---

अतः करणत्वादिबोधनाय तृतीयादेरेव तत्र शक्तिरङ्गीक्रियत इति भावः। करणत्वादिबोधकत्वे प्रमाणमाह आख्यातेति। आख्याताभिहितसङ्ख्यायाः कर्त्रन्वये बाधकं परिहरति न चेति। कथमशाब्देनेति। नहि शाब्दमशाब्देनान्वेतीति न्यायादिति भावः। कर्त्तुर्लाक्षणिकत्वादिति। श्रुतार्थापत्तिलभ्यस्यापि कर्त्तुर्लक्षणया आख्यातवाच्यत्वमपि स्वीकार्य्यम्। यथा यागस्य स्वर्गभावनाकरणत्वानुपपत्त्या अपूर्वस्य श्रुतार्थापत्तिलभ्यत्वेऽपि आख्यातार्थत्वमपि स्वीकृतमिति भावः।

ननु मुख्यार्थेनैव शाब्दान्वयो न लाक्षणिकार्थेनेत्याशङ्कामपनेतुं दृष्टान्तमाह यथेति। अतएव आख्याताभिहितसङ्ख्यायाः कर्त्रन्वयादेव। कर्त्तुराख्यातपदमुख्यार्थत्वसम्भवे लाक्षणिकत्वमन्याय्यमिति दूषणमपनयति नचेति। किमितीति। तथाच कर्त्ता आख्यातपदशक्य एव स्यात् यद्यपि आख्यातस्य भावनायां कर्त्तरि च शक्तौ शक्तिद्वयकल्पनागौरवं स्यात् तथापि शब्दार्थस्यानन्यलभ्यत्वानुरोधेन तस्या इष्टत्वादिति भावः। अनन्यलभ्येति। शब्दार्थस्य अनन्यलभ्यत्वस्येत्यर्थः। व्यवस्थापितत्वादिति। क्वचिच्छक्त्या क्वचिच्च लक्षणया शब्दार्थस्य अनन्यलभ्यताया व्यवस्थापितत्वादित्यर्थः।

अन्यथेति। लाक्षणिकार्थेन शब्दार्थस्यान्वयाङ्गीकारे इत्यर्थः। मुख्यं न स्यादिति। विभिन्नरूपेणैकधर्म्मिबोधकत्वं शब्दसामानाधिकरण्यं, तच्च द्वयोः शब्दार्थयोरभेदान्वयप्रयोज्यम्। तच्च प्रकृते न सम्भवति। सिंहत्वदेवदत्तत्वयोरेकाधिकरणवृत्तित्वा सम्भवात्। अतः शौर्य्यादिगुणयोगेन सिंहपदे सिंहसदृशे लक्षणया देवदत्तस्य सिंहसदृशाभेदप्रतीतेः सामानाधिकरण्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मुख्यं न स्यात्। किञ्च आख्यातवाच्यः कर्त्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम्। तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्। शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात् देवदत्तशब्देनच द्रव्यमात्राभिधानात्। अतश्च भिन्नार्थनिष्ठत्वात्तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्। किन्तु लाक्षणिकमेवेति न कश्चि द्विशेषः।

---

मुपपद्यते। यदि लाक्षणिकार्थेन शब्दान्तरमुख्यार्थस्यान्वयो नाभ्युपगम्यते तदा लाक्षणिकसिंह-सदृशार्थेन देवदत्तस्याभेदान्वयासम्भवात् सिंहपदस्य सिंहसदृशे मुख्यत्वमेव स्वीकार्य्यमिति भावः।

मन्वत्रेष्टापत्तिरित्यत आह किञ्चेति। तृतीयावदिति। कर्तृकरणयोस्तृतीयेति व्याकरण-सूत्रेर्यथा तृतीयया कर्तृकारकाभिधानं तद्वदित्यर्थः। निष्कृष्टेति। षण्णामेव कारकाणां शक्तिमात्रत्वेऽपि कर्तृकारकस्य कारकविशेषतया निर्द्धारितशक्तिमात्ररूपत्वमिति भावः। शक्तिमात्रेति। मात्रपदेन शक्तिमद्द्रव्यव्यावृत्तिः। यदुक्तं वैयाकरणैः।

कारकं शक्तिस्तस्यानेकरूपत्वात्। द्रव्यन्तु शक्तिमत्। न तु शक्तिस्तस्यैकस्वभावस्या-नेकरूपतायाः अयुक्तत्वात्। द्रव्ये कारकव्यवहारस्तु शक्तिशक्तिमतोर्भेदस्याविव-क्षितत्वादिति।

तथाच निष्कृष्टं निर्द्धारितं यत् शक्तिमात्रं तद्रूपस्य कर्तृकारकस्याभिधानादित्यर्थः। मात्र-पदव्यवच्छेद्यमाह शक्तिमदिति। आकृत्यधिकरणेति। तदधिकरणे द्रव्यशक्तिनिराकरणादिति भावः। देवदत्तेति। अनुगतधर्मवद्बोधकशब्दानान्तु तद्धर्मवत्त्वे शक्तिः। तत्तद्व्यक्तिबोधक-शब्दानान्तु अनुगतधर्माभावादगत्या व्यक्तावेव शक्तिरित्यङ्गीकारात् देवदत्त शब्दस्य तद्व्यक्तिमात्रबोधकतया द्रव्यमात्राभिधायकत्व मेवेति भावः।

भवतु तेन सामानाधिकरण्यस्य कुतो न मुख्यत्वमित्यत आह अतश्चेति। भिन्नार्थनिष्ठत्वात् देवदत्तपदाख्यातपदयोरेकधर्म्मिबोधकत्वाभावात्। लाक्षणिकमिति। आख्यातस्य शक्ति-मद्द्रव्यलाक्षणिकत्वावश्यकत्वादिति भावः। न कश्चिदिति। अस्मन्मते आख्यातपदे कर्तृलक्षणा यत् तन्मतेऽपि शक्तिमद्द्रव्ये लक्षणेति मुख्यार्थस्य लाक्षणिकार्थेनान्वये कोऽपि विशेषो नास्तीति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नच लः कर्त्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्त्तेति वाच्यम्। न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः। तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात्। भवतु वा स्मृतिगम्यस्तथापि नेयं स्मृतिः कर्त्तुराख्यातवाच्यत्वे प्रमाणं किन्तु कर्त्तुरेकत्वे एकवचनात्मको लकारः, द्वित्वे द्विवचनात्मकः, बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम्। द्व्येकयोर्द्विवचनैकवचने। बहुषु बहुवचनम्। इत्यनेनास्याः स्मृतेरेकवाक्यत्वात्।

---

कर्त्तुराख्यातपदानभिधेयत्वे लः कर्त्तरीति व्याकरणस्मृतिविरोध इत्युक्तदूषणं निराकरोति नचेति। नहीति। वाच्यवाचकभावस्य व्याकरणस्मृत्यधीनत्वे मण्डपादिपदस्य मण्डपानाश्रयपुरुषवाचकत्वं स्यादिति भावः। तर्हि वाच्यवाचकभावस्य किं प्रमाणकत्वमित्यत्राह तस्येति। तत्तदर्थसत्वे तत्तत्पदप्रयोगोऽन्वयः। तत्तदर्थाभावे तत्तत्पदप्रयोगाभावो व्यतिरेकः। नानार्थशब्दवत् निरूढलाक्षणिकस्थले अन्वयव्यतिरेकसत्वेऽपि नानाशक्तिकल्पनागौरवापेक्षया एकत्र मुख्यत्वमपरत्र लाक्षणिकत्वमित्येवं मुख्यत्वलाक्षणिकत्वयोरवश्याङ्गीकरणीयतया तत्र वाच्यवाचकभावावगमे न्यायोऽपि सहकारीति ज्ञापनाय न्यायसहितेत्युक्तम्।

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इत्यनेन व्याकरणस्यापि व्यवहारवत् शक्तिग्राहकत्वोक्तेराह भवतु चेति। इयं स्मृतिः "लः कर्मणि च भावे चाकर्मकेभ्यः" इति पाणिनिसूत्ररूपा। कर्त्तुराख्यातवाच्यत्व इति। तथाच पाककर्त्रादेः पाचकादिपदवाच्यत्वे व्याकरणस्मृतेः प्रमाणत्वेऽपि लः कर्मणि चेति व्याकरणस्मृतेः कर्त्तुराख्यातवाच्यत्वे न प्रमाणत्वमिति भावः।

तर्हि कस्मिन्नर्थे प्रमाणमित्यत्राह किन्त्विति। द्व्येकयोरिति। द्वित्वैकत्वयोरित्यर्थः। बहुषुबहुत्वे। इत्यनेन सूत्रद्वयेनेति शेषः। अस्याः लः कर्मणि चेति पाणिनिस्मृतेः। एकवाक्यत्वादिति। एकतात्पर्यकत्वादित्यर्थः।

अयमाशयः। सुप्तिङ्क्षेकैकविभक्तेरेकवचनादिसंज्ञा। तेषाञ्चैकवचनादीनामेकत्वाद्यर्थेषु विधानादेकत्वादिकमर्थः। तत्र सुपां कर्मादिकमप्यर्थः। द्वितीयादीनां



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत्तूक्तं कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति। तत्र तृतीया हि कर्तृप्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा। तत्र कर्ता तु भावनाक्षेपाल्लभ्यत इति न तत्र तृतीयापेक्षा। तत्संख्या तु आख्यातेनैव प्रतीयत इति न तत्राप्यपेक्षा। यथाहुः—

संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्त्तते।
उभयस्यात्र तत्सिद्धं भावना लिङ्विभक्तितः॥ इति।

---

**कर्माद्यर्थेषु विधानात्।** एवञ्च कर्मत्वादौ स्वादिविभक्तीनामेकवचनादिविधाननियमाकाङ्क्षायामर्थान्तरस्य कर्मादेरेव एकत्वादौ एकवचनादीनि प्रयोक्तव्यानि अनभिहितत्वादिति सिद्धान्तितम्। यथोक्तं काशिकायाम्—

"बहुषु बहुवचनं भवति बहुत्वमस्य वाच्यं भवतीति यावत्। कर्मादयोऽप्यर्थे विभक्तीनामर्था वाच्यास्तदीये बहुत्वे बहुवचनं कर्मादिषु बहुषु बहुवचनमित्यर्थः" इति।

तर्हि तिङ्विभक्तीनामेकवचनादिकं कर्तृत्वादौ प्रयोक्तव्यमित्याकाङ्क्षायां लः कर्मणीति सूत्रेण तिङामपि कर्तृत्वादिकं वाच्यमित्यङ्गीकृतम्। तदुक्तं महाभाष्ये—

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङामिति।

व्याख्यातञ्च तत्र तथैव—

"सुपां संख्या चैवार्थः कर्मादयश्च। तथा तिङा" मिति।

एवञ्च सुपामिव तिङामपि अनन्यलभ्य कर्मादेरेकत्वादौ एकवचनादिकं प्रयोक्तव्यमित्येवं रीत्या प्रयोगसाधनाय लः कर्मणीति सूत्रेण तिङां कर्मकर्त्राद्यर्थकत्वमङ्गीकृतं न तु वस्तुतो वाच्यवाचकभावसम्बन्धबोधनार्थमिति।

आपत्त्यन्तरं निराकरोति यत्तूक्तमिति। तृतीयायाः प्रयोजनद्वयमुपन्यस्य तदुभयस्याप्यनपेक्षां दर्शयन्नानर्थक्यं प्रतिपादयति तृतीया हीति। तत्र प्रमाणमाह यथाहुरिति। संख्यायामिति। संख्यायामेकत्वादौ कारके कर्तृत्वादौ च धीर्बुद्धिर्विभक्त्या तृतीयादिविभक्त्यैव प्रवर्त्तते उत्पद्यते। अत्र यजेतेत्यादौ तु तदुभयमेव भावनाक्षेपात् लिङ्विभक्तितश्च सिद्धम्। अतो विभक्तेर्निष्प्रयोजनतया प्रातिपदिकार्थमात्रे प्रथमेति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत्र तु नाख्यातेन तद्गता संख्योच्यते तत्र भवत्येव तृतीया। यथा देवदत्तेन ओदनः पच्यत इति। तस्मात् कर्तुरनभिधाने तृतीयानुशासनम् इत्यलमतिविस्तरेण। प्रकृतमनुसरामः। तत् सिद्धस्त्रिविधः श्रुतिविनियोगः।

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम्। लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति, किन्तु कल्प्यः। यावच्च तैर्विनियोजकः कल्प्यते तावत् प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः प्राबल्यम्।

अत एव ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यद्यपि लिङ्गात् ऐन्द्र्या

---

तृतीयाविधानस्य विषयं दर्शयति यत्र त्विति। नाख्यातेनेति। कर्तुश्च आख्यात-साध्यत्वे इति भावः। तद्गता कर्तृगता। उदाहरति यथेति। तादृशप्रयोगानुरूपम् उप-संहरति तस्मादिति। अनभिधाने आख्यातानभिधेयत्वे। आशङ्किताभावश्यकविस्ताराद्विर-मति इत्यलमिति। प्रकृतं श्रुतिविनियोगम्।

तृतीयाध्यायतृतीयपादे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य-मर्थविप्रकर्षात्" इति सूत्रेण श्रुत्यादीनां पूर्वपूर्वापेक्षया परपरस्य दौर्बल्यं प्रतिपादयता श्रुतेः लिङ्गादिभ्यः सर्वेभ्यः प्राबल्यमुक्तं तदिदानीमुपदर्शयति सेयमिति। लिङ्गादिभ्य लिङ्गादि-समाख्यापर्यन्तेभ्यः। प्रत्यक्षः शब्दबोधितः। विनियोजकः विनियोगबोधकः। शब्दाभावे कथमेषां विनियोजकत्वाङ्गीकार इत्यत आह किन्त्विति। कल्प्योऽर्थापत्त्यनुमानादिना साध्यः। ननु लिङ्गादिकल्पनीय एव शब्दो विनियोजकः कुतो नाद्रियत इत्यत आह यावदिति। यावता कालेनेत्यर्थः। तैर्लिङ्गादिभिः। विनियोजकः अनेनेदं कर्त्तव्यमिति वाक्यविशेषः। तेषां लिङ्गादीनाम्। कल्पकत्वशक्तिः कल्पनासामर्थ्यम्। विहन्यत इति। प्रागुत्पन्नप्रत्यक्ष-श्रुतिजन्यप्रतीतेर्विपरीतार्थकश्रुत्यनुमित्यादिप्रतिबन्धकत्वादिति भावः।

अत एवेति। श्रुतेर्लिङ्गादिभ्यः प्राबल्यादित्यर्थः। ऐन्द्र्येति। ऐन्द्र्या इन्द्रप्रकाशिकया ऋचा गार्हपत्यमग्निविशेषमुपतिष्ठत इत्यर्थः। अत्र उपस्थानस्य गार्हपत्यकर्मकत्वं द्वितीया-श्रुत्यावगम्यते। ऐन्द्र्येति तृतीयाश्रुत्या ऋचो गार्हपत्योपस्थाने करणत्वं प्रतीयते। तत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इन्द्रोपस्थानाङ्गत्वं कल्पते तावत् प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानार्थत्वं क्रियत इति ऐन्द्री गार्हपत्योपस्थानाङ्गम्।

सामर्थ्यं लिङ्गम्। यदाहुः।—

सामर्थ्यं सर्व्वभावानां लिङ्गमित्यभिधीयते। इति।

तेनाङ्गत्वं यथा। बर्हिर्देवसदनं दामीति। अस्य लवनाङ्गत्वम्। स हि लवनं प्रकाशयितुं समर्थः। तच्च लिङ्गं द्विविधम्।

---

प्राथमिकेन ऐन्द्रोतिपदेन इन्द्रप्रकाशकत्वकरणकत्वावगमादिन्द्रोपस्थानस्य प्रथमोपस्थितेस्तद्विरोधेन गार्हपत्यपदमिन्द्रलाक्षणिकमस्त्विति प्राप्ते लिङ्गादीनां श्रुत्यपेक्षया दौर्ब्बल्यं विलम्बेनार्थप्रकाशकत्वादित्युक्तम्। तदेवाह यत यावदिति। यावत् यावता कालेन। लिङ्गात् इन्द्रप्रकाशनसामर्थ्यात्। कल्प्यत इति। यद्यसौ मन्त्र इन्द्रोपासनार्थो न स्यात् तदा अनेन इन्द्रप्रकाशनमनुपपन्नम्। अन्योपस्थानकाले अन्यस्तुतेरनुचितत्वादित्यर्थापत्त्या, अयं मन्त्र इन्द्रोपस्थानकरणम्। इन्द्रप्रकाशकत्वात् बर्हिर्देवसदनं दामीति मन्त्रस्य कुशच्छेदनकरणत्ववदित्यनुमानेन वा गम्यत इत्यर्थः। तावत् तावता कालेन। गार्हपत्योपस्थानार्थत्वं गार्हपत्योपस्थानाङ्गत्वम्। क्रियते प्रतिपाद्यते। अर्थापत्त्यादेर्विलम्बोपस्थापकत्वात् श्रुतेस्तु झटित्युपस्थापकत्वादिति भावः। ऐन्द्री ऋक् तस्या अर्थो विचारविस्तरश्चार्थसंग्रहटीकायामस्माकं तायां द्रष्टव्यः।

लिङ्गं निरूपयति सामर्थ्यमिति। अर्थप्रकाशनसामर्थ्यमित्यर्थः। तत्प्रमापयति यदाहुरिति। सामर्थ्यं शक्तिः। सर्व्वभावानां सर्व्वपदार्थानाम्। तेन शब्दानामपि संग्रहः। सर्व्वशब्दानामिति पाठे तु व्यक्त एवार्थः। लिङ्गस्य विनियोजकत्वं प्रतिपादयति तेनाङ्गत्वं यथेति। बर्हिरिति। देवसदनं देवानां स्थानं बर्हिः कुशं दामि लुनामीत्यर्थः। लवनाङ्गत्वं कुशच्छेदनविनियोज्यत्वम्।

तथाच दर्शपौर्णमासप्रकरणे एतन्मन्त्रमात्रं श्रूयते न पुनरनेन मन्त्रेणैतत् कार्य्यमित्येवं विनियोजिका साक्षात् श्रुतिरस्ति। अतो मन्त्रेण कुशच्छेदनरूपार्थप्रकाशनादेव अनेन मन्त्रेण कुशं छिन्द्यादिति श्रुतिं कल्पयित्वा तद्बलेन कुशच्छेदने तस्य विनियोगोऽवधार्य्यत इति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सामान्यसम्बन्धबोधकप्रमाणान्तरापेक्षं तदनपेक्षञ्च। तत्र यदन्तरेण यन्न सम्भवत्येव तस्य तदङ्गत्वं तदनपेक्षकेवललिङ्गादेव। यथा पदार्थज्ञानस्य कर्म्मानुष्ठानाङ्गत्वम्। न हि अर्थज्ञानमन्तरेणानुष्ठानं सम्भवति।

यदन्तरेण यत्सम्भवति तस्य तदर्थत्वं तदपेक्षम्। यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम्। लवनं हि मन्त्रं विना उपायान्तरेण स्मृत्वा कर्त्तुं शक्यमतो न मन्त्रो लवनस्वरूपार्थः सम्भवति, किन्त्वपूर्व्वसाधनीभूतलवनार्थः। तत्त्वञ्च न सामर्थ्यमात्रादवगम्यते।

---

लिङ्गं विभजति तच्चेति। सामान्येति। यत्प्रमाणान्तरं यागे सामान्यतस्तन्मन्त्रसम्बन्धं बोधयति न पुनस्तद्यागीयकर्म्मविशेषे, तत्प्रमाणान्तरं सामान्यसम्बन्धबोधकम्। तदपेक्षं तत्सापेक्षं न तु तन्नैरपेक्ष्येण यागान्तरीयकर्म्मविशेषेऽपि विनियोजकमित्यर्थः। तदनपेक्षं तथाविधप्रमाणान्तरनिरपेक्षम्। तदनपेक्षलिङ्गादङ्गत्वप्रदेशमनुगमयति तत्रेति। तदनपेक्षेति। तदनपेक्षं सामान्यसम्बन्धबोधकप्रमाणान्तरानपेक्षं यत् केवललिङ्गं तस्मादेवेत्यर्थः। उदाहरति यथेति। पदार्थज्ञानस्य मन्त्रघटकपदार्थज्ञानस्य। कर्म्मेति। कर्म्मानुष्ठानोपकारकत्वमित्यर्थः। अर्थज्ञानस्यानुष्ठानप्रयोजकत्वं साधयति न हीति।

प्रमाणान्तरसापेक्षलिङ्गादङ्गत्वप्रदेशमनुगमयति यदन्तरेणेति। तदर्थत्वं तदङ्गत्वम्। तदपेक्षं सामान्यसम्बन्धबोधकप्रमाणान्तरापेक्षलिङ्गप्रमाणकम्। तदुदाहरणमाह यथेति। उक्तस्य मन्त्रस्य बर्हिर्देवसदनं दामीति मन्त्रस्य। तन्मन्त्रमन्तरेणापि कर्म्मसम्भवं प्रतिपादयन् तदुदाहरणत्वमस्य साधयति लवनं हीति। उपायान्तरेण बर्हिश्छेदनपूर्व्ववर्त्तिकर्म्मानुष्ठानान्तरमेव बर्हिश्छेदनसंस्कारोद्बोधेन। लवनस्वरूपार्थः अर्थज्ञानस्य कर्म्मानुष्ठानोत्पादकत्ववत् न लवनोत्पादकः। तर्हि मन्त्रः किमर्थ इत्यत आह किन्त्विति। अपूर्व्वेति। अपूर्व्वसाधनीभूतं यल्लवनं तदर्थस्तज्जनकः। लवनस्यापूर्व्वसाधनताजनक इति यावत्। अमन्त्रलवनस्यापूर्व्वजनकता न स्यादिति भावः। तत्त्वञ्च अपूर्व्वसाधनीभूतलवनार्थत्वञ्च। सामर्थ्यमात्रात् सामान्यसम्बन्धबोधकप्रमाणान्तरनिरपेक्षकेवललिङ्गात्। अर्थप्रकाशनमात्रे सर्व्वकर्म्माङ्गभूत-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लवनप्रकाशनसमर्थे सामर्थ्यात्। अतोऽवश्यं प्रकरणादिसामान्यसम्बन्धबोधकं वाच्यम्। दर्शपौर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्यते अनेन मन्त्रेण दर्शपौर्णमासापूर्वसम्बन्धि किञ्चित् प्रकाश्यत इति। अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात्।

किन्तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते। तद्धि बर्हिः संस्कारद्वारा अपूर्वसम्बन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते। तस्माद्बर्हिर्देवसदनं दामीत्यस्य प्रकरणाद्दर्शपौर्णमाससम्बन्धित्वावगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम्।

पूषानुमन्त्रणमन्त्राणान्तु यागानुमन्त्रणसमाख्यया यागसामान्यसम्बन्धे अवगते सामर्थ्यात् पूषयागसम्बन्धोऽवगम्यते।

ननु तेषां यावत्समाख्यया पूषयागेन सामान्यसम्बन्धोऽवगम्यते

---

कुशच्छेदनप्रकाशने। सामर्थ्यात् मन्त्रस्य शक्तेः। बोधकान्तरमपेक्षणीयम्। किम्प्रकरणीयोऽयं मन्त्र इत्यत आह दर्शेति। अपूर्वसम्बन्धि अपूर्वजनकम्। किञ्चित् किमपि कार्यम्।

बर्हिर्लवनस्यापूर्वसम्बन्धित्वं साधयति तद्धीति। बर्हिः संस्कारैरिति। अमन्त्रकलूनबर्हिषो असंस्कृतत्वम् असंस्कृतबर्हिषा चापूर्वानिष्पत्तिरिति संस्कारद्वारा अपूर्वजनकत्वं लवनाया-मिति भावः। इति शेषः। तदर्थत्वे बर्हिर्लवनप्रकाशकत्वे। उपसंहरति तस्मादिति।

प्रमाणान्तरसापेक्षलिङ्गस्य उदाहरणान्तरमाह पूषानुमन्त्रणेति। यागानुमन्त्रणेति। यागमनु लक्षीकृत्य मन्त्रोच्चारणं यागानुमन्त्रणम्। तथाच पूषादिमन्त्राणामनुमन्त्रणमन्त्रत्व-मुक्तं तेषां मन्त्राणामनुमन्त्रणशब्दस्य यागीयमन्त्रोच्चारणरूपसमाख्यया यागे विनियोगोऽवगम्यते। परन्तु कस्मिन् यागविशेषे तन्मन्त्रविनियोग इत्यनुपलम्भेऽपि मन्त्राणां तत्तद्देवताप्रकाशकत्वलिङ्गेन तत्तद्देवतायाग एव विनियोगोऽवधारणीय इति पूषानुमन्त्रणमन्त्राणामपि पूषदेवताप्रकाशकत्वलिङ्गेन पूषयाग एव विनियोगो वक्तव्य इति भावः।

अत पूर्वपक्षयति नन्विति। तेषां मन्त्राणाम्। समाख्यया समाख्यासहकृतलिङ्गेन। पूषयागेन सामान्यसम्बन्धः निखिलपूषयागसम्बन्धः। न तु दर्शपौर्णमासीयपूषयागेनैवेति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न, प्रकरणाद्दर्शपौर्णमासाभ्यामिव सामान्यसम्बन्धोऽवगतः । समाख्यातस्तस्य बलीयस्त्वात् । अत एव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात् सान्नाय्योपांशुयाजाङ्गत्वमपीत्युक्तम् । किञ्च यागानुमन्त्रणसमाख्ययापि न पूषयागेन सामान्यसम्बन्धोऽवगम्यते । किन्तु यागमात्रेण । प्रकरणेन तु दर्शपौर्णमासाभ्यामिव विशिष्टेन सम्बन्धोऽवगम्यते । अतः प्रकरणात् प्राप्तेति तत्सम्बन्धस्यैवावगतत्वात् तदर्थत्वमेव तेषां युक्तम् । पूषेति मन्त्रस्य पूषन्वतीति श्रुत्या कथञ्चिदस्याभिधायित्वात् ।

---

भावः । दर्शपौर्णमासाभ्यामिति । पूषानुमन्त्रणमन्त्राणां दर्शपौर्णमासप्रकरणपठितत्वादिति भावः । ननु समाख्यया प्रकरणं बाध्यतामित्यत आह समाख्यात इति । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रे समाख्यायाः सर्वजघन्यत्वादि भावः ।

अत इत्यादिमाह अत एवेति । ब्राह्मणे काण्डे । अयमाशयः । दर्शपौर्णमासकाण्डान्तर्गतं किञ्चित्काण्डं पौरोडाशिकमिति समाख्यायते । यत्र पुरोडाशोपयोगिनो विधयः श्रूयन्ते । पुरोडाशमर्हतीति पौरोडाशिकमिति समाख्यया तत्काण्डगतानां कर्म्मणां पात्राणां मन्त्राणाञ्च पुरोडाशयागोपयोगित्वं प्रतीयते । तस्मिन् काण्डे प्रयाजानामपि विधानात् तेषामपि पौरोडाशिकमिति काण्डसमाख्यया पुरोडाशयागाङ्गत्वमेव प्रतीतं । दर्शपौर्णमासप्रकरणाच्च दर्शपौर्णमासयागाङ्गत्वं प्रतीयते । तत्र यथा प्रकरणस्य समाख्यातो बलवत्त्वात् समाख्यया प्रयाजानां न पुरोडाशयागमात्राङ्गत्वं किन्तु प्रकरणबलात् दर्शपौर्णमासान्तर्गतसान्नाय्योपांशुयागाङ्गत्वमपि इति सिद्धान्तितम्, तथेहापीति ।

समाख्यया बोधितस्यापि प्रकरणेन बाध्यत्वं प्रदर्श्य प्रकृते तु समाख्यया पूषयागाङ्गत्वमपि न बोध्यत इत्याह किञ्चेति । सामान्यसम्बन्धः सामान्यतः पूषयागसाधारण्येन सह सम्बन्धः । यागमात्रेण यागसामान्येन । यागानुमन्त्रणसमाख्यायाः सर्व्वयागविनियोजकत्वादिति भावः । विशिष्टेन विशेषधर्म्मेण । तदर्थत्वं दर्शपौर्णमासार्थत्वम् । पूषदेवताप्रकाशकमन्त्रस्थपूषपदस्य समवेतार्थतामाह पूषन्वतीति । पूष इत्यनिरुक्तस्य रूपम् । कथञ्चिदिति । लिङ्गसत्त्वस्य सर्व्वेष्टिवरासु समानादिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नैवम्। पूषानुमन्त्रणमन्त्रे हि श्रूयमाण एवमवगम्यते पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थ इति। लवनमन्त्र इव लवनप्रकाशनार्थः। न तत्र प्रकरणाद्यपेक्षा येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात्। प्रकरणात्तु दर्शपौर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वाल्लिङ्गस्योपजीव्यत्वेन प्राबल्यम्। अतो लिङ्गात् पूषप्रकाशनार्थत्वे अवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्व्वप्रकाशनार्थत्वं वक्तव्यम्।

किन्तदपूर्व्वमित्यपेक्षायां यागानुमन्त्रणसमाख्यानुगृहीतत्वाल्लिङ्गात् पूषयागापूर्व्वसम्बन्धिदेवताप्रकाशनार्थोऽयमित्यवगम्यते। अतो यद्यपि समाख्यातः प्रकरणं बलीयस्तथापि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि लिङ्गाश्रितत्वेन प्रा-

---

पूर्व्वपक्षं निराकरोति नैवमिति। लवनमन्त्र इवेति। यथा वर्हिर्देवसदनं दामीति मन्त्रे श्रूयमाण एव लवनाभिधानसामर्थ्यादयं लवनप्रकाशनार्थ इत्यवगम्यते। तथा पूषानुमन्त्रणमन्त्रेऽपि श्रूयमाण एव पूषाभिधानसामर्थ्यादयं मन्त्रः पूषप्रकाशनार्थ इति प्रतीयत इत्यर्थः। तत्र पूषप्रकाशनार्थत्वावगमे। येन प्रकरणाद्यपेक्षत्वेन। तेषां प्रकरणादीनाम्। उपजीव्यत्वेन सहकारिविधया आश्रीयमाणत्वेन। तस्माल्लिङ्गस्यैव प्रकरणोपजीव्यत्वेन प्राबल्यमित्याह प्रकरणात्त्विति। तस्य प्रकरणस्य। वाक्येति। प्रकरणाद्वाक्यकल्पनम् एष मन्त्रो दर्शपौर्णमासप्रकरणीयतया तदर्थमिति। मन्त्रलिङ्गस्य च तद्देवतार्थकत्वकल्पनम्। ततः अनेन मन्त्रेण दर्शपौर्णमासदेवता अनुमन्त्रयेदिति श्रुतिकल्पनम्। ततोऽस्य तत्र विनियोग इति भावः। उपजीव्यत्वेनेति। प्रकरणस्य विनियोजकत्वे लिङ्गस्याश्रयणीयत्वादिति भावः। अत इति। प्रकरणस्य दुर्व्वलप्रमाणत्वादित्यर्थः। तन्मात्रप्रकाशनं यागदेवतात्वविशेषणरहितपूषप्रकाशनम्। अपूर्व्वेति अपूर्व्वजनकपूषदेवताप्रकाशनार्थत्वमित्यर्थः।

अपेक्षायामिति। यथाच यथाविधाकाङ्क्षावशादेव समाख्या लिङ्गेन सहकारिविधया आश्रीयत इति भावः। सम्बन्धीति जनकेत्यर्थः। बाधितत्वादिति। तथाच

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बल्यात् सैव सामान्यसम्बन्धे प्रमाणम् । दुर्बलस्य प्रबलाश्रितस्य प्राबल्यात् ।

अतएव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात् पदार्थधर्म्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्य्यमित्युक्तम् । यथाहुः—

---

लिङ्गेन प्रकरणबाधानन्तरमेव समाख्यायाः प्रमाणत्वेनोपस्थितिर्न तु समाख्यया प्रकरणं बाध्यत इति भावः ।

अतएवेति । प्रबलाश्रितस्य प्राबल्यादेवेत्यर्थः । दुर्बलायाः प्रथमाध्यायतृतीयपादीयश्रुतिप्राबल्याधिकरणसिद्धान्तितायाः । स्मृतेरिति प्राबल्यादित्यनेनान्वितम् । प्रबलेति । पदार्थगुणभूतक्रमापेक्षया बलवादित्यर्थः । पदार्थोऽनुष्ठीयमानं कर्म्म । तदाश्रितत्वेन तद्बोधकत्वेन । पदार्थधर्म्मेति । पदार्थानामनुष्ठीयमानकर्म्मणां धर्म्मः, अतएव गुणभूतोयः श्रौतः श्रुतिबोधितः क्रमस्तत्त्यागेन तद्बाधनेनेत्यर्थः ।

वेदकरणानन्तरमिति । अयमाशयः । वेदं कृत्वा वेदिं कुर्य्यादिति श्रुतिः । तत्र वेदो नाम दर्भमयं सम्मार्ज्जनसाधनम् । वेदिराहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलनिखाता भूमिरिति माधवाचार्य्याः । तथा च वेदवेदिकरणयोः पौर्व्वापर्य्यरूपः क्रमोऽवगम्यते । यदि वेदकरणानन्तरं वेदिकरणात् पूर्व्वञ्च क्षुतं स्यात्, तदा "क्षुत आचामे"दिति स्मृत्या आचमनं विधीयते । तदानीं तदनुष्ठाने वेदवेदिकरणयोः पौर्व्वापर्य्यरूपश्रौतबाधः स्यात् ।

तर्हि किं श्रुत्या स्मृतिबोधिताचमनस्य बाधोऽङ्गीकार्य्यः । किंवा स्मृत्या श्रौतक्रमबाधेनाचमनमनुष्ठेयमिति संशये श्रुत्यपेक्षया स्मृतेर्दुर्बलतया आचमनस्यैव बाध इति पूर्व्वपक्षे तृतीयाध्यायतृतीयपादे सिद्धान्तः । पदार्थः प्रधानं क्रमश्च पदार्थधर्म्मतया गुणभूत एव । ततश्च प्रबलपदार्थाश्रिततया तस्याः स्मृतेरपि प्राबल्यात् तया श्रुतिबोधितोऽपि गुणभूतः क्रम एव बाधनीयो न पुनः श्रौतक्रमेण स्मृतिर्बाध्यते । क्रमस्य गुणभूतत्वेनाप्राबल्यात् । क्षुतेन प्रागुत्पन्नसंस्कारस्य विनष्टतया अशुचिभूतस्य पुंसो वेदिकरणानधिकारित्वे समुपस्थिते आचमनस्य शौचरूपाधिकारसम्पादकत्वेनावश्यकत्वाच्च । तथाचोक्तं भट्टपादैः—

येषां पदार्थधर्म्मत्वात् दौर्बल्यं पूर्व्वनिश्चितम् ।
न तेषां श्रुत्यवष्टम्भात् बलवत्त्वादपगच्छति ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।

दुर्बलैरपि वाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ इति ।

यत्तु पूषेतिशब्दः कथञ्चिदन्याद्यभिधायीति तन्न, तस्यादन्तको ह्लि स इत्यादि वाक्यशेषेण वैदिकप्रसिद्ध्या च अर्थविशेषे रूढ़त्वात् । रूढ़ेश्चावयवार्थालोचनसव्यपेक्षात् योगाद्बलीयस्त्वात् । अतएव वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्देन सौधन्वनापरपर्य्यायो वर्णविशेष उच्यते । रूढ़ेः प्राबल्यात् । न तु रथं करोतीति व्युत्पत्त्या द्विजातयः । योगस्य दौर्बल्यादित्युक्तं षष्ठे ।

---

पदार्थत्वेन शेषाश्च बलीयस्त्वं निरूपितम् ।

न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥ इति ।

तथा तत्रैव—वेदं कृत्वा यदा वेदिमकृत्वाचामति श्रुते ।

वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥

वेदिरेव श्मनाचम्य कुर्व्वती विगुणीभवेत् ।

तामेव सगुणां कर्त्तुं सुदृढ़ा न व्यवधास्यते ॥ इति ।

प्रबलाश्रितस्य प्राबल्ये भट्टपादोक्तं प्रमाणयति यथाहुरिति । पार्थिवेति । अनेन पौरादितोऽपि बलवत्ता दर्शिता । पूषपदस्याधुनिकव्युत्पत्तिं दूषयितुमाह यत्त्विति । अदन्तको हीति । पूषनामकदेवताविशेषसैवादन्तकत्वस्य "तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" पूषा पैष्टमत्ति सदा चरु" मिति स्मृत्याभिहितत्वादिति भावः ।

नन्‌ पूषशब्दस्य देवताविशेषे रूढ़िसद्भाव एव वाक्यशेषेण तदुपस्थितिः सुकरा, तदसत्त्वे तु वाक्यशेषमप्यन्यथा व्याख्येयमित्यतो वैदिकप्रसिद्धिमुल्लिखति वैदिकेति । ननु तथापि रूढ़यौगिकयोर्मध्ये रूढ़स्यैव ग्रहणे का विनिगमनेत्यत आह रूढ़ेरिति । बलीयस्त्वादित्यन्वितम् । योगस्य दुर्बलत्वबीजमाह अवयवेति । प्रकृतिप्रत्ययेत्यर्थः । सव्यपेक्षत्वात् सापेक्षत्वात् । अतएव प्रकृतिप्रत्ययार्थज्ञानजन्यतया विलम्बोपस्थितयौगार्थापेक्षया अविलम्बोपस्थितायाः रूढ़ेर्बलवत्त्वादेव । वर्णविशेषः "माहिष्येण करण्यान्तु रथकारः प्रजायते" इत्युक्तसङ्करजातिविशेषः । षष्ठे षष्ठाध्यायप्रथमपादे ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्माद्युक्तं समाख्यया सामान्यसम्बन्धे अवगते सामर्थ्यात् पूषयागसम्बन्धः पूषानुमन्त्रणमन्त्राणामिति । यथाहुः—

यागानुमन्त्रणानीति समाख्या क्रतुयोजिका ।
तस्मात् शक्त्यनुरोधेन प्राप्तिस्तद्दैवते क्रतौ ॥ इति ।

तस्मिद्धं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थविनियोजकं लिङ्गमिति ।

तत्र मन्त्रविनियोजकं लिङ्गं मुख्य एवार्थे, न गौणे । मुख्यार्थस्य प्रथमसुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्यवसन्नायां पुनर्गौणे अर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अतएव बर्हिर्देवसदनं दामीति मन्त्रः सामर्थ्यात् कुशलवनाङ्गं, न तु उलपराजिलवनाङ्गमित्युक्तम् ।

---

उपसंहरति तस्मादिति । उक्तार्थे मीमांसकसिद्धान्तसंवादमाह यथाहुरिति । यागेति । एतानि यागानुमन्त्रणानीति समाख्या क्रतुयोगिका मन्त्राणां सामान्यतः क्रतुसम्बन्धजनिका । तस्माद्धेतोः शक्त्यनुरोधेन पूषपदस्य वैदिकप्रसिद्ध्यनुरोधेन तद्दैवते पूषदेवते क्रतावेव प्राप्तिरित्यर्थः । प्रमाणान्तरेति । प्रमाणान्तरेण प्रकरणसमाख्यादिना सिद्धः सामान्यसम्बन्धः सामान्यतोयागसम्बन्धो यस्य मन्त्रस्य तस्य पदार्थे मन्त्रघटकपदवाच्ये देवताविशेषे लिङ्गं विनियोजकमित्यर्थः ।

ननु शब्दानामर्थप्रकाशनसामर्थ्यं लिङ्गम् । अर्थश्च मुख्यो गौणश्च । तयोरुभयोरेव प्रकाशने शब्दानां सामर्थ्यमङ्गीकार्य्यञ्च । शब्देभ्यो गौणार्थस्यापि अनेकत्र प्रतीतेः । तत् किमुभयविधमपि सामर्थ्यमुपादेयमित्यत आह तत्रेति । निरुक्तयोर्लिङ्गयोर्मध्ये इत्यर्थः । मुख्येति । एतेन पदार्थविनियोजकलिङ्गस्याप्राप्तिः गौणार्थप्रकाशनपरित्यागे हेतुमाह मुख्यार्थस्येति । प्रथममिति । 'गौणे सदपि सामर्थ्यं न प्रमाणान्तरं विना ।

आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्"

इत्युक्तेरिति भावः । पर्यवसन्नायां परिसमाप्तायाम् । गौरवेति । अप्रमाणकमुख्यगौणार्थप्रकाशनसामर्थ्यकल्पनेति भावः । सामर्थ्यादिति । बर्हिःशब्दस्य कुशरूपमुख्यार्थस्य लुनातेश्च छेदनरूपमुख्यार्थस्य प्रकाशकत्वादित्यर्थः । उलपेति तेषां बर्हिः सादृश्याद्गौणबर्हिष्ट्वादिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोजकत्वम्, किन्तु श्रुतिं कल्पयित्वा । न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना सम्भवतीति सामर्थ्यस्यापि कल्पकत्वेनोपजीव्यत्वात् । अतस्तैर्यावत् सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियते, इति तस्य प्राबल्यम् ।

अतएव "स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं

---

श्रुत्यादीनामुत्तरोत्तरदौर्बल्यप्रतिपादनात् पूर्वपूर्वस्य यद्बलवत्त्वमुक्तं तदिदानीं दर्शयति तदिदमिति । साधयति तेषामिति । वाक्यादीनामित्यर्थः । साक्षात् प्रमाणान्तरकल्पनामन्तरेण । विनियोजकत्वं विनियोगबोधकत्वम् । केन द्वारेणेत्यत आह श्रुतिमिति । श्रुतिकल्पनाद्वारेणेत्यर्थः । श्रुतेरेव साक्षाद्विनियोजकत्वादिति भावः । असमर्थस्य तदर्थप्रकाशनसामर्थ्यरहितस्य । यस्य वाक्यस्य तदर्थप्रकाशनसामर्थ्यं नास्ति तेन वाक्येन तदर्थविषयिणी श्रुतिरपि कल्पयितुं न शक्यत इति भावः । इतीत्यनन्तरं वाच्यमित्यध्याहार्य्यम् तत्र हेतुमाह सामर्थ्यस्यापीति । उपजीव्यत्वादित्यन्वयः । उपजीव्यमन्तरेण उपजीवकासम्भवादिति भावः । ननु सामर्थ्यं कल्पयित्वैव वाक्यादयः श्रुतिं कल्पयन्त्वित्यत आह अत इति । लिङ्गकल्पनाद्वारेण वाक्यादीनां श्रुतिकल्पकत्वादित्यर्थः । तैर्वाक्यादिभिः । क्लृप्तेन शब्दादेवाविर्भूतेन । विनियोगः क्रियत इति । वाक्यस्य लिङ्गकल्पकत्वम् अनन्तरं श्रुतिकल्पकत्वन् लिङ्गस्य तु श्रुतिकल्पकत्वमात्रमित्यविलम्ब-कारित्वमिति भावः ।

उदाहरति अतएवेति । लिङ्गस्य वाक्याद्बलवत्त्वादेवेत्यर्थः । स्योनन्ते सदनमिति । दर्शपौर्णमासप्रकरणे मन्त्र आम्नायते ।

स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि ।

तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥ इति ।

अस्यार्थः । भोः पुरोडाश ते तव स्योनं समीचीनं सदनं स्थानं कृणोमि करोमि तच्च स्थानं घृतस्य धारया सुषेवं सुष्ठु सेवितुं योग्यं कल्पयामि । भो व्रीहीणां मेध सारभूत त्वं सुमनस्यमानः समाहितमनास्तस्मिन् अमृते सुष्ठु सेवितुं योग्ये सदने सीद उपविश, प्रतितिष्ठ स्थिरो भव इति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कल्पयामि" इत्यस्य सदनाङ्गत्वं लिङ्गात्। न तु वाक्यात् सादनाङ्गत्वं, तस्य दौर्बल्यादिति।

समभिव्याहारो वाक्यम्। समभिव्याहारो नाम साध्यत्व-

---

अत्र विनियोगविशेषाश्रवणात् मन्त्रलिङ्गेनैव विनियोगे कर्त्तव्ये, किं कल्पयाम्यन्तपूर्व्वार्द्धेन उपस्तरणरूपसदनकरणप्रतीतेः पूर्व्वार्द्धस्य सदने, तथा तस्मिन् सीदामृते इत्यादिना परार्द्धेन पुरोडाशसादनप्रतीतेः परार्द्धस्य सादने, इति विभज्य विनियोगः कर्त्तव्यः, उत तस्मिन्निति प्रकृतवाचिना तच्छब्देन यत्सदनं कृणोमि तस्मिन् सीदेत्यन्वयबोधात् परार्द्धस्य पूर्व्वार्द्धसापेक्षतया एकवाक्यत्वावगमात् तदनुरोधेन उभयोरेवार्द्धयोः स्थानकरणे सादने च विनियोगः कर्त्तव्यः। तत्र विनियोजिका श्रुतिरेवं कल्पनीया, समग्रेण मन्त्रेण स्थानं कर्त्तव्यं तथा समग्रेणैव मन्त्रेण पुरोडाशः स्थापनीय इति।

एवं संशये उभयोस्तुल्यत्वे, विकल्पप्राप्ते उक्तं वाक्यादिभ्यो लिङ्गं बलवदिति। यतः कल्पयाम्यन्तस्य सदनकरणार्थप्रकाशनसामर्थ्यं प्रत्यक्षम्। तस्मिन्नित्यादेश्च पुरोडाशसादनार्थप्रकाशनसामर्थ्यरूपं लिङ्गं प्रत्यक्षम्। प्रत्यक्षेण च लिङ्गेन पूर्व्वार्द्धस्य सदनकरणे परार्द्धस्य च पुरोडाशसादने विनियोजिका श्रुतिर्झटिति कल्पयितुं शक्यते। एकवाक्यताबलेन समग्रमन्त्रस्य प्रत्येकं विनियोगस्तु न तावत् प्रथमं सम्भवति, परार्द्धस्य सदनकरणार्थप्रकाशनसामर्थ्याभावात्, पूर्व्वार्द्धस्य पुरोडाशसादनार्थप्रकाशनसामर्थ्याभावाच्च। यदि तु पूर्व्वार्द्धस्य सादनप्रकाशनसामर्थ्यं, परार्द्धस्य च सदनकरणप्रकाशनसामर्थ्यं कल्पितं स्यात्, तदैव सम्भवति। एवञ्च लिङ्गकल्पनाव्यवधानेन श्रुतिकल्पनाया विलम्बितत्वमित्यर्थविप्रकर्षाल्लिङ्गाद्वाक्यं दुर्बलम्। तथाच आदौ तस्मिन्नित्यस्यान्वयबोधस्तदनन्तरमेकवाक्यतावगमः, अनन्तरञ्च पूर्व्वार्द्धस्य परार्द्धस्य चोभयार्थप्रकाशनसामर्थ्यरूपलिङ्गकल्पनं, पश्चात् समग्रमन्त्रस्य प्रत्येककर्म्मणि विनियोजिका श्रुतिः कल्पनीया। यावता कालेनेयं कल्पनापरम्परा सम्पद्यते, तावता कालेन प्रत्यक्षेण लिङ्गद्वयेन पूर्व्वापरार्द्धभेदेन विनियोजिका श्रुतिः कल्पिता स्यात्। कल्पितया च तथाविधश्रुत्या अनन्तरभाविनी श्रुत्यन्तरकल्पना बाध्यत इति लिङ्गं बलवदिति समुदायार्थः।

वाक्यं लक्षयति समभीति। यद्यपि एकार्थमनेकपदं वाक्यमिति भाष्यकारैः परस्परान्वितपदसमूहस्य वाक्यत्वमुक्तम्, तथापि यद्वाक्यस्य विनियोजकत्वं तल्लक्षणस्यैवापेक्षिततया श्रुत्यादौ शास्त्रवद्यावेऽपि विनियोजकवाक्यलक्षणस्य तत्साधारण्ये प्रयोजनाभाव इति सामान्यलक्षण-

साधनत्वादिवाचकद्वितीयाद्यभावे, वस्तुतः शेषशेषिणोः सहोच्चारणम् । यथा यस्य पर्णमयी जुहूर्भवतीति । अत्र हि न द्वितीयादिविभक्तिः श्रूयते । केवलं पर्णता-जुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वम् ।

न चानर्थक्य, जुहूशब्देनापूर्व्वलक्षणात् । तदयं वाक्यार्थः । पर्णतया अवत्तहविर्धारणद्वारा यदपूर्व्वसाधनं तद्भावयेदिति ।

---

सुपेक्षितम् । एतल्लक्षणस्य श्रुत्यादिव्याप्तत्वं विहरणेति समभिव्याहारश्चेति । आदिना कर्त्तृत्वादिग्रहणम् । द्वितीयादेरेव तद्वाचकत्वादाह द्वितीयादीति । एतेन कर्म्मत्वकरणत्वादिबोधकद्वितीयादिघटिताया: श्रुतेर्व्यावृत्तिः ।

ननु द्वितीयादिविरहे कथं शेषशेषिभावबोधकत्वसम्भव इत्यत आह वस्तुत इति । तात्पर्य्यादित्यर्थः । तथाच ययोः पदयोः सहोच्चारणं तदर्थयोः शेषशेषिभावबोधकत्वं तात्पर्य्यादेवावसेयमिति भावः । शेषशेषिणोः अङ्गाङ्गिवाचकपदयोः । एतेन लिङ्गादिव्यावृत्तिः । लिङ्गादिविनियोगस्थले शेषशेषिवाचकपदविरहात् ।

वाक्यमुदाहरति यथेति । यस्येति । यस्य यजमानस्य जुहूरह्चन्द्राकृतियज्ञपात्रविशेषः पर्णमयी पलाशवृक्षावयवसम्भूता भवति, न स पापं श्लोकं शृणोतीत्युत्तरप्रतीकेनान्वयः । पलाशे किंशुकः पर्ण इति विकाण्डीस्मरणम् । अत्र श्रुतौ । पर्णता-जुह्वोः पर्णपदजुहूपदयोः । समभिव्याहारमात्रं सहोच्चारणमात्रम् । पर्णतायाः पलाशकाष्ठस्य, जुह्वङ्गत्वं जुहूपकारकत्वम् । अत्र जुहूपकारकत्वं यदि जुहूजनकत्वं तर्हि पर्णताभिधानमनर्थकम् । काष्ठान्तरस्यापि तज्जनकत्वसम्भवादित्यत आनर्थक्यं परिहरति न चेति । आनर्थक्यमिति पर्णताभिधानस्येति शेषः ।

निराकरणे हेतुमाह जुहूशब्देनेति । अपूर्व्वलक्षणादिति । यद्यपि पर्णमयी जुहूर्भवतीति वाक्ये जुहूपदस्य जुह्वपूर्व्वलक्षणायां पर्णमयत्वानुपपत्तिस्तथापि पर्णताजुह्वोः सहोच्चारणबलेन पर्णतया जुहूं कुर्य्यादिति यद्विधिवाक्यं कल्पनीयं तत्रैव जुहूपदे जुह्वपूर्व्वलक्षणाभिप्रेतेति बोध्यम् । अतएव तद्वाक्यार्थमेव दर्शयति तदयमिति । अवत्तेति । अवत्तं चरुपात्रादवदायोत्थापितं यद्धविस्तद्रूपं तस्य धारणद्वारा यदपूर्व्वसाधनं साध्यं यदपूर्व्वं तद्भावयेदुत्पादये-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति, नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यम्। अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्। अन्यथा स्रुवादिष्वपि पर्णतापत्तेः।

सा सेयं पर्णता अनारभ्याधीता न सर्वत्र क्रतुषु गच्छति।

---

दित्यर्थः। वाक्यार्थफलमाह एवञ्चेति। नान्यथेति। काष्ठान्तरेण यदि जुहूः क्रियते तदा तदपूर्वं नेत्यर्थः। एतेन पर्णमय्येव जुहूः कर्त्तव्या, न काष्ठान्तरेण। तत्र फलश्रुतिः स्तुत्यर्थवाद एव, न काम्यत्वार्था, इति सिद्धम्।

वैकङ्कती ध्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता।

जुहूः पलाशकाष्ठस्य खदिरस्य स्रुवो मतः॥

इति सामान्यतोऽभिधानात्। अवत्तहविरित्यादि व्याख्यं दर्शयति अवत्तेति। अवश्यवक्तव्यत्वे हेतुमाह अन्यथेति। पर्णतया साध्यं होमापूर्वं साधयेदित्येतावन्मात्रोक्तावित्यर्थः।

स्रुवादिष्वपीति। अयमाशयः। पर्णतया साध्यं होमापूर्वं भावयेदित्यनेन होमापूर्वं प्रति पर्णताया निमित्तत्वमवगम्यते। तच्च निमित्तत्वं केन द्वारेणेति जिज्ञासायां यदि अवत्तहविर्धारणद्वारेणेत्युच्येत तदा पर्णता हविर्धारणद्वारेण निमित्तमिति प्रतीतेः स्रुवादिहोमापूर्वं प्रत्यपि तस्या निमित्तत्वापत्त्या स्रुवादिष्वपि पर्णतापत्तिः, हविर्धारकत्वाविशेषात्। अथोच्यते जुहूपदश्रवणात् न स्रुवादिहोमापूर्वं प्रति पर्णताया निमित्तत्वमिति तर्हि स्रुवादिहोमापूर्वव्यावृत्तत्वेन अवत्तहविर्धारणद्वारेणेत्यनेन द्वारमेव विशेषणीयं, न तु हविर्धारणद्वारेणेति सामान्यतो द्वारकल्पनम्। एवञ्च चतुरैवावदानसम्भवात् चतुर्होमसाधनीभूताया जुह्वा एव पर्णतेति सिध्यति, न पुनः स्रुवादीनामाज्यहोमसाधनानाम्, आज्यादीनामवदानासम्भवादिति।

ननु जुह्वाः पर्णता किं यागमात्रे विहिता यागविशेषे वेत्यत आह सा चेयमिति। अनारभ्येति। अनारभ्य यागविशेषमनुपक्रम्य पठीता आम्नातेत्यर्थः। ननु अनारभ्याधीताया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विकृतिषु चोदकेनापि प्राप्तिसम्भवेन द्विरुक्तत्वापत्तेः। किन्तु प्रकृतिषु तदुक्तम्—

प्रकृतौ वा अद्विरुक्तत्वादिति।

अत्र विकृतिर्यतोऽङ्गानि गृह्णाति, सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्। गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्। नहि गृहमेधीयात् काचन विकृतिरङ्गानि गृह्णाति, मानाभावात्। किन्तु चोदकाद्यत्राङ्गाप्राप्तिस्तत्कर्म्म प्रकृतिशब्देन विवक्षितम्।

---

कथं न सर्व्वक्रतुगामित्वमित्यत आह विकृतिष्विति। चोदकेनापि अतिदेशविधिनापि। द्विरुक्तत्वेति। पर्णताविधेः प्रकृतिविकृतिसाधारणत्वे, विकृतौ प्रकृतिधर्म्मातिदेशेन सकृत्प्राप्तिर्विधिनापि सकृदिति द्विरुक्तत्वापत्तेरित्यर्थः। परिशेषाद्विधेः प्रकृतिमात्रविषयत्वमेवेत्याह किन्त्विति। अत्र मीमांसातृतीयाध्यायषष्ठपादसिद्धान्तसूत्रं प्रमाणमुद्धरति तदुक्तमिति।

तत्र हि यस्य खादिरः स्रुवो भवति यस्य पर्णमयी जुहूर्भवतीत्यादिश्रुतेः किं प्रकृतिमात्रविषयत्वमुत प्रकृतिविकृत्युभयविषयत्वमिति सन्देहे "सर्व्वार्थमप्रकरणा"दिति सूत्रेण प्रकरणाभावात् सर्व्वविषयत्वमेवेति पूर्व्वपक्षयित्वा "प्रकृतौ वा अद्विरुक्तत्वा"दिति सूत्रेण द्विरुक्तत्वाप्रसक्त्या प्रकृतिविषयत्वमेवेति सिद्धान्तितम्।

प्रकृतिं लक्षयितुं परोक्तलक्षणमादौ निराकरोति अत्रेति। विकृतिरिति। यतो यस्मात्। कर्म्मणो विकृतिरङ्गाणि गृह्णाति प्राप्नोति सा प्रकृतिरिति प्रकृतिशब्देन विवक्षितं नेत्यर्थः। तत्र हेतुमाह गृहमेधीय इति। गृहमेधीयो यागविशेषः। तत्र पर्णताया जुह्वाः पर्णमयत्वस्य प्राप्तिप्रसङ्गादित्यर्थः। अथन्मते तस्य प्रकृतिलक्षणानाक्रान्तत्वादिति भावः। प्रकृतिलक्षणानाक्रान्तत्वं साधयति नहीति। मानाभावादिति। तथाच विकृतिविशेषस्य गृहमेधीयाङ्गग्रहणे प्रमाणाभावात् गृहमेधीयस्य निरुक्तप्रकृतिलक्षणानाक्रान्तत्वेन प्रकृतिविषयतया सिद्धान्तितायाः पर्णमयीश्रुतेर्गृहमेधीययागविषयत्वं न सम्भवतीति भावः।

तर्हि किंलक्षणा प्रकृतिरित्यत्राह किन्त्विति। चोदकात् अतिदेशात् यत्र कर्म्मणि अङ्गाप्राप्तिः अङ्गानामुपस्थितिर्न भवति इत्यर्थः। यत्र सर्व्वेषामङ्गानामुपदेशादेवोपस्थितिरिति भावः। तेन प्राथमिकविधिप्रतिपादितसमग्रेतिकर्त्तव्यताकत्वं प्रकृतित्वमिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा दर्शपौर्णमासौ। तत्र हि न चोदकादङ्गप्राप्तिः। प्रकरणपठितैरेवाङ्गैर्निराकाङ्क्षत्वात्। गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः। क्लृप्तोपकारैरेवाज्यभागादिभिर्निराकाङ्क्षत्वात्।

अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां सन्निवेशः। साप्तदश्यन्त्वनारभ्याधीतमपि न प्रकृतौ गच्छति। प्रकृतेः पाञ्चदश्यावरोधात्। किन्तु विकृतिषु गच्छति। तत्रापि न सर्व्वासु गच्छति। चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात्। किन्तु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति। यथाहुः—

---

फलितम्। एतेन आतिदेशिकेतिकर्त्तव्यताकत्वं विकृतित्वमित्यपि दर्शितम्। प्रकृतिमुदाहरति यथेति। तत्र लक्षणं सङ्गमयति तत्र हीति। गृहमेधीयादेरप्येतत्प्रकृतिलक्षणाक्रान्तत्वमव्याहतमित्याह गृहमेधीयेति। क्लृप्तोपकारैः प्रायसिकविधिप्रतिपादितोपकारैः।

अनारभ्याधीतानां प्रकृतिविषयत्वमुपसंहरति अत इति। चोदकाप्रवृत्तिरितिकर्त्तव्यताप्रापकातिदेशाप्रवृत्तिः। उक्तनियमस्य क्वचिद्बाधमाह साप्तदश्यन्त्विति। सामिधेनीनां सप्तदशत्वमित्यर्थः। तथाच अनारभ्य श्रूयते। सप्तदश सामिधेनीरनुब्रूयादिति। अग्निसमिन्धनार्था ऋचः सामिधेन्य इति तृतीयाध्यायषष्ठपादे माधवाचार्य्याः। साप्तदश्यविधेः प्रकृत्यविषयत्वे हेतुमाह प्रकृतेरिति। पाञ्चदश्यावरोधादिति। प्रकृतौ पञ्चदशसामिधेनीविधानेनावरुद्धायामाकाङ्क्षाविरहेण सप्तदशसामिधेनीविधेरनन्वयादिति भावः। एवञ्च प्रकृताववकाशमलभमानस्य सप्तदशसामिधेनीविधेः परिशेषाद्विकृतिविषयत्वमेवेत्याह किन्त्विति। अत्रापि विशेषमाह तत्रापीति। विकृतिष्वित्यर्थः। चोदकेति। अतिदेशप्राप्तेत्यर्थः। पाञ्चदश्येति। तद्बाधे सम्भवति तद्बाधस्यान्याय्यत्वादिति भावः। प्रत्यक्षेति। प्रत्यक्षश्रुत्या बोधितं साप्तदश्यं यासु तास्वित्यर्थः। ताः का इत्यत आह मित्रेति। आदिना अध्वरकल्पादिपरिग्रहः। तास्वेव साप्तदश्यस्य प्रत्यक्षश्रुतत्वादिति भावः।

साप्तदश्यविधेर्मित्रविन्दादिप्रकृतिविषयत्वात् पाञ्चदश्यविधेः प्रकृतिविषयत्वं मित्रविन्दादीतरविकृतिविषयत्वञ्च सिध्यतीति दशमाध्यायाष्टमपादसिद्धान्तं दर्शयति यथाहुरिति।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च प्रकृतावेतत्याञ्चदश्यं प्रतिष्ठितम्।

विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः॥ इति।

न च वाक्यवैयर्थ्यम्। अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात्।

उपसंहारो नाम प्राप्तस्य विशेषे नियमनम्। यथाहुः—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। इति।

तत्रानारभ्यविधिः सामान्यविधिः। मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत् प्रकृतमनुसरामः। तत्सिद्धं वाक्यादङ्गत्वम्।

---

एवञ्चेति। साप्तदश्यविधेर्मित्रविन्दादिमात्रविकृतिविषयत्वे सतीत्यर्थः। एतत् पाञ्चदश्यं प्रकृतावेव प्रतिष्ठितम्। न केवलं प्रकृतावेव विकृतावपि कुत्रचित् स्यादित्याह विकृतौ चेति। यत्र विकृतौ साप्तदश्यस्य पुनः श्रुतिः पुनर्विधानं नास्ति तथाविधविकृतौ चेत्यर्थः। ननु यदि साप्तदश्यश्रुतिः प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिविकृतिष्वेवान्वेति न विकृत्यन्तरे तर्हि सप्तदश सामिधेनीरनुब्रूयादिति सामान्यतः साप्तदश्यविधायकवाक्यस्य वैयर्थ्यं स्यात्। मित्रविन्दादिषु प्रत्यक्षश्रुत्यैव तत्प्राप्तेरित्याशङ्कां परिहरति न चेति। उपसंहारात् मित्रविन्दादिविशेषनिष्ठत्वेन नियमनात्।

उपसंहारपदार्थस्य तद्रूपत्वं प्रतिपादयति उपसंहारो नामेति। प्राप्तस्य सामान्यतः प्राप्तस्य विशेषे नियमनं विशेषनिष्ठत्वेन सङ्कोचनम्।

सामान्यप्राप्तस्य विशेषनिष्ठत्वेनोपसंहारेण सामान्यवाक्यवैयर्थ्यं, तस्य रीतिसिद्धत्वादिति दर्शयति। यथाहुरिति। सामान्येति। अस्पष्टः अव्यक्तविषयः। संह्रियेत उपसंह्रियेत विशेषनिष्ठत्वेन नियम्येतेति यावत्। विशेषतः विशेषविधिना। अत्र कः सामान्यविधिः को वा विशेषविधिरित्यत्राह तत्रेति। अनारभ्येति। सप्तदश सामिधेनीरनुब्रूयादिति विधिरित्यर्थः। प्रकृतं वाक्यस्याङ्गतायां प्रमाणत्वम्। उपसंहरति तत्सिद्धमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदिदं वाक्यं प्रकरणाद्बलीयः। प्रकरणं हि न साक्षाद्विनियोजकम्। तद्ध्याकाङ्क्षारूपम्। न चाकाङ्क्षा स्वयं प्रमाणम्। किन्तु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतमिति। ततश्चाकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरेणैकवाक्यत्वे प्रमाणम्। एवञ्च यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः।

अतएवेन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामित्यत्र इन्द्राग्निपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हवि-

---

वाक्यस्य प्रकरणाद्बलीयस्त्वं प्रतिपादयति तदिदमिति। तत्र हेतुमाह तद्धीति। तत्प्रकरणम्। आकाङ्क्षारूपमिति। उभयाकाङ्क्षाप्रकरणमिति वक्ष्यमाणत्वात्। स्वयं साक्षात्। केन द्वारेण प्रमाणमित्यत्राह किन्त्विति। दृष्ट्वा श्रुत्वा। केनचिदिति। प्रथमश्रुतवाक्यस्य वाक्यान्तरसाकाङ्क्षतया आकाङ्क्षिततद्वाक्यान्तरेण सह मिलित्वा एकवाक्यत्वापन्नत्वावश्यकत्वादिति भावः। एवञ्च प्रकरणं द्वयोर्वाक्ययोरभिन्नवाक्यभावे प्रमाणमित्याह ततश्चेति। एवञ्चेति। प्रकरणस्य एकवाक्यत्वमात्रप्रमाणत्वे सतीत्यर्थः। यावत् यावता कालेन। वाक्यं कल्पयित्वा वाक्यलिङ्गश्रुतीः कल्पयित्वा। केवलवाक्यकल्पनाद्वारेण प्रकरणस्य विनियोजकत्वासम्भवात्। लिङ्गश्रुती इति। कल्पनात्रितयापेक्षया कल्पनाद्वितयस्याल्पकालसाध्यत्वेनाविलम्बितत्वादिति भावः।

उदाहरति अतएवेति। वाक्यस्यासु विनियोजकत्वादेवेत्यर्थः। इन्द्राग्नी इति। अजुषेतां सेवितवन्तौ, आस्वादितवन्ताविति यावत्। अवीवृधेतां वर्द्धितवन्तौ। ज्यायः श्रेष्ठम्। महस्तेजोऽक्रातां कृतवन्तौ।

दर्शाङ्गत्व इति। अयमाशयः। दर्शपौर्णमासयोः श्रूयते सूक्तवाकेन प्रस्तरं प्रहरतीति। प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेप इति न्यायमाला। तस्मिंश्च सूक्तवाके एतद्वाक्यद्वयं श्रूयते। अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामिति। इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामिति च। तत्र अग्नीषोमाविदं हविरित्यादि वाक्यं पौर्णमासयागे विनियोक्तव्यम्। पौर्णमासदेवताप्रकाशकत्वात् इन्द्राग्नी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम्। न तु प्रकरणाद्दर्शपौर्ण मासाङ्गत्वम्। प्रकरणाद्वाक्यस्य बलीयस्त्वादिति।

---

इदं हविरित्यादि वाक्यं दर्शयागे विनियोक्तव्यम्, दर्शदेवताप्रकाशकत्वात्। एकैवाक्यस्यापि सूक्तवाकत्वादिशेषेण परस्पराकाङ्क्षाविरहेण च विभज्य विनियोगो न दोषाय। न तु प्रकरणादुभयत्रापि वाक्यद्वयविनियोग इति तृतीयाध्यायद्वितीयपादे सिद्धान्तितम्।

तत्र पुनः संशयः। किममावास्यायामिन्द्राग्नी इदं हविरित्यादि समग्रवाक्यं तथा अग्नीषोमाविद हविरित्यादिमन्त्रस्य अग्नीषोमावित्यंशंपरित्यज्य इदं हविरित्याद्यवशिष्टपदजातं पठनीयम्। एवं पौर्णमास्याम् अग्नीषोमाविदं हविरित्यादि समग्रवाक्यं तथा इन्द्राग्नी इदं हविरित्यादिवाक्यस्य इन्द्राग्नी इत्यंशं परित्यज्य इदं हविरित्याद्यवशिष्टपदजातञ्च पठनीयम्। तथा सति तयोर्मन्त्रयोरुभययागाङ्गत्वबोधको दर्शपौर्णमासप्रकरणपाठः समाहृतः स्यात्। स्वाशान्यदेवताबोधकपदस्यान्ययागे विनियोगः परिहृतः।

किंवा अग्नीषोमावित्यस्य इन्द्राग्नी इत्यस्य च इदं हविरित्याद्यंशैरन्वितस्य एकवाक्यत्वापन्नतया वाक्यविरोधादवशिष्टांशस्यापि एकैकत्र विनियोगः शास्त्रार्थः। इत्येवं वाक्यप्रकरणयोः समवाये वाक्यं बलवत्प्रकरणन्तु दुर्बलम्। विलम्बेनार्थप्रतिपादकत्वात्। तथाहि यद्यमावास्यायां प्रकरणबलेनाग्नीषोमाविदं हविरित्यादिमन्त्रस्य अग्नीषोमावित्यंशं परित्यज्य इदं हविरित्यादि शेषांशमात्रं पठ्यते, तदा तत्र देवतावाचकपदविरहात् दर्शदेवताप्रकाशकत्वाय प्रथममिन्द्राग्निपदान्वयेन वाक्यं कल्पनीयम्। तेन वाक्येन इन्द्राग्निप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पनीयम्। तच्च लिङ्गमनेन मन्त्रशेषांशेन इन्द्राग्निविषयकक्रियानुष्ठेयेति श्रुतिं कल्पयति।

एवं यदि पौर्णमास्यां प्रकरणबलेन इन्द्राग्नी इदं हविरित्यादिमन्त्रस्य इन्द्राग्नी इत्यंशमपहाय इदं हविरित्यादि शेषांशमात्रं पठ्यते, तदा तत्रापि देवतावाचकपदाभावात् पौर्णमासदेवताप्रकाशकत्वाय प्रथममग्निषोमपदान्वयेन वाक्यं कल्पनीयम्। वाक्याल्लिङ्गं लिङ्गाच्च श्रुतिः कल्पनीया।

एवञ्च प्रकरणविनियोगयोर्मध्ये त्रिभिर्व्यवधानम्। अग्नीषोमादिपदसहितन्तु वाक्यं श्रूयमाणतया न कल्पनीयम्। अतो लिङ्गश्रुतिभ्यामेव व्यवधानं विनियोगस्य। तस्माद्वाक्येन विलम्बेनार्थप्रतिपादकस्य प्रकरणस्य बाधितत्वात् तत्तच्छेषांशस्तत्रैव व्यवतिष्ठते न तूभयत्रेति। एवमेव तृतीयाध्यायतृतीयपादे न्यायमाला

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु समिधो यजतीति। अत्र हि इष्टविशेषस्यानिर्देशात् समिद्यागेन भावयेत् किमित्यस्त्युपकार्य्याकाङ्क्षा। दर्शपौर्णमासवाक्येऽपि दर्शपौर्णमासाभ्यां स्वर्गं भावयेत् कथमित्युपकारकाकाङ्क्षा। अत उभयाकाङ्क्षया प्रयाजादीनां दर्शपौर्णमासाङ्गत्वं सिध्यति।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गफलं कल्प्यताम्। विश्वजिदधिकरणे हि विश्वजिता यजेतेत्यत्र फलस्याश्रवणात् फलमन्तरेण विधिश्रुतेरनुप-

---

लिङ्गात् इन्द्राग्निदेवताप्रकाशनसामर्थ्यात्। इदं हविरित्यादेरिति। इन्द्राग्निमन्त्रशेषांशस्येत्यर्थः।

प्रकरणं निरूपयति उभयेति। अङ्गाङ्गित्वेनाभिमतयोरुभयोः परस्पराकाङ्क्षेत्यर्थः। उभयेति करणादन्यतराकाङ्क्षायाः प्रकरणत्वं न स्यादिति दर्शितम्। उदाहरति यथेति। समिधो यजतीत्यत्र उभयाकाङ्क्षां प्रतिपादयति अत्र हीति। इष्टविशेषस्य फलविशेषस्य। अनिर्देशादनुल्लेखात्। समिद्यागेनेति। समिद्यागेन किं भावयेदित्युपकार्य्याकाङ्क्षास्तीत्यन्वयः। उपकार्य्यस्य यागविशेषस्य भाव्यत्वेनाकाङ्क्षेत्यर्थः। अत्रैव इष्टविशेषानिर्देशादिति हेतुः। तथाच स्वर्गादिफले तज्जनकतया कर्म्मणि च पुरुषेच्छाया जायमानत्वात् स्वर्गादिरूपेष्टविशेषश्रवणे तस्यैव भावनायां कर्म्मत्वेनान्वयः स्यात्। तदश्रवणे तु इष्टविशेषजनकतया पुरुषेच्छाविषयस्य प्रधानयागस्यैव भाव्यत्वेनान्वयस्यौचित्यात् कतमं यागविशेषं भावयेदित्याकाङ्क्षा जायत इति भावः।

अङ्गविधेः साकाङ्क्षां प्रतिपाद्य प्रधानविधेरप्याकाङ्क्षां प्रतिपादयति दर्शेति। उपकारकाकाङ्क्षेति। इतिकर्त्तव्यताकाङ्क्षेत्यर्थः। दर्शपौर्णमासाङ्गत्वं तदुपकारकत्वम्।

अत्र स्वारसिकेच्छाविषयस्य स्वर्गादेरेव मुख्यप्रयोजनत्वं तज्जनकयागादेस्तु अन्येच्छाधीनेच्छाविषयतया गौणप्रयोजनत्वमेव। एवञ्च मुख्यप्रयोजनस्य भाव्यत्वसम्भवे गौणप्रयोजनस्य भाव्यत्वाङ्गीकारोऽनुचित इत्यभिप्रायेण शङ्कते नन्विति। ननु विश्वजिन्न्याये किं सिद्धान्तितं येन श्रुतफलके कर्म्मणि तन्न्यायात् स्वर्गः फलत्वेन कल्पनीयः स्यादित्यतस्तदधिकरणसिद्धान्तं दर्शयति विश्वजिदधिकरणे हीति। इत्युक्तमित्यनेनास्यान्वयः। अनुपपत्तेरिति। विधिश्रुत्या

पत्तेरवश्यं फले कल्पयितव्ये सर्व्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् ।

तदुक्तम्—

स स्वर्गः स्यात् सर्व्वान् प्रत्यविशिष्टत्वादिति ।

रात्रिसत्रन्यायेन वार्थवादिकं फलं कल्प्यताम् । रात्रिसत्राधिकरणे हि "प्रतितिष्ठति ह वै य एता रात्रीरुपयन्ती" त्यत्र विध्युद्देशे फलाश्रवणात् फलमन्तरेण विधिश्रुतेरनुपपत्तेरवश्यं फले

---

भावयेदिति प्रतीतौ किं भावयेदित्यपेक्षितभाव्यमन्तरेण विधित्वानुपपत्तेरित्यर्थः । सर्व्वेति । सुखं मे भूयादित्यभिलाषस्य पुरुषमात्रीयत्वात् स्वर्गस्य सुखस्वरूपत्वाच्चेति भावः । उक्तं सिद्धान्तितम् ।

तत्सिद्धान्तसूत्रमाह तदुक्तमिति । चतुर्थाध्यायतृतीयपादे इति शेषः । स स्वर्गः स्यादिति अश्रुतफलेषु विश्वजिदादिषु यत्फलं कल्प्यं, स स्वर्गः स्यात् । कुतः ? सर्व्वान् पुरुषान् प्रत्यविशिष्टत्वात् सर्व्वेषामभिलषितत्वादित्यर्थः । अतएव भाष्यम् । "सर्व्वे हि पुरुषाः स्वर्गकामाः । कुत एतत् ? प्रीतिर्हि स्वर्गः । सर्व्वश्च प्रीतिं प्रार्थयते" इति । मिश्राश्च—

स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्ज्जितः ।
भूयांसोऽभिलषन्तेनमल्पे त्वल्पसुखं नराः ॥ इति ॥
ततस्तु सुकरज्ञान सुखमेव परं फलम् ।
तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम् ॥ इति च ।

श्रुतफलान्वयसम्भवे अश्रुतफलकल्पनाया अन्याय्यत्वाद्रात्रिसत्रन्यायेन वर्म्म वा एतद्यज्ञस्य क्रियते, यत्प्रयाज शुयाजा इज्यन्ते, वर्म्म यजमानस्य भ्रातृव्यस्याभिभूत्यै, इत्याद्यर्थवादिकफलान्वय एव वा स्यादित्याह रात्रिसत्रेति । रात्रिसत्राधिकरणे किं सिद्धान्तितं येनार्थवादिकफलान्वयः सुकरः स्यादित्यतस्तदधिकरणसिद्धान्तं दर्शयति रात्रिसत्राधिकरणे हीति । प्रतीति । अत्र रात्रिशब्देन ज्योतिरादिसञ्ज्ञकाः सोमयागविशेषा उच्यन्ते । ये एताः पूर्व्वोक्ता रात्रीरुपयन्ति प्राप्नुवन्ति ते प्रतितिष्ठन्ति प्रतिष्ठां प्राप्नुवन्तीत्यर्थः । अत्र उपयज्जन्तीति पाठो भाष्य_शास्त्रदीपि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम्। विश्वजि न्न्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसम्बन्धे गौरवात्। अर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात्। तदुक्तम्—

फलमात्रेयो निर्द्देशादश्रुतौ ह्यनुमानं स्यादिति।

तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे सम्भवति, किमिति दर्शपौर्णमासाङ्गत्वं स्वीक्रियत इति।

मैवम्। स्वतन्त्रफलार्थत्वे अन्यतराकाङ्क्षया सम्बन्धः स्यात्; नह्यत्र फलस्य साधनकाङ्क्षास्ति। श्रूयमाणं हि फलं साधनसाकाङ्क्षमिति। न चात्र तच्छ्रूयते। एवञ्च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफला

---

काव्यायमालाद्यसम्मतः। इवे प्रसिद्धौ। विध्युद्देशे ज्योतिरादिन्यायविधौ। आर्थवादिकं प्रतितिष्ठन्तीत्यर्थवादावगतम्। प्रतिष्ठाख्यं प्रतिष्ठास्वरूपम्। फलमिति। कल्पनीयमिति शेषः।

ननु विश्वजिदधिकरणे अश्रुतफलककर्म्मणि स्वर्गफलकल्पनायाः सिद्धान्तितत्वात् रात्र्याख्य सत्रेऽपि तथास्त्वित्यत आह विश्वजिदिति। अनुपस्थितेति। विध्युद्देशे अर्थवादे चानुपस्थितेत्यर्थः। तस्य कल्पितस्वर्गफलस्य। प्रकृतसम्बन्धे रात्रिसंज्ञकसत्रान्वये। गौरवादिति। उपस्थितफलपरित्यागेनानुपस्थितफलकल्पने गौरवादित्यर्थः। अत्र सिद्धान्तसूत्रप्रदर्शनायाह तदुक्तमिति चतुर्थाध्यायतृतीयपादे इति शेषः।

फलमिति। निर्द्देशादर्थवादवाक्ये फलोल्लेखादेव फलम्। ननु विधौ फलाभावात् विश्वजिदादिवत् सर्व्वाभिलषितत्वेन स्वर्गानुमानं स्यादित्यत आह अश्रुताविति। हि यस्मात् विधिवाक्ये अर्थवादवाक्ये वा सर्व्वथा फलाश्रुतावेव स्वर्गानुमानं न पुनर्यथाकथञ्चित् फलश्रुतौ। अतो निर्द्देशात् फलमित्यात्रेयो मुनिराहेत्यर्थः। पूर्व्वपक्षमुपसंहरति तस्मादिति। स्वतन्त्रफलार्थत्वे प्रधानफलजनकत्वे। किमिति किन्निमित्तम्। दर्शपौर्णमासाङ्गत्वं तदुपकारकत्वम्, प्रयाजादीनामिति शेषः।

पूर्व्वपक्षं निराकरोति मैवमिति। अन्यतराकाङ्क्षया केवलकर्म्मगताकाङ्क्षया। केवलकर्म्मगताकाङ्क्षां हेतुना साधयति नहीति। अत्र प्रयाजादौ। तत्र हेतुमाह श्रूयमाणं हीति। तत्फलम्। प्रधानोपकारार्थत्वे तु उभयाकाङ्क्षयान्वयः स्यादित्याह दर्शपौर्णमासार्थत्वे त्विति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्थत्वं स्यात्। दर्शपौर्णमासार्थत्वे तु उभयाकाङ्क्षा प्रमाणम्। प्रयाजानां भाव्याकाङ्क्षाया इतरत्र च कथम्भावाकाङ्क्षायाः सत्त्वात्। अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते। ततश्च दर्शपौर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति। तदुक्तम्—

द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति।

यत्र द्रव्ये फलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्येवमाद्या। संस्कारे फलश्रुतिर्यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इत्येवमाद्या। कर्मणि फलश्रुतिर्वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते इत्याद्या। कर्मपदञ्चारादुपकारककर्मपरं द्रष्टव्यम्। संस्कारकर्मणः पृथक्सङ्कीर्तनादित्यास्तां तावत्।

---

प्रमाणं विनियोजकम्। उभयाकाङ्क्षां विवृणोति प्रयाजानामिति। इतरत्र दर्शपौर्णमासयोः। कथम्भावेति। कथं कुर्यादित्याकाङ्क्षाया इत्यर्थः। नन्वन्यतराकाङ्क्षोभयाकाङ्क्षयोः को विशेष इत्यत आह अन्यतराकाङ्क्षातश्चेति। उपसंहरति ततश्चेति। नेति। एतेन प्रयाजादौ फलश्रुतिरर्थवाद एवेति सिध्यति। तत्प्रमापयितुमाह तदुक्तमिति। चतुर्थाध्यायतृतीयपादे इति शेषः।

द्रव्येति। परार्थत्वात् बलवत्या उभयाकाङ्क्षया क्रत्वर्थत्वावधारणात् द्रव्ये संस्कारे कर्मसु च फलश्रुतिरर्थवादः प्रशंसामात्रं स्यादित्यर्थः। द्रव्यादौ फलश्रुतिं प्रतिपादयति यत्रेति। अङ्क्ते चक्षुरञ्जनेन योजयति। अञ्जनं नेत्रसंस्कारविशेषः। भ्रातृव्यस्य शत्रोः। वृङ्क्ते आवृणोति। रौधादिकस्य वृचे रूपमिदम्। वर्म कवचम्। इत्याद्या इत्याद्यपदेन श्रुत्यन्तरवत् वर्म यजमानस्य भ्रातृव्याभिभूत्यै इति भाष्यधृतस्य एतच्छ्रुत्युत्तरप्रतीकस्यापि परिग्रहः। आरादिति। साक्षात् प्रधानाङ्गकर्मपरमित्यर्थः। संस्कारकर्मण इति। तथा च कर्मपदेनाङ्गकर्ममात्रपरिग्रहे संस्कारकर्मणः पृथगुपादानवैयर्थ्यम्। कर्मपदस्य आरादुपकारककर्मपरत्वे तु संस्कारकर्मणोऽङ्गाङ्गत्वेन सन्निपत्योपकारकतया आरादुपकारकभिन्नत्वेन पृथगुपादानमुपपन्नमिति भावः। प्रासङ्गिकप्रपञ्चनातो विरमति इत्यास्तामिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदिदं प्रकरणं क्रियाया एव विनियोजकं, न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकम्। कुत इति चेत्, शृणु। यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थी भावनाभिधीयते भावयेदिति। सा चांशत्रयमपेक्षते। किं भावयेत् केन भावयेत् कथम्भावयेदिति। तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयान्वेति, स्वर्गं भावयेदिति। करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयान्वेति, यागेन स्वर्गं भावयेदिति। ततः कथमिति कथम्भावाकाङ्क्षा जायते। तस्याञ्चाकाङ्क्षायां यत्सन्निधौ पठितमश्रूयमाणफलकञ्च क्रिया-

---

प्रकरणञ्च न सर्व्वेषां विनियोजकमित्याह तदिदमिति। विनियोजकमिति साक्षादिति शेषः। ननु यदि प्रकरणं द्रव्यगुणयोर्न साक्षाद्विनियोजकं, तर्हि केन द्वारेण विनियोजकमित्यत्राह तयोरिति। क्रियायोगात् क्रियाद्वारेण। एवं नियमे को हेतुरित्याह कुत इति। हेतुमुपदर्शयितुमाह शृण्विति। आर्थी भावना अर्थनिष्ठा भावना, पुरुषप्रवृत्तिरूपा। सा चेति। न केवलं लिङंशेनाभिहिता, शाब्दी भावना अंशत्रयमपेक्षते इति चकारार्थः। अंशत्रयं विवृणोति किमित्यादि।

भाव्याकाङ्क्षायां किं भावयेदित्याकाङ्क्षायाम्। षष्ठाद्येति। षष्ठाध्यायप्रथमपादप्रथमाधिकरणन्यायेनेत्यर्थः। तत्र धात्वर्थादेर्भाव्यत्वं निराकृत्य कामनाविषयस्वर्गादेरेव भाव्यत्वस्य सिद्धान्तनादिति भावः। स्वर्गस्य भाव्यतयान्वयं दर्शयति स्वर्गं भावयेदिति। करणाकाङ्क्षायां केनेत्याकाङ्क्षायाम्। समानपदेति। यजेतेत्येकस्मिन् पदे आख्यातयजत्योः श्रवणात् भावनायागयोरेकतिङन्तपदोपस्थाप्यत्वमिति भावः।

भावार्थेति। द्वितीयाध्यायप्रथमपादप्रथमाधिकरणन्यायेनेत्यर्थः। तदधिकरणे हि "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते" इति सूत्रेण यागादेः करणत्वेनान्वयः सिद्धान्तितः। कथम्भावाकाङ्क्षायां करणीभूतस्य यागस्यालौकिकव्यापारतया, केन प्रकारेण यागेन स्वर्गं भावयेदिति कर्म्मणः प्रकारविशेषाकाङ्क्षायाम्। सन्निधाविति। फलवत्सन्निधावफलं तदङ्गमिति न्यायेनेति भावः। अश्रूयमाणफलकमिति। प्रधाननैरपेक्ष्येण फल



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

जातं, तदेवोपकार्य्याकाङ्क्षयेतिकर्त्तव्यतात्वेनान्वयमनुभवितुं योग्यम् । क्रियाया एव लोके कथम्भावाकाङ्क्षायामन्वयदर्शनात् । न हि कुठारेण छिन्द्यादित्यत्र कथमित्याकाङ्क्षायां हस्त इति केवल-मुच्चार्य्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति । किन्तर्हि हस्तेनोद्यम्य निपात्येत्युच्चार्य्यमाणे उद्यमननिपातने एव । हस्तोऽपि तद्द्वारेणैवा-न्वयं प्राप्नोतीति सर्व्वजनीनमेतत् ।

किञ्च कथम्भावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा । थमोः प्रकारवाचित्वात् । सामान्यस्य भेदको विशेषः प्रकारः । सामा-न्यञ्च क्रियारूपमेवाख्यातेनोच्यते, यजेत स्वर्गकाम इति । अस्य ह्ययमर्थः । यागेन तथाकर्त्तव्यं, यथा स्वर्गो भवतीति । क्रिया-सामान्यस्य विशेषः क्रियैव भवति । न हि ब्राह्मणविशेषः

---

जननासमर्थतया विहितमित्यर्थः । उपकार्य्याकाङ्क्षया प्रधानकर्म्माकाङ्क्षया । एतेन उभया-काङ्क्षारूपं प्रकरणं साधितम् । इतिकर्त्तव्यतात्वेन कर्म्मणः प्रकारविशेषत्वेन ।

ननु क्रियाजातस्येव सन्निहितायुधमाणफलवद्द्रव्यगुणयोरपि कुतो नान्वयः ? इत्यत आह क्रियाया एवेति । एवकारेण द्रव्यगुणयोर्द्वारीभूतक्रियामन्तरेणान्वयस्य लोकादृष्टत्वं द्योत्यते । तदेव समर्थयति नहीति । कथमित्याकाङ्क्षायां कुठारेण कथं द्वैधीभावं भावये-दिति जिज्ञासायाम् । केवलमिति तृतीयाविभक्तिं विनेत्यर्थः । तर्हि किमन्वेतीत्याह किं तर्हीति । निपात्येत्यनन्तरमितिकारस्य एताभ्यां पदाभ्यामित्यर्थः । तद्द्वारेण उद्यमननिपातन क्रियाद्वारेण । सर्व्वजनीनं सर्व्वलोकसिद्धम् ।

कथम्भावाकाङ्क्षायां क्रियाया एवान्वये युक्तिमाह किञ्चेति । प्रकारवाचित्वादिति । प्रकारे थाल् इत्यतः सूत्रात् प्रकारवचन इत्यनुवर्त्त्य,इदमस्थमुरिति सूत्रेण थमुं विधाय,किमश्चेति सूत्रेण किंशब्दादपि प्रकारवचने थमोर्विधानादिति भावः । प्रकारशब्दार्थमाह सामान्यस्येति । सामान्यधर्म्मेणोपस्थितस्य भेदक इतरव्यावर्त्तक इत्यर्थः । प्रकृते सामान्यं दर्शयति सामान्य-ञ्चेति । विशेषस्य सामान्य धर्म्मावच्छिन्नत्वे दृष्टान्तमाह नहीति । परिव्राजकादिरिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

परिव्राजकादिरब्राह्मणो भवति। एवञ्च करणगतक्रियाविशेषाकाङ्क्षापरनामधेय-कथम्भावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम्।

स च करणगतक्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तः क्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम्। तस्य च करणगतत्वं तदुपकारकत्वमेव। तेन विना यागेनापूर्व्वाजननात्। न ह्युद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते। तत् सिद्धं कथम्भावाकाङ्क्षायां क्रियैवान्वेतीति। अतएव द्रव्यदेवतयोर्यागसम्पादनद्वारान्वयः साम्प्रदायिकैरुक्तः।

विकृतौ च कथम्भावाकाङ्क्षायामुपकारकसम्पादनमतिदिश्यते इत्युक्तम्। यदि च कथम्भावाकाङ्क्षायां सिद्धं वस्त्वन्वययोग्यं स्यात्, तदोपकार्य्यसम्पादनपर्य्यन्तं धावनं ग्रन्थकृतामनर्थकं स्यात्।

---

यदि कश्चित् ब्राह्मणः परिव्राजको वानप्रस्थो वा भवेत् तदा तस्यापि ब्राह्मणविशेषस्य ब्राह्मणत्वसामान्यधर्म्मवत्त्वं स्यादेव, नाब्राह्मणत्वमिति भावः।

यागात्मककरणगतक्रियाविशेषं प्रतिपादयति स चेति। अन्वाधानमग्निस्थापनम्। तस्य क्रियाविशेषस्य। नन्वसौ क्रियाविशेषो यागस्य पूर्व्वोत्तरकालकर्त्तव्यत्वेन श्रूयते। तत्कथमस्य कारणीभूतयागगतत्वं सम्भवतीत्यत आह तस्य चेति। तदुपकारकत्वं तदपूर्व्वप्रयोजकत्वम्। अत्र हेतुमाह तेन विनेति। लोकेऽपि इति कर्त्तव्यतामन्तरेण फलाभावप्रदर्शनायाह नहीति। साधकमाह अतएवेति। द्रव्यदेवतयोर्व्रीहिभिर्यजेत अग्नये च प्रजापतये च जुहोतीत्यादिश्रुतिविहितयोः। यागसम्पादनद्वारा यागसम्पादकाग्निप्रक्षेपणोद्देशादिक्रियाद्वारा।

यागसम्पादनद्वारेत्यत्र साधकमाह विकृतौ चेति। उपकारकसम्पादनम् उपकारकैर्यागस्य सफलताकरणम्। उक्तं मीमांसकग्रन्थकृद्भिः। अत्र उपकारकसम्पादनमित्यभिधानात् द्रव्यगुणादिसिद्धवस्तूनां यागसम्पादनद्वारैवान्वय इति सिध्यति। तेषां साक्षादन्वयित्वे अभिप्रेते तु तत्कृतयागसम्पादनपर्य्यन्तकथनमनावश्यकमित्याह यदि चेति। उपकार्य्येति। उपकार्य्यस्य प्रधानयागस्य सम्पादनं फलजननसमर्थीकरणम्। तत्पर्य्यन्तं धावनं स्वाभिप्रायप्रति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्च क्रियाया एव इतिकर्त्तव्यतात्वम्। कथम्भावाकाङ्क्षा—गृहीतस्येतिकर्त्तव्यतात्वात्। इतिशब्दस्य प्रकारवाचित्वात्। कर्त्तव्यस्य इतिप्रकार इतिकर्त्तव्यता। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम्। कर्त्तव्यस्य च विशेषः कर्त्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्त्तव्यतात्वम्, किन्तु क्रियाया एव। सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम्। तदपि श्रुत्यादिना, न तु प्रकरणात्। यथाहुः—

---

पादनाय वस्त्वर्थत्वं वागिन्द्रियचालनम्। तथाच यदि प्रकृतिगतानां द्रव्यादीनामपि साक्षादन्वय सम्भवस्तदा उपकारकमतिदिश्यत इत्येव ब्रूयात्, न तु तज्जनितयागसम्पादनम्। प्रकृतिगतानां सर्व्वेषां द्रव्यादीनां साक्षादन्वयित्वासम्भवात् यागसम्पादनद्वारैवान्वययोग्यत्वात् सम्पादनपदेन द्वारपर्य्यन्तमुक्तमिति भावः।

यतः कथम्भावाकाङ्क्षया क्रियैव गृह्यते अत इतिकर्त्तव्यतापदवाच्यत्वमपि तस्या एव, न सिद्धस्य वस्तुनो द्रव्यादेरित्याह अतश्चेति। ननु कथम्भावाकाङ्क्षया क्रियैवान्वेतु। परन्तु तस्या एव इति कर्त्तव्यतापदवाच्यत्वे प्रमाणाभावः। इतिकर्त्तव्यतापदन्त्वङ्गमात्रवाचीति सिद्धस्यापि वस्तुन इतिकर्त्तव्यतापदवाच्यत्वं स्यात्। तस्याङ्गत्वावश्यकत्वादित्यत आह कथम्भावेति। कथम्भावाकाङ्क्षया यद्गृह्यते, तस्यैवेतिकर्त्तव्यतापदवाच्यत्वादिति भावः। अत्र हेतुमाह इतिशब्दस्येति। प्रकारवाचित्वादिति। तथाच मेदिनी। इति हेतौ प्रकाशने। निदर्शने प्रकारे स्यादिति।

व्युत्पत्त्या तथा प्रतिपादयति कर्त्तव्यस्येति। भावपरोऽयं निर्द्देशः। तेन कर्त्तव्यतायाः क्रियाया इति प्रकार इति कर्त्तव्यतेत्यर्थः। यथा श्रुतार्थत्वे कर्त्तव्यस्य इति प्रकार इति व्युत्पत्तौ इति कर्त्तव्यपदनिष्पत्तिरनन्तरञ्च भावप्रत्यये कृते, क्रियाप्रकारत्वेत्यर्थ एव स्यान्न तु क्रियाप्रकार इति ध्येयम्। एवमुत्तरत्रापि। अतएव तृतीयाध्याय तृतीयपादे मिश्रैरभिहितम्—

> तस्मादकर्त्तव्यमेतत् कैयमितिकर्त्तव्यताकाङ्क्षा नामेति, तदभिधीयते। प्रकाराकाङ्क्षेयम्। इतिशब्दः प्रकारवचनः। कर्त्तव्यताप्रकारः क्रियाप्रकार इति यावदिति।

सिद्धस्य भूतस्य। न तु तदानीं कार्य्यस्येत्यर्थः। सिद्धस्य द्रव्यादेः केवलमङ्गत्व-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥ इति ।

अतएव बर्हिर्देवसदनं दामीत्यादिमन्त्रस्य लिङ्गादङ्गत्वं न तु प्रकरणादित्युक्तम् । अर्थवादाधिकरणपूर्व्वपक्षसमाप्तौ एणके क्वचित् द्रव्यस्येतिकर्त्तव्यतात्वेनाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम् । बहुग्रन्थस्वरसादुक्तायुक्तञ्चेति । तस्मिदं प्रकरणं क्रियाया एव विनियोजकमिति ।

तच्च प्रकरणं द्विविधं महाप्रकरणमवान्तरप्रकरणञ्चेति । तत्र भावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् । तच्च प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः ।

---

मपि केन प्रमाणेन सिध्यतीत्यत आह तदपीति । श्रुत्यादिना व्रीहिभिर्यजेतेत्यादिना । * द्रव्यादीनामङ्गत्वस्य प्रकरणलभ्यत्वाभावे प्रमाणमाहुः यथाहुरिति ।

नावान्तरेति । वाक्योपकल्पितात् वाक्यप्रतिपादितात् अवान्तरक्रियायोगात् द्वारीभूतक्रियासम्बन्धादृते विना प्रकृताः क्रियाः कथम्भावैः कथं कुर्य्यादित्याकाङ्क्षाभिर्गुणद्रव्ये गुणद्रव्यादिसिद्धं वस्तु न गृह्णन्ति न प्राप्नुवन्तीत्यर्थः । तथाच अवान्तरक्रियाया एव इतिकर्त्तव्यतात्वं, न तु गुणद्रव्यादीनाम् । तेषामवान्तरक्रियाणामेव इतिकर्त्तव्यतात्वं, तद्वारेणैव तेषामङ्गत्वम् । इति कर्त्तव्यतात्वन्तु गौणमिति भावः । अतएवेति । यतः सिद्धस्य वस्तुनो न प्रकरणादङ्गत्वं किन्तु श्रुत्यादिनैव अतएवेत्यर्थः । द्रव्यस्येतिकर्त्तव्यतात्वाभिधानविरोधं परिहरति अर्थवादाधिकरण इति । अङ्गत्वाभिप्रायमिति । तत्रेतिकर्त्तव्यतापदमङ्गत्वलाक्षणिकमित्यर्थः । बहुग्रन्थेति । भाष्यादीत्यर्थः ।

प्रकरणं विभजति तच्चेति । द्वैविध्यं दर्शयति महेति । भावनायाः फलभावनायाः । ग्राहकमितिकर्त्तव्यतात्वेन विनियोजकम् । तच्च प्रकरणञ्च । प्रकृतावेवेति । सम्भवतीति शेषः । आकाङ्क्षानुपरमादिति । कथम्भावरूपेत्याकाङ्क्षाया अङ्गविधिसमुत्थानसमाप्तिमन्तरेण विरामाभावादित्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा दर्शपौर्णमासादिः। तत्र चोभयाकाङ्क्षारूपं प्रकरणं सम्भवति, आकाङ्क्षानुपरमात्।

विकृतौ तु न प्रकरणं सम्भवति। यत्र तु न समग्राङ्गोपदेशः सा विकृतिः। यथा सौर्य्यादिः। तत्र च यान्यपूर्व्वाण्यङ्गानि विद्यन्ते उपहोमादीनि, तेषां न प्रकरणं विनियोजकम्। तत्र यद्यपि तेषां किं भावयेदित्यस्त्येवाकाङ्क्षा, तथापि प्रधानस्य न कथम्भावाकाङ्क्षाऽस्ति, प्रकृतेरेवाङ्गैर्निराकाङ्क्षत्वात्।

---

तच्च प्रकरणं प्रकृतावेवेत्येवकारव्यवच्छेद्यं विकृतौ प्रकरणाभावं स्पष्टमाह विकृतौ त्विति। विकृतिं लक्षयति यत्रेति। विकृतिमुदाहरति यथेति। सौर्य्यं चरुं निर्व्वपेत् ब्रह्मवर्च्चसकाम इत्यत्र निर्व्वापशब्दः। तथा आग्नेयाष्टाकपालं निर्व्वपेदित्यत्रापि निर्व्वाप शब्दः। एवमाग्नेयपदवत् सौर्य्यपदस्यापि तद्धितप्रत्ययेन एकमात्रदेवताबोधकत्वम्। एवं चरोरप्योषधिद्रव्यकत्वमित्येवमाग्नेयलिङ्गसम्बन्धात् सौर्य्यं चरुं निर्व्वपेदाग्नेयवदित्यानुमानिकवचनकल्पनाङ्गीकारात् सौर्य्ययागस्य आग्नेयविकृतित्वम्।

आदिपदादग्नावैष्णवमेकादशकपालं निर्व्वपेदित्युक्ताग्नावैष्णवयागपरिग्रहः। तत्रापि निर्व्वापपदप्रयोगादिलिङ्गेन अग्नीषोमीयवदित्यानुमानिकातिदेशाङ्गीकारात्। एवमेव सिद्धान्तितमष्टमाध्यायप्रथमपादे। अपूर्व्वाणि अप्राकृतानि। विकृतावेव विशेषविधिना विहितानीति यावत्। तानि कानीत्यत आह उपहोमादीति। उपहोमाः प्राकृतहोमादतिरिक्तत्वेन विहिता होमाः। विकृतौ नक्षत्रेष्टौ कृत्तिकादिहोमाः। अत्र प्रमाणं वक्ष्यते। आदिपदात् प्रजाजे कपालं जुहोतीति श्रुत्या सौर्य्ययागविशेषे विहितानि कपालहोमादीनि। तत्र विकृतौ। तेषाम् अपूर्व्वाङ्गविधायकविधीनाम्। प्रधानस्येति। तथाच अङ्गविधेराकाङ्क्षासद्भावेऽपि प्रधानविधेराकाङ्क्षाविरहेण उभयाकाङ्क्षारूपप्रकरणं नास्तीति भावः।

ननु सौर्य्यं चरुं निर्व्वपेत् ब्रह्मवर्च्चसकाम इत्यत्र सौर्य्ययागेन ब्रह्मवर्च्चसं भावयेदिति बोधस्यावश्याभ्युपेयत्वे कथम्भावयेदित्याकाङ्क्षाऽभ्युपगमोऽप्यावश्यक इत्यत आह प्राकृतैरेवेति। तथाच आग्नेयवदित्यतिदेशेन आग्नेयाङ्गानां प्रवृत्त्या तदाकाङ्क्षानिवृत्तिरिति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम इति वाच्यम्। तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकाङ्क्षोपशमने असामर्थ्यात्। प्राकृताङ्गानां क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात्। न चात्र तेषामुपस्थापकाभावः। उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात्। सौर्य्यवाक्ये हि दृष्टे ओषधिद्रव्यत्वेन एकदैवत्यत्वेन च सादृश्येन आग्नेयवाक्यमुपमीयते। गवयदर्शनात्

---

ननु प्रत्यक्षश्रुतिबोधिताङ्गानां झटित्युपस्थितत्वात् तैरेव विकृतेर्निराकाङ्क्षता युक्ता, न त्वप्रत्यक्षश्रुतिबोधितप्राकृताङ्गैरित्याशङ्कामपनयति न चेति। अप्रत्यक्षत्वात् अप्रत्यक्षश्रुतिबोधितत्वात्। तैरेवेति। तेषां झटित्युपस्थितत्वादिति भावः। तेषां वैकृताङ्गानाम्। अक्लृप्तोपकारकत्वेनेति। प्रधानस्योपकारविषयकाकाङ्क्षाविरहेण उपकारस्य न क्लृप्तत्वम्। सान्निध्यादुपकारकं कल्प्यमिति भावः। झटितीति। तेषामुपकारस्य कल्प्यतया झटित्युपस्थितत्वाभावात् झटित्याकाङ्क्षोपशमनसामर्थ्यमपि नास्तीति भावः।

प्राकृताङ्गानां तद्वैलक्षण्यं दर्शयति प्राकृतानामिति। क्लृप्तोपकारत्वेन उपकाराकाङ्क्षया उत्थितत्वेन। तच्छमने झटित्याकाङ्क्षाशमने। ननु प्राकृताङ्गानां विकृत्युपकारकतयोपस्थितिर्नास्ति। उपस्थापकाभावादित्यापत्तिं निरस्यति न चेति। उपस्थापकं दर्शयति उपमितीति। उपमानेत्यर्थः। उपमानं प्रमाणं सङ्गमयति सौर्य्यवाक्य इति। सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इति वाक्ये इत्यर्थः। दृष्टे श्रुते। आग्नेयवाक्यम् आग्नेयाष्टाकपालं निर्वपेदिति वाक्यम्। उपमीयते उपमित्यात्मकज्ञानविषयीभवति।

तथाच एकत्र सादृश्यज्ञानादपरत्रासन्निकृष्टे सादृश्यज्ञानमुपमितिः। सादृश्यञ्च अर्थान्तरयोगिभिः सामान्यैरर्थान्तरस्य योगः। यथा गोजातियोगिभिः कर्णाद्यवयवसामान्यैर्गवयजातेर्योगो गवयगतं गोसादृश्यम्। तथा गवयजातियोगिभिस्तैर्गोजातेर्योगो गोगतं गवयसादृश्यम्। एवञ्च गवयगतकर्णाद्यवयवसामान्यदर्शनात् गवि गवयसादृश्यज्ञानवत् सौर्य्यवाक्ये ओषधिद्रव्यकत्वैकदैवताकत्वादिसामान्यावगमात् आग्नेयवाक्ये सौर्य्यवाक्यसादृश्यज्ञानरूपमुपमित्यात्मकज्ञानं जायते आग्नेयस्य वाक्यस्योषधिद्रव्यकत्वैकदैवताकत्वसम्बन्धादिति भावः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गोरूपमानवत् । तस्मिंश्चोपमिते, तेन तदर्थो ज्ञायते । सा च त्र्यंशा भावना । तत्र सौर्य्यवाक्ये भावनाया भाव्यकरणयोः सत्त्वादितिकर्त्तव्यताकाङ्क्षायामुपकारक-पृष्टभावेनाग्नेयेतिकर्त्तव्यतातिदिश्यते । सौर्य्ययागेन ब्रह्मवर्च्चसं भावयेदाग्नेयवदिति । तथाच तयैवाकाङ्क्षोपशमान्न विकृतेः प्रकरणमस्ति । अन्यतराकाङ्क्षारूप-स्थानादेव चापूर्व्वाङ्गग्रहणम् ।

न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम् । तेषामपि प्रकृत्युपकारकतयाकाङ्क्षोपशमात् । ननु

---

उपमानवत् उपमितिवत् । तस्मिन् आग्नेयवाक्ये । उपमिते सौर्य्यवाक्यसदृशत्वेन ज्ञाते । तेन उपमातृपुरुषेण । तदर्थं आग्नेयवाक्यार्थः । ज्ञायते सौर्य्यवाक्येऽपीति शेषः । स चार्थः किं केन कथमित्यपेक्षितांशत्रयवती भावनेत्याह सा चेति । विधेयप्राधान्यात् स्त्रीलिङ्गत्वम् । तत्र त्र्यंशेषु मध्ये । भाव्यकरणयोः किं केनेत्यपेक्षितयोः । सत्त्वादिति । सौर्य्ययागेन ब्रह्मवर्च्चसं भावयेदिति बोधावश्यकत्वादिति भावः । इतिकर्त्तव्यतेति । कथमित्याकाङ्क्षायामित्यर्थः । उपकारेति । उपकारविषयकजिज्ञासाविषयत्वेनेत्यर्थः । अतिदेशप्रकारमाह सौर्य्ययागेनेति । भाष्यकृता, सौर्य्यं चरुं निर्व्वपेदाग्नेयवदित्यानुमानिकविध्यङ्गीकारादित्युक्ता विधेरेवाग्नेयवत्पदघटितत्वमङ्गीकृतम् । अतएव तथाविधवाक्यार्थ एवानेन दर्शितः । तया विधिसमभिव्याहृताग्नेयवत्पदबोधिताग्नेयेतिकर्त्तव्यतया । एवकाराद्विकृताङ्गेनाकाङ्क्षोपशमापेक्षेति लभ्यते । कथमित्युपकारकाकाङ्क्षया विधिवाक्यसन्निवेशितेनाग्नेयवदितिशब्देन समर्पितस्तया झटित्युपस्थितस्य प्राकृताङ्गजनितोपकारस्य क्लृप्तत्वेन विकृतेराकाङ्क्षानिवृत्तेः, निवृत्तस्य च पुनरुत्थानकारणाभावात् ।

ननु विकृतेः प्रकरणाभावे अपूर्व्वाङ्गानां कथं तत्रान्वयः, इत्यत आह अन्यतरेति । स्थानं सन्निधिपाठवशात् समानदेशत्वम् । तच्च सन्निधिपठितस्य कर्म्मण एव केनेत्याकाङ्क्षारूपमित्ये-वोक्तमन्यतराकाङ्क्षारूपेति ।

ननु विकृतेरुपकारकाकाङ्क्षासत्त्वात् प्राकृताङ्गानामप्युपकार्य्याकाङ्क्षावश्यम्भावादुभया-काङ्क्षारूपप्रकरणादेव विकृतौ प्राकृताङ्गानामेवान्वयोऽस्तु, कथं विकृतौ प्रकरणं नास्तीत्युच्यते ? इत्याशङ्कां निराकरोति न चेति । तेषां प्राकृताङ्गानाम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राकृताङ्गानामाकाङ्क्षाभावे तेषां विकृतौ सम्बन्धः केवलं स्थानात्। अपूर्व्वाङ्गानान्त्वाकाङ्क्षा सत्त्वाद्विकृतेरप्याकाङ्क्षावत्त्वात् तेषां तत्सम्बन्धः प्रकरणात्। प्रकरणञ्च स्थानात् झटिति विनियोजकमित्यपूर्व्वाङ्गानामेव प्रथमं सम्बन्धः स्यान्न प्राकृतानामिति।

उच्यते, सत्यं, प्रकरणं झटिति विनियोजकम्। तथापि प्रमाणबलाबलात् प्रमेयबलाबलस्य ज्यायस्त्वात् उक्तविधयोपस्थितत्वात् प्राकृतानामेव सम्बन्धो युक्तः क्लृप्तोपकारत्वात्। न वैकृतानां, कल्प्योपकारत्वात्। विकृतेर्य्योपकारकपदार्थाकाङ्क्षा

---

प्रकृत्युपकारकतयेति। तेषां प्रकृतिसन्निधिपठितत्वेनोपकार्य्याकाङ्क्षायां सत्यामुपकारकाकाङ्क्षायां प्रकृतावेवान्वयात् प्रकृत्युपकारकत्वं सिद्धमिति भावः। आकाङ्क्षेति। एकत्रान्वयादेवाकाङ्क्षाशान्तेरित्यर्थः। स्थानात् अन्यतराकाङ्क्षावशात्। आकाङ्क्षासत्त्वात् किमुपकुर्य्यादित्याकाङ्क्षासद्भावात्। आकाङ्क्षावत्त्वात् कथं भावयेदित्याकाङ्क्षावत्त्वात्। प्रकरणात्। उभयाकाङ्क्षारूपात्।

ननु विकृतेराकाङ्क्षावत्त्वेऽपि प्राकृताङ्गैस्तस्याः प्रागेवोपशमितत्वेन अपूर्व्वाङ्गान्वयदशायां तदसद्भावात् कथं प्रकरणादपूर्व्वाङ्गान्वयसम्भव इत्यत आह प्रकरणञ्चेति। प्रकरणस्य स्थानाद्बलवत्त्वादिति भावः। प्रथममिति। एतेन प्राकृताङ्गानामनन्तरमन्वयोऽस्त्विति दर्शितम्।

सिद्धान्तयति उच्यत इति। झटिति स्थानविनियोगात् प्राक्। प्रमाणेति। प्रमाणयोर्विनियोगसाधनयोः स्थानप्रकरणयोर्बलाबलापेक्षया सावल्य(?)दौर्बल्यापेक्षया प्रमेययोः प्राकृताङ्गविनियोगापूर्व्वाङ्गविनियोगयोर्बलाबलस्य ज्यायस्त्वात् श्रेष्ठत्वात् उक्तविधया आनुमानिकविधिसमभिव्याहृतप्रकृतिवच्छब्देन उपस्थितत्वात् प्राकृताङ्गविनियोगस्य विधिवाक्यान्वयदशायामेव बुद्धिविषयत्वात् तेषामेव सम्बन्धो विनियोगो युक्त इत्यर्थः। क्लृप्तोपकारत्वादिति। उपकारस्य उपकारपृष्ठभावेन शब्दप्रतिपादितत्वादित्यर्थः। नेति। न प्रथमसमुपस्थितिरित्यर्थः। कल्प्योपकारत्वादिति। अन्यतराकाङ्क्षाभावेन तदुपकारस्य कल्प्यत्वादित्यर्थः। युक्त्यन्तरमाह विकृतेर्य्येति।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृताङ्गसम्बन्धः । ततश्च न विकृतौ प्रकरणं विनियोजकम् ।

यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते यथौदुम्बरो यूपो भवतीति यूपानुवादेनौदुम्बरत्वम्, तत्प्रकरणाद्गृह्यते । ननु न तत्प्रकरणाद्गृह्यते, अक्रियात्वात् । क्रियाया एव प्रकरणग्राह्यत्वा-दिति चेत् सत्यं, तथापि तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवा-काङ्क्षा किं भावयेदिति । न च यूपानुवादेन तस्य विधीयमान-

---

उपकारकपदार्थाकाङ्क्षा कथं कुर्यादिति क्रियाप्रकारविषयिणी आकाङ्क्षा । जायत इति शेषः । पदार्थमात्राणां क्रियानुष्ठानप्रकारेतरपदार्थानाम् । आकाङ्क्षेत्यनुषङ्गः । तथाच कथं कुर्यादि-त्याकाङ्क्षायां यावतीभिः क्रियाभिर्विकृतेर्निःशेषः प्रकारोऽवगम्यते तावतीनामेवान्वयो युक्तः । स च प्रथमं प्राकृताङ्गसङ्गसम्बन्धादेव भवति । उपहोमादिभिर्द्वित्राभिः क्रियाभिर्विकृतेः प्रकार-विशेषो नावगम्यते प्रधानरूपस्यैव ज्ञानाभावात् । अतो न तासां प्रथममन्वय इति भावः । उपसंहरति ततश्चेति ।

क्वचित् विकृतावपि प्रकरणमस्तीत्याह यत्त्विति । विधीयत इत्यनेनान्वितम् । प्राकृतेति । अतिदेशप्राप्तप्राकृताङ्गानुवादेनेत्यर्थः । तत् किमित्याह यथेति । यूपानुवादेन प्रकृतिप्राप्तयूपो-द्देशेन । प्रकरणात् उभयाकाङ्क्षावशात् । प्रकृतावौदुम्बरत्वाभावात् प्रकृतिवदित्यतिदेशेन औदुम्बरत्वाप्राप्तेर्विकृतेस्तदाकाङ्क्षाया अवश्याङ्गीकार्यत्वात् औदुम्बरत्वस्योपकार्याकाङ्क्षाया आवश्यकत्वाच्चेति भावः । प्रकरणं क्रियाया एव विनियोजकमिति स्वोक्तिविरुद्धत्वादेतदसङ्गत-मित्याशङ्कते नन्विति । क्रियाया एवेति । कथं कुर्यादिति क्रियाप्रकाराकाङ्क्षया औदुम्बरत्वान्वया-सम्भवादौदुम्बरत्वग्रहणोपयोगिनी विकृतेराकाङ्क्षा नास्त्येवेति भावः ।

सत्यमिति वक्तुमर्हसीत्यर्थः । तावच्छब्द औदुम्बरत्वस्येत्यनन्तरं योज्यः । औदुम्बरत्वस्य निरा-काङ्क्षत्वाशङ्कां निराकरोति न चेति । यूपस्य यूपत्वस्य । अदृष्टरूपत्वात् केवलादृष्टसंस्काररूप-त्वात् । संस्कृतकाष्ठविशेषत्वं यूपत्वम् । काष्ठविशेषगतसंस्कारविशेष इति यावत् । स च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

त्वात् यूपस्य चादृष्टरूपत्वात् तेनैवौदुम्बरत्वस्य नैराकाङ्क्ष्यम् आहव-नीयेनैवाधानस्येति वाच्यम् ।

यूपस्य केवलादृष्टरूपत्वाभावात् । तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात् । न च तत्सम्भवति । तथा सति, खादिरत्वाभावे प्रतिनिधित्वेन कदरोपादानं न स्यात्, अदृष्टार्थस्य प्रतिनिध्यभावात् । न हि खादिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति । अतएव नादृष्टार्थानां प्रतिनिधिः । तदुक्तम्—न देवताग्निशब्दक्रियमन्यार्थत्वादिति ।

---

संस्कारविशेषः चादृष्ट एवेति भावः । तेनैव संस्कारविशेषरूपयूपत्वेनैव । नैराकाङ्क्ष्यं भाव्याकाङ्क्षा-राहित्यम् । औदुम्बरत्वस्यापि तथाविधसंस्काररूपत्वेन संस्कारविशेषरूपयूपत्वरूपभाव्येनैव तस्य फलवत्त्वादिति भावः ।

अत्र दृष्टान्तमाह आहवनीयेनेति । तथाच आहवनीये जुहोतीति श्रूयते । आहवनीयत्वञ्च संस्कृतवह्नित्वम् । वह्निगतसंस्कारविशेष इति यावत् । स चाहवनीयो वसन्ते ब्राह्मणोऽग्नी-नादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति श्रुत्या आधानसाध्याग्निरूपतया विहितः । तस्मादा-धानसाध्याग्नित्वमेव आहवनीयत्वम् । अग्नेराधानसाध्यताया एव तथाविधसंस्काररूपत्वादिति लभ्यते । एवञ्चाधानस्याहवनीयत्वनिष्पादकतायाः सिद्धतया यथा आधानविधौ आधानेन किं भावयेदिति भाव्याकाङ्क्षा नोत्पद्यते तथा औदुम्बरत्वस्यापि यूपत्वनिष्पादकतायाः सिद्धत्वेन तद्विधावपि औदुम्बरत्वेन किं भावयेदित्याकाङ्क्षा न सम्भवतीति भावः ।

निराकाङ्क्षत्वाशङ्कानिराकरणे हेतुमाह यूपस्येति । यूपत्वस्येत्यर्थः । केवलेति । अदृष्टमात्रसंस्काररूपत्वाभावादित्यर्थः । तद्रूपत्वे केवलादृष्टरूपत्वे । खादिरत्वादिकमिति । प्रकृतौ खादिरत्वं विकृतौ त्वौदुम्बरत्वमित्यर्थः । अदृष्टमात्रसंस्काररूपेण यूपत्वेन अदृष्टस्यैव जन्यमानत्वादिति भावः । तस्येष्टत्वं परिहरति न चेति । कदरः श्वेतखदिरः । अदृष्टार्थस्य प्रतिनिध्यभावे हेतुमाह न हीति । केवलादृष्टार्थानां प्रतिनिध्यभावे प्रमाणमाह तदुक्तमिति । षष्ठाध्यायतृतीयपादे जैमिनिनेति शेषः ।

देवतेति । देवता च अग्निश्च शब्दश्च क्रिया चेति समाहारद्वन्द्वः । देवतायाः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अनारार्थत्वाददृष्टार्थत्वात्। प्रतिनिधित्वेन चोपादानं कदराद्युक्तं ग्रन्थेषु। तस्मान्न यूपस्य केवलादृष्टरूपत्वम्। अपि तु दृष्टादृष्टसंस्कारगणो यूप इति साम्प्रदायिकाः। एवञ्चौदुम्बरत्वं न यूपमात्रेण निराकाङ्क्षम्। दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात्। अतश्चास्ति औदुम्बरत्वस्याकाङ्क्षा। विकृतिरप्यस्ति कथम्भावा-

---

इन्द्रादिः, अग्नेराहवनीयस्य, शब्दस्य सत्वस्य बर्हिर्देवसदनं दामीत्यादिः. क्रियायाः सन्निधौ जयति तनूनपातं यजतीत्याद्युक्तकर्मणाम् अन्यार्थत्वाददृष्टमात्रार्थत्वात् न प्रतिनिधिरित्यर्थः। ननु प्रतिनिधिर्न्यायिको वाचनिकश्चेति कदरस्य वाचनिकप्रतिनिधित्वमेव मन्तव्यम्। न देवताग्निशब्देति प्रतिषेधस्तु न्यायप्राप्तप्रतिनिधिविषय एव। अतएव मन्त्रप्रतिनिधिनिषेधेऽपि तत्तन्मन्त्रास्थाने गायत्र्याः प्रतिनिधित्वं सहस्रशः स्मरन्तीति कदरोपादानं वाचनिकमेव वाच्यमित्यत आह कदरस्य प्रतिनिधित्वेनोपादानं न वाचनिकं किन्तु सौमादृश्यन्यायमूलकमेवेत्याह प्रतिनिधित्वेनेति। ग्रन्थेष्विति। तथाच कदरस्य प्रतिनिधित्वं न शास्त्रविशेषैरुक्तं किन्तु ग्रन्थकृद्भिरेव सादृश्यादुपात्तमिति भावः।

दृष्टादृष्टेति। तथाच काष्ठविशेषनिष्ठसंस्कारविशेष एव यूपत्वम्। संस्कारश्च कर्माहता। सा च पशुबन्धनांशे दृढत्वं छेदनतक्षणादिजनितवर्तुलत्वादिकञ्च। स एव दृष्टसंस्कारः। यागोपकारकत्वांशे च प्रोक्षणाद्युत्पन्नशुद्धिमत्त्वम्। स एवादृष्टसंस्कारः। अत उक्तं संस्कारगण इतीत्याशयः। एवञ्चेति। यूपत्वस्य दृष्टादृष्टसंस्काररूपत्वे सतीत्यर्थः। यूपमात्रेण यूपमात्रसम्पादनेन। यदि तु औदुम्बरत्वस्य यूपस्थानपातित्वेन यूपार्थत्वमेव बुद्धौ विपरीभवतीति न भाव्याकाङ्क्षेति मन्यते तदा येन केनचित् काष्ठविशेषेण पशुबन्धनसम्भवादौदुम्बरोपादानं व्यर्थं स्यात्। यस्य कस्यचित् काष्ठविशेषस्य तदर्थत्वोपपत्तेः। अत औदुम्बरोपादानमौदुम्बर एव पशुबन्धनद्वारा यागोपकाराय भवति नान्य इति प्रतिपादनार्थमेव। तथा सति अङ्गान्तरवत् यागोपकारस्य भाव्यत्वावगमात् किं भावयेदिति भाव्याकाङ्क्षा विद्यत एवेत्याशयेनाह दृष्टसंस्कारस्येत्यादि।

नन्वस्तु औदुम्बरत्वस्य पशुबन्धनेन किं भावयेदित्याकाङ्क्षा। तदापि विकृतेराकाङ्क्षाविरहात् कथमुभयाकाङ्क्षारूपं प्रकरणं घटते इत्याशङ्क्याह विकृतेरपीति। ननु प्रकृतिवदित्यनेनैव प्राकृतधर्मप्राप्त्या विकृतेराकाङ्क्षा शाम्यतीति प्राक् प्रतिपादितं तत्कथं विकृतेराकाङ्क्षा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

काङ्क्षा । साच तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था अन्वीयन्ते । न तूपकारमात्रान्वयेन शाम्यति । अतश्च यथेन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वान्वयं यावदनुवर्त्तते । न तु दध्यन्वयमात्रेण निवर्त्तते । आश्रयत्वेन गृह्यमाणो होमः

---

सोऽनुपपन्न इत्यत आह सा चेति । विकृतेः कथम्भावाकाङ्क्षेत्यर्थः । उपकारा उपकरणानि । तत्पृष्ठभावेन तत्सम्बन्धविशेषजिज्ञासाविषयत्वेन । पदार्थास्तद्गतधर्माः । अन्वीयन्ते सम्बध्यन्ते । उपकारमात्रान्वयेन विशेषधर्मानवच्छिन्नोपकारसम्बन्धेन ।

तथाच विकृतेः कथम्भावाकाङ्क्षया प्रकृतिवदित्यनेन प्राकृतस्य यूपमात्रस्य प्राप्तावपि सच यूपः किंरूप इत्यवान्तराकाङ्क्षाया यावन्न निवृत्तिस्तावद्विकृतेराकाङ्क्षा विद्यत एव । विद्यमानायाञ्च तस्यां यावता कालेन प्राकृतं खादिरत्वमायास्यति तावत्कालाभ्यन्तरे सन्निहितेन औदुम्बरत्वेन तदाकाङ्क्षानिवृत्तेः प्राकृतं खादिरत्वं बाध्यत इति विकृत्याकाङ्क्षयैव औदुम्बरत्वान्वय इति भावः ।

एतदेव दृष्टान्तोपन्यासपूर्व्वकं व्यञ्जयति अतश्चेति । उपकारपृष्ठभावेन पदार्थान्वयपर्य्यन्तं विकृतेराकाङ्क्षानुपरमादित्यर्थः । इन्द्रियभावनाया इति । दध्नेन्द्रियकामस्य जुहोतीति श्रुतौ इन्द्रियं भावयेदितीन्द्रियभावनाया इत्यर्थः । करणाकाङ्क्षा केनेन्द्रियं भावयेदिति करणाकाङ्क्षा । अनुवर्त्तत इत्यन्वयः । सिद्धस्य क्रियाभिन्नस्य क्रियाया एव पुरुषसाध्यायाः करणत्वौचित्यादिति भावः । आश्रयत्वान्वयम् आश्रयत्वेनान्वयम् । अनुवर्त्तत इति । तथाच सिद्धरूपयोर्गुणद्रव्ययोः क्रियासम्बन्धेनैव यागान्वयात् केवलयोस्तयोर्यागसम्बन्धासम्भवेन तथाविधद्रव्यस्य दध्नः कतमा क्रिया आश्रयभूतेत्यवान्तराकाङ्क्षया सन्निहितहोमक्रियैवाश्रयत्वेनान्वीयत इत्याश्रयत्वान्वयं यावदाकाङ्क्षानुवर्त्तत एव न पुनस्ततः प्राङ्निवर्त्तत इति भावः ।

नन्वाश्रयाकाङ्क्षया होमस्य आश्रयत्वेन सम्बन्धत्वमुच्यते तदसङ्गतम् । विधिवाक्ये किं केन कथमित्याकाङ्क्षात्रितयस्यैवाङ्गीकारेण आश्रयाकाङ्क्षाया अनभ्युपेयत्वादित्यत आह आश्रयत्वेनेति । गृह्यमाणः सम्बध्यमानः । करणाकाङ्क्षयैवेति । तथाच कतमा क्रिया दध्न आश्रयभूतेत्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करणाकाङ्क्षयैव गृह्यत इत्युच्यते। न त्वाश्रयाकाङ्क्षा नाम चतुर्थ्यास्ति।

एवं विकृतेः कथम्भावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्त्तते। उपकारपृष्टभाविना यावत्पदार्थान्वयमनुवर्त्तते। अतश्चोपकारपृष्टभाविनो गृह्यमाणाः पदार्थाः कथम्भावाकाङ्क्षयैव गृह्यन्ते। तत्र प्राकृताः पदार्थाः कथम्भावाकाङ्क्षया गृह्यमाणा अपि न प्रकरणग्राह्याः। प्रकृत्युपकारकतया तेषामाकाङ्क्षा

---

काङ्क्षैव कतमत्क्रियाश्रितदधिकरणत्वेन इन्द्रियं भावयेदित्याकाङ्क्षारूपा। न त्वाकाङ्क्षान्तरम्। अभिलापप्रकारमात्रभेदात्। करणतत्स्वरूपजिज्ञासया अपि करणाकाङ्क्षात्वाविशेषादिति भावः। उच्यते अस्माभिरिति शेषः। चतुर्थ्याकाङ्क्षास्माभिरभ्युपगम्यत इति नाशङ्कनीयमित्याह न त्विति।

दार्ष्टान्तिके वैकृतविशेषधर्मान्वयेऽपि तां रीतिमतिदिशति एवमिति। उपकारान्वयमात्रेण प्राकृतयूपान्वयमात्रेण। निवर्त्तत इति। यूपे पशुं बध्नीयादित्यादिप्रकृतिविहितयूपादेरतिदेशेन विकृतिसम्बन्धे जातेऽपि न कथम्भावाकाङ्क्षानिवृत्तिरिति भावः। यदि न निवर्त्तते तर्हि कियन्तं कालं यावदस्या अनुवृत्तिरित्यत आह उपकारेति। उपकारसम्बन्धविशेषजिज्ञासाविषयत्वेनेत्यर्थः। यावत्पदार्थान्वयं विशेषधर्मान्वयपर्य्यन्तम्। तथाच यूपादिसम्बद्धया कथम्भूते यूपे पशुं बध्नीयादित्याद्याकाङ्क्षया औदुम्बरो यूपो भवतीत्याद्युक्त औदुम्बरत्वादिरूपयूपादिगतविशेषधर्मो यावन्नान्वेति तावन्तं कालं व्याप्य कथम्भावाकाङ्क्षाया अनुवृत्तिः। तद्धर्मान्वये जाते तु निवर्त्तत इत्यौदुम्बरत्वाद्यन्वयोऽपि कथम्भावाकाङ्क्षयैव भवति। कथम्भूते यूपे पशुं बध्नीयादित्यवान्तराकाङ्क्षाया अपि कथम्भावाकाङ्क्षात्वाविशेषादिति भावः।

एतदेवोपसंहारेण दर्शयति अतश्चेति। ननु यदि प्राकृता यूपादयो वैकृता औदुम्बरत्वादयश्च कथम्भावाकाङ्क्षया गृह्यन्त इति सिद्धान्तस्तदा औदुम्बरत्वादिना सह प्राकृतयूपादीनामपि कथं प्रकरणग्राह्यत्वं नाद्रियत इत्यत आह तत्रेति। प्राकृतवैकृतयोर्मध्ये इत्यर्थः। प्राकृता यूपादयः। प्रकृत्युपकारकतयेति। यूपादिना कतमं कर्मविशेषमुपकुर्य्यादित्याकाङ्क्षायाः सन्निहितप्रकृत्युपकारकतयैव तेषां —

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावात्। औदुम्बरत्वादयस्तु अनन्यानुपकारकतया साकाङ्क्षाः पशुनियोजनयूपपृष्टभावेन यावत् खादिरत्वमायाति तावद्विधीयन्ते इति युक्तं तेषां प्रकरणग्राह्यत्वम्। उभयाकाङ्क्षासत्त्वात्। यदि हि यूपपृष्टभावेन खादिरत्वं विहितं स्यात् ततो विकृतेराकाङ्क्षाभावात् औदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। न चैतदस्ति। चोदकस्य खादिरत्वाविषयत्वात्।

ननु यदि यावत् खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते तदा तेन खादिरत्वबाधोऽप्राप्तबाधः। तार्त्तीयबाधवत्।

---

तदाकाङ्क्षानिवृत्तेर्विकृत्यन्वयपर्यन्तं स्थायित्वाभावादित्यर्थः। तथाच उभयाकाङ्क्षाविरहान्न प्रकरणग्राह्यत्वं प्राकृताङ्गानामिति भावः।

औदुम्बरत्वादीनां तद्वैलक्षण्यं दर्शयति औदुम्बरत्वादयस्त्विति। अन्यानुपकारकत्वात् प्रकृत्यनुपकारकत्वात्। साकाङ्क्षा अनिवृत्ताकाङ्क्षाः। तथाच तेषां तदुपकार्य्यविकृतियागस्य च परस्परं साकाङ्क्षत्वादुभयाकाङ्क्षारूपप्रकरणं सम्भवतीति भावः। ननु भवन्तु ते साकाङ्क्षाः परन्तु पशुबन्धनयूपः कथम्भूत इति विकृत्याकाङ्क्षया प्रकृतिखादिरत्वमेवायातीति विकृतेस्तत्राकाङ्क्षाभावात् कथमुभयाकाङ्क्षा सम्भवतीत्यत आह पशुनियोजनेति। पशुबन्धनेत्यर्थः। यूपपृष्टभावेन यूपगतविशेषधर्म्मविषयत्वेन। यावदिति यावता कालेनेत्यर्थः। खादिरत्वमायाति प्रकृतिवदित्यतिदेशेनेति शेषः। तावत् तावत्कालमध्ये इत्यर्थः। विधीयन्ते इति औदुम्बरत्वादय इत्यन्वितम्। तथाचातिदेशात्तुल्यताज्ञानाधीनप्रकृतिधर्म्मोपस्थित्या खादिरत्वोपस्थितेर्विलम्बितत्वम्। औदुम्बरत्वादीनान्तु साक्षात्श्रुतिविहितत्वेन सन्निधानेन च शीघ्रोपस्थितिकत्वमित्यौदुम्बरत्वादीनामेवान्वय इति भावः। अतिदेशेन विकृतौ खादिरत्वमपि विहितमित्याशङ्कां निराकरोति न चैतदिति। खादिरत्वं विहितं नास्तीत्यर्थः। चोदकस्य अतिदेशस्य। खादिरत्वाविषयत्वादिति। तथाच औदुम्बरो यूपो भवतीति श्रुतत्वादतिदेशस्य खादिरत्वपर्य्यन्तातिदेशे न तात्पर्य्यमिति भावः।

चोदकस्य खादिरत्वाविषयत्वादित्यनेनातिदेशस्य यत्खादिरेतरविषयत्वमङ्गीकृतं तत्राशङ्कते नन्विति। तावदेवेति। खादिरत्वप्राप्तेः प्रागेवेत्यर्थः। तेन औदुम्बरत्वेन तार्त्तीयबाधवदिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा हि बाधो द्विविधः, प्राप्तबाधोऽप्राप्तबाधश्चेति। तत्र तार्त्तीयबाधोऽप्राप्तबाधः। तत्र हि यावद्दुर्बलेन प्रमाणेन विनियोगः कर्त्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियते इति तद्बोधितेनेतरबाधोऽप्राप्तबाधः। दुर्बलप्रमाणस्याप्रवृत्तत्वात्।

---

तृतीयाध्यायतृतीयपादे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति सूत्रेण दुर्बलप्रमाणावगतस्य बलवत्प्रमाणेन यो बाधः स तार्त्तीयबाधः। स यथा अप्राप्तबाधस्तद्वदित्यर्थः।

ननु बाधो नाम व्यवहारप्रतिबन्धः। यथा शुक्तिकात्वज्ञानेन रजतत्वज्ञानस्य व्यवहारप्रतिबन्धो रजतत्वज्ञानस्य बाध उच्यते। तदानीं रजतमहमद्राक्षमिति रजतत्वज्ञानव्यवहाराभावात्। तस्मादनुपस्थितस्य व्यवहारासम्भवेन कथमप्राप्तस्य बाधः सम्भवेत्। सम्भवेऽपि वा तार्त्तीयबाधस्याप्राप्तबाधत्वे किं मानमिति जिज्ञासायां बाधस्य द्वैविध्यं तार्त्तीयबाधस्याप्राप्तबाधत्वञ्च प्रतिपादयति तथा हीति। अप्राप्तबाध इति। प्राप्तत्वं व्यवहार्य्यतया प्रमाणविशेषप्रतीतत्वम्, न त्वत्यन्तप्रवृत्तत्वम्। व्यवहाररूपफलपर्य्यवसानाभावात्। अप्राप्तत्वं प्रमाणविशेषाप्रतीतस्य व्यवहार्य्यतया प्रतीतत्वम्। एवञ्च व्यवहार्य्यतया प्रमाणविशेषप्रतिपन्नार्थस्य व्यवहारप्रतिबन्धनं प्राप्तबाधः। अप्राप्तबाधस्तु प्रमाणविशेषाप्रतिपन्नस्य व्यवहार्य्यतया प्रतीतार्थस्य व्यवहारप्रतिबन्धनम्।

तार्त्तीयबाधस्याप्राप्तबाधत्वमिदानीं दर्शयति तत्रेति। तयोर्हि विधयोर्बाधयोर्मध्ये इत्यर्थः। तार्त्तीयबाधस्याप्राप्तबाधत्वं साधयति तत्र हीति। प्रबलेन प्रमाणेनेति। पूर्व्वं पूर्व्वप्रमाणेनेत्यर्थः। विनियोगः क्रियते इति। स्वबोधितार्थोऽनुष्ठाप्यत इत्यर्थः। तद्बोधितेन प्रबलप्रमाणबोधितेन। इतरबाधो दुर्ब्बलप्रमाणबोधितार्थस्य बाधः। अप्रवृत्तत्वादिति। प्रमाणतयेति शेषः। तथा च प्रथमं लिङ्गादिदर्शनेन इन्द्रोपस्थानादिरूपार्थविशेषस्य व्यवहार्य्यतया प्रतीतावपि गार्हपत्यमुपतिष्ठेदिति श्रुत्या तत्र तत्र लिङ्गादीनां प्रमाणाभासीकरणात् तत्प्रतीतार्थस्य वास्तविकप्रमाणप्रतिपन्नत्वाभावात् तस्य व्यवहारनिरोधनमप्राप्तबाध एव। प्रमाणविशेषाप्रतिपन्नस्य व्यवहार्य्यतया प्रतीतस्य यो व्यवहारनिरोधस्तस्यैवाप्राप्तबाधत्वाङ्गीकारात्।

यत्र तु सामान्यशास्त्रप्राप्तस्य विशेषशास्त्रप्राप्तेन बाधस्तत्र प्राप्तबाध एव। तत्र हि विशेषशास्त्रेण सामान्यशास्त्रं नाप्रमाणीक्रियते। सामान्यशास्त्रस्य बहुविषयतया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानात्, अर्थ-लोपात् प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः। यथा प्राकृतानां कुशानां, प्रतिकूलशराम्नानात्। यथा वा अवघातस्य कृष्णले, वैतुष्यरूपप्रयोजनलोपात्। यथा वा पित्रेष्टौ होतृवरणस्य, न

---

विशेषशास्त्रविषये विधायकत्वावश्यकत्वेन प्रमाणत्वाङ्गीकारस्यावश्यकत्वात्। अतोऽसौ बाधो व्यवहार्य्यतया वास्तविकप्रमाणविशेषप्रतिपन्नार्थस्य व्यवहारप्रतिबन्धरूप एव भवति। परन्तु सामान्यशास्त्रात् व्यवहार्य्यतया प्रतीतस्यार्थस्य व्यवहार्य्यताप्रतीतेरेव भ्रान्तित्वकल्पनया व्यवहारप्रतिबन्धो विशेषशास्त्रेण क्रियते। न तु सामान्यशास्त्रस्य प्रमाणतावुद्धेर्भ्रान्तित्वमुत्पाद्यते। अप्राप्तबाधस्थले तु प्रापकप्रमाणस्य प्रमाणतावुद्धेरपि भ्रान्तित्वं कल्प्यत इति विशेषः। तस्मादयं प्राप्तबाध एव। एवमन्यत्रापि बाधस्य प्राप्तबाधत्वमप्राप्तबाधत्वञ्चोहनीयम्।

नन्वेवं लिङ्गादीनामप्यन्यत्र प्रमाणत्वाङ्गीकारस्यावश्यकत्वात् कथं श्रुत्यादिना तेषामप्रमाणीकरणं सम्भवतीति चेन्न। यन्मन्त्रीयलिङ्गं श्रुत्या प्रमाणाभासीक्रियते तन्मन्त्रलिङ्गस्य कुत्रापि प्रमाणत्वानङ्गीकारात्। मन्त्रान्तरीयलिङ्गान्तरस्य तु श्रुतिविरोधाभावे प्रमाणत्वाङ्गीकारे क्षति विरहात्। सामान्यशास्त्रस्य तु विशेषशास्त्रेणाप्रमाणीकृतत्वे अन्यत्रापि तदादरणानुपपत्तिरिति विस्तरः।

एवं सति वैकृताङ्गेन प्राकृताङ्गबाध्यस्य प्राप्तबाधत्वमेव घटते इत्याह प्राकृतस्येति। चोदकप्राप्तस्य अतिदेशप्राप्तस्य। प्रत्याम्नानात् प्रकृतौ यदुपदिष्टं तद्विपरीतधर्म्मिणो विधानात्। अर्थलोपात् प्रयोजनाभावात्। प्रतिषेधात् प्रकृत्युपदिष्टधर्म्मिविशेषस्य निषेधात्। क्रमेणोदाहरति यथेति। प्राकृतानां कुशमयं बर्हिरिति प्रकृतावुपदिष्टानाम्। प्रतिकूलेति। शरमयं बर्हिरित्यनेन विकृतावुपदिष्टानां कुशविपरीतानां शराणां विधानादित्यर्थः। इदं प्रत्याम्नानादित्यस्योदाहरणम्।

द्वितीयस्योदाहरणमाह यथा वेति। अवघातस्येति। प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्काम इति श्रूयते। तत्र कृष्णलं घृते श्रपयतीति प्रत्यक्षश्रुत्या श्रपणविधानात् श्रपणीयानामवघातादिकं प्रकृतितः प्राप्तम्। तच्च कर्त्तव्यं न वेति संशये दशमाध्यायप्रथमपादे कृष्णलेष्ववघातादेरतिदेशप्राप्तस्य वैतुष्यरूपप्रयोजनाभावादननुष्ठानम्। श्रपणस्य तु प्रत्यक्षश्रुत्या बोधितस्यानुष्ठानमेवेति सिद्धान्तितम्।

तृतीयस्योदाहरणमाह यथा वेति। पित्रेष्टाविति। महापितृयज्ञ इत्यर्थः। वरेष्टित्वात्

१३

होतारं वृणीते इति प्रतिषेधात्। औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः शरकुशन्यायेन। चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति।

उच्यते। तार्त्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्राप्तबाधनम्। प्रकरणञ्च तार्त्तीयम्। तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव। न हि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्म्मः।

---

दर्शपौर्णमासप्रकृतिकतया होतृवरणादिप्राप्तौ महापितृयज्ञे न होतारं वृणीते नार्षेयमिति श्रुत्या प्रतिषेधात् प्रकृतिप्राप्तहोतृवरणस्य बाध इति दशमाध्यायाष्टमपादे सिद्धान्तितम्। एषूदाहरणेषु प्राकृतानां कुशानामित्यादिषष्ठ्यन्तपदानन्तरं बाध इत्यध्याहार्य्यं तत्रैव पञ्चम्यन्तमयं हेतुर्द्रष्टव्यः।

एवञ्च खादिरत्वस्यापि प्रत्याम्नानात् शरमयबर्हिषा कुशमयबर्हिर्बाधवत् औदुम्बरत्वेन बाधः प्राप्तबाध एव वक्तव्यो नाप्राप्तबाध इत्याह औदुम्बरत्वेनेति। भवतु प्राप्तबाधत्वमेव वक्तव्यमित्यभिमतौ दोषमाह चोदकस्य चेति। अतिदेशस्य त्वित्यर्थः। खादिरत्वेति। भवन्मते अतिदेशात् खादिरत्वप्रतीतेः प्रागेव औदुम्बरत्वस्योपस्थितेरतिदेशस्य न खादिरविषयत्वमिति भावः। तथात्वे खादिरत्वस्य प्राप्तत्वं न सम्भवतीत्याह प्राप्त्यभावादिति। तदनुपपत्तिः प्राप्तबाधत्वानुपपत्तिः। तथाच व्यवहार्य्यतया प्रमाणप्रतिपन्नार्थस्य व्यवहारप्रतिबन्धस्यैव प्राप्तबाधत्वम्। यदि तु खादिरत्वस्यातिदेशरूपप्रमाणेन कर्त्तव्यतया प्रतीतत्वं भवता नाङ्गीक्रियते तदा औदुम्बरत्वेन तद्बाधस्य कथमपि प्राप्तबाधत्वं न घटते। परन्तु प्रमाणविशेषात् प्रतीतस्य कर्त्तव्यतया प्रतीतत्वेन तद्बाधस्याप्राप्तबाधत्वमेवाङ्गीकार्य्यम्। तथा सति वैकृतेन प्राकृतबाधस्य प्राप्तबाधत्वसिद्धान्तो व्याहन्येतेति पूर्व्वपक्षयितुरभिप्रायः।

सिद्धान्तयति उच्यत इति। अवादावप्राप्तबाधत्वमेवास्माकमिष्टमित्यभिप्रायेण तदेवं तार्त्तीयबाधत्वमेव घटयति तार्त्तीयेति। श्रुतिलिङ्गादिप्रमाणेत्यर्थः। तद्विनियुक्तेन तद्बोधितेन। प्रकरणञ्चेति। श्रुतिलिङ्गादिषु प्रकरणस्यापि कीर्त्तनादिति भावः। इतरस्य खादिरत्वस्य। ननु वैकृतेन प्राकृतबाधः प्राप्तबाध एवेत्यभिधानं विरुध्येतेत्यत आह वैकृतेनेति। कुलधर्म्मः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः। तद्विषयत्वे वा तेनैव निराकाङ्क्षत्वान्नौदुम्बरत्वस्य प्रकरणं विनियोजकं

---

इति। नियम इत्यर्थः। तथाच वैकृतेन प्राकृतबाधः प्रायेण प्राप्तबाध एव भवतीति तथोक्तम्। न त्वसौ बाधः कदाचिदप्यप्राप्तबाधो न स्यादिति तदभिप्राय इति भावः।

ननु तार्त्तीयप्रमाणविनियुक्तेनेतरबाधनमित्यत्र इतरपदेन यदि तार्त्तीयप्रमाणेतरप्रमाणविनियुक्तस्य ग्रहणं यदि वा तार्त्तीयप्रमाणविनियुक्तेतराङ्गग्रहणं क्रियते उभयथापि श्रुत्यादिविनियुक्तेन लिङ्गादिविनियुक्तबाधस्य अप्राप्तबाधत्वानुपपत्तिः। लिङ्गादीनामपि तार्त्तीयप्रमाणत्वेन तद्विनियुक्तस्य तार्त्तीयप्रमाणेतरप्रमाणविनियुक्तत्वाभावात्। तार्त्तीयप्रमाणविनियुक्तेतरत्वाभावाच्च। तस्मात् श्रुतिविनियुक्तेन लिङ्गादिविनियुक्तस्य, लिङ्गविनियुक्तेन वाक्यादिविनियुक्तस्य, वाक्यविनियुक्तेन प्रकरणादिविनियुक्तस्य, प्रकरणविनियुक्तेन स्थानादिविनियुक्तस्य, स्थानविनियुक्तेन च समाख्याविनियुक्तस्य बाधनमिति विशेषरूपेण तार्त्तीयप्रमाणान्यतमप्रमाणविनियुक्तेन तदन्यतमप्रमाणविनियुक्तस्य बाधनमिति सामान्यरूपेण वा वक्तव्यम्। तथा सति प्रकरणविनियुक्तेन स्थानसमाख्याविनियुक्तबाधनस्यैवाप्राप्तबाधत्वं घटते, न त्वतिदेशप्राप्तबाधस्य।

यत् पुनरुक्तं न हि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्म्म इति तदपि वार्त्तिकोक्तिविरुद्धम्। यतो वार्त्तिककृद्भिस्तृतीयाध्यायतृतीयपादे।

"तत्र श्रुत्यादिषु तावत् यथोक्त एवप्राप्तबाधः। न च तत्र किञ्चिद्विरुध्यते। तद्विषयस्य प्राप्त्यन्तरानभ्युपगमात्। येऽपि तच्छायानुपातिनः अर्थविप्रकर्षादेव श्रुत्यादिबाधा भवन्ति तेऽपि हेतुसामर्थ्यकथनात् श्रुत्यादिकृतबाधेनैव व्याख्याताः। येतु प्रमाणतदाभास-नित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्व्वापर्य्यप्राकृत-वैकृतसामान्यविशेष निष्प्रयोजन-सप्रयोजन-सप्रयोजनाल्पभूयस्त्वसावकाशनिरवकाशाङ्गप्रधानाङ्गधर्म्मप्रधानधर्म्मबाधस्तेष्विदमुक्तं प्राप्तं बाध्यत इतीत्युक्तम्।"

एतस्मात् पूर्व्वकल्पास्वरसादाह वस्तुतस्त्विति। अयम् औदुम्बरत्वेन खादिरत्वबाधः। ननु खादिरत्वस्यातिदेशाविषयत्वं तद्विषयत्वं वा। आद्ये प्राप्तबाधत्वमेव न स्यात्। तत्प्रतियोगिनः प्रमाणप्रतीतत्वात्। द्वितीये खादिरत्वेनैव औदुम्बरत्वबाधापत्तिरित्याशङ्कामपनयति न चेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्यादिति वाच्यम् । न हि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते । तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात् । किं तर्हि, तानेव पदार्थान् वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते । ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्त इति भवति पुरुषस्य भ्रान्तिः । यथा प्रकृतौ कृतं तथा विकृतौ कर्त्तव्यमिति सर्व्वे पदार्थाः कर्त्तव्या इति ।

अतश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्त इति तद्बाधः प्राप्तबाधः । न च भ्रान्तिप्रतिपन्नेन वैधी आकाङ्क्षा निवर्त्तयितुं शक्यते । तस्मादयुक्तमुक्तमुभयाकाङ्क्षारूपप्रकरणसम्भवाद्विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति ।

---

आशङ्कापनयने हेतुमाह न हीति । प्राप्यन्ते विधीयन्ते । बाधो न स्यादिति । वैकृतस्यैव बाधः स्याद्विकल्प एव वा स्यादिति भावः । तर्हि अतिदेशः किं प्रापयतीत्याह किं तर्हीति । ते पदार्थाः प्राकृतपदार्थाः । इति हेतौ । भ्रान्तेः प्रकारमाह यथेति ।

तद्बाध. प्राप्तबाध इति । यद्यपि अप्राप्तबाधस्थलेऽपि कर्त्तव्यताप्रतीते र्भ्रान्तित्वमावश्यकम् भ्रमात्मकप्रतीतिविषयत्वाभावे बाध्यत्वानुपपत्तेः, तथापि तत्र अप्रमाणम्प्रमाणत्वभ्रममूलिका कर्त्तव्यता भ्रान्तिर्जायते । बाधकप्रमाणेन तु प्रापकप्रमाणस्याप्रमाणत्वकल्पनया प्रमाणत्वभ्रमस्य तन्मूलकव्यवहार्य्यताभ्रमस्य च निराकरणात् व्यवहारप्रतिबन्धः क्रियते । प्राप्तबाधस्थले तु प्रापकस्यातिदेशस्य प्रमाणत्वबुद्धेर्न भ्रमत्वम् तस्या बुद्धेर्यथार्थत्वात् । अतिदेशस्याप्रमाणत्वे पदार्थान्तरस्यापि विकृतौ प्राप्तिर्न स्यात् । परन्तु तत्प्रमाणमूलिका खादिरत्वस्य व्यवहार्य्यताप्रतीतिरेव भ्रमः । बाधकेन तु तमेव भ्रमं निराकुर्व्वता व्यवहारप्रतिबन्धः क्रियते इति विशेषः ।

नन्वु खादिरत्वेनैवौदुम्बरत्वं बाध्यतामित्यत आह नचेति । भ्रान्तिप्रतिपत्ति विधिप्रतिपत्त्योर्विधिप्रतिपत्तेरेव बलीयस्त्वेन भ्रान्तिप्रतिपन्नेन वैधप्रतिपत्तिविषयस्य बाधो न सम्भवतीत्याशयः । आपत्तिनिरासेन स्वोक्तस्य युक्तस्य युक्तत्वं प्रदर्शयन्नुपसंहरति तस्मादिति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवं पृषदाज्येनानुयाजान् यजतीति प्राकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्य्याः। अन्ये त्वेवमाहुः। पृषदाज्यं हि अनुयाजानुवादेन विधीयते। तत्स्वरूपे चानर्थक्यप्राप्तेः। तैर्न विकृत्यपूर्व्वं लक्षयितुं युक्तम्, विप्रकर्षात्। किन्तु दीक्षणीयावाङ्नियमन्यायेन स्वापूर्व्वमेव लक्षयितुं युक्तम्, सन्निकर्षात्। अतएवोत्पवनादीनां प्रोक्षणाद्यपूर्व्वप्रयुक्तत्व मुक्तम्। अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नेनानुयाजापूर्व्वेणैव नैराकाङ्क्षान्न प्रकरणाद्विकृत्यर्थत्वमिति।

वयन्त्वङ्गीकृत्यापि विकृत्यर्थत्वं ब्रूमः। भवतु वा विकृत्यर्थत्वं

---

मतान्तरेणोदाहरणान्तरमाह एवमिति। औदुम्बरत्ववदित्यर्थः। विकृत्यङ्गमिति। चातुर्म्मास्ययागान् प्रकृत्य पृषदाज्येनेति श्रुतिराम्नातेति भाष्यम्। अतएवास्या विकृतिविषयत्वम्। चातुर्म्मास्ययागानां दर्शपौर्णमासविकृतित्वात् एतदभिमन्तॄणामाचार्य्याणामयमाशयः। यथा हि प्रकृतिप्राप्तं यूपमनूद्य तस्य औदुम्बरत्वं विधीयते इति औदुम्बरत्वं विकृत्यङ्गं तथा प्रकृतिप्राप्तानुयाजानुवादेन तस्य पृषदाज्यकारणकत्वं विधीयते इत्यत औदुम्बरत्ववत् पृषदाज्यस्यापि विकृतियागाङ्गत्वं भवेदेवेति।

आचार्य्यान्तरमतमाह अन्येत्विति। विधीयते परिप्राप्तानुयाजाङ्गत्वेनेति शेषः। तत्स्वरूपे पृषदाज्यकरणकानुयाजविधाने। आनर्थक्येति। अनुयाजानामतिदेशेनैव प्राप्तत्वादिति भावः। तैः पृषदाज्यकरणकानुयाजैः। विकृत्यपूर्व्वमिति। पृषदाज्यकृतानुयाजैर्विकृत्यपूर्व्वं भावयेदिति लक्षयितुं प्रत्याययितुं न युक्तमित्यर्थः। विप्रकर्षात् वाक्याद्विकृत्यपूर्व्वानुपस्थितेः। तर्हि किमपूर्व्वं लक्षणीयमित्याह किन्त्विति। दीक्षणीयेति। यथा दीक्षणीयेष्टावभिहित सत्यवदनादिरूपवाङ्नियमो दीक्षणीयापूर्व्वं लक्षयति, तथा पृषदाज्येनापि सन्निकृष्टानुयाजापूर्व्वमेव लक्षयितुं युक्तमित्यर्थः। उत्पवनादीनामिति। प्रोक्षणीपात्रे यदुत्पवनादिकं विहितं तत्प्रोक्षणीपात्रापूर्व्वार्थं न तु प्रधानीभूतहोमापूर्व्वार्थमित्युक्तमित्यर्थः। वाक्येति। अनुयाजानिति स्ववाक्यप्राप्तेनेत्यर्थः। तथाच एतन्मते पृषदाज्यस्य अनुयाजाङ्गत्वमेव। न साक्षात्प्रधानीभूतविकृतियागाङ्गत्वमिति।

स्वमतमाह वयन्त्विति। विकृत्यर्थत्वाङ्गीकारे औदुम्बरत्ववत् कुतो न प्रशस्य

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI,
Acc. No. 1628

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पृषदाजस्य, तथापि न प्रकरणं विनियोजकं भवति। यूपपृष्टभावेन हि यावत्खादिरत्वमायाति तावदौदुम्बरत्वविधानादुभयाकाङ्क्षासम्भवाद्युक्तः प्रकरणविनियोगः। एवं यावदनुयाजपृष्टभावेनाजस्रमायाति तावदेव यदि पृषदाजंस्र विधीयेत तदोभयाकाङ्क्षासम्भवात् प्रकरणविनियोगो भवेत्। नत्वेतदस्ति, न हि पृषदाजंस्र नाम द्रव्यान्तरं किञ्चिदस्ति, यदाजस्रस्थानापन्नं विधीयेत। औदुम्बरत्वमिव खादिरस्थानापन्नम्। पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात् पृषदाजस्रशब्दस्य चित्राजस्रवाचित्वात्। अतएव निगमेषु आजस्रपानित्येव वक्तव्यं, न तु पृषदाजस्रपानित्युक्तम्।

---

विनियोग इत्यत्र औदुम्बरत्ववैलक्षण्यं प्रतिपादयति यूपपृष्टभावेनेति। आज्यमायातीति। प्रकृतावनुयाजानामाज्येनैव विधानादिति भावः। एतत् अनुयाजपृष्टभावेन आज्यस्थाने पृषदाज्यविधानम्। औदुम्बरत्ववैलक्षण्ये हेतुमाह नहीति। किन्तर्हि पृषदाज्यमित्यवाह पृषच्छब्दस्येति। पृषन्मणिश्चित्रवर्णो मणिः। आदिना पृषन्मृग इत्यादिपरिग्रहः। चित्राज्येति। यद्यपि पृषदाज्यं दधिमिश्रितमाज्यमित्याभिधानिकाः। अतएव दशमाध्यायचतुर्थपादे भाष्यादिधृता श्रुतिः। पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्चैव दधि चेति। तथापि पृषच्छब्दस्य चित्रतावाचकत्वमेव तत्प्रयोगस्य मूलम्। तथाहि चित्रता नानावर्णता, पृषन्मणिः पृषन्मृग इत्यादौ तथार्थदर्शनात। पृषदाज्यमित्यादौ आज्यस्य चित्रता तु दधिमिश्रणेन बहुलश्वेतविन्दुयुक्तत्वसम्पादनाद्भवति। न पुनः पृषदाज्यं द्रव्यान्तरम्। एवमेव दशमाध्यायचतुर्थपादे भाष्यकारादयः।

अतएव पृषदाज्यस्य द्रव्यान्तरत्वाभावादेव। निगमेषु आवाहनमन्त्रेषु। तथाच दशमाध्यायचतुर्थपादे शास्त्रदीपिका—

'सन्ति प्रकृतावाज्यपशब्द युक्तानिगमाः। देवानाज्यपानावहेत्वाहा। इत्यादयः इति।" पृषदाज्यपानिति। पृषदाज्यशब्दस्य द्रव्यान्तरत्वे विकृतावूहावश्यम्भाव इति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च यावत् प्रकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणविनियोगसम्भव इति वाच्यम्। न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते। विशिष्टविधाने गौरवापत्तेः। किन्तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते। लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवत्। तदुक्तं दशमे चतुर्थचरणान्ते—

न वा स्याद्गुणशास्त्रत्वादिति।

प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानमिति शास्त्रदीपिका। एवञ्च विकृतिः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैर्नैराकाङ्क्ष्ये

---

नन्वाज्यस्थाने चित्राज्यविधानादपि औदुम्बरसादृश्यं स्यादित्यापत्तिं निराकरोति न चेति। गौरवेति। आज्यस्यातिदेशेन प्राप्ततया तदनुवादेन चित्रतामात्रविधाने सम्भवति आज्यपर्यन्तविधाने विधेयतावच्छेदकगौरवापत्तेरित्यर्थः।

लोहितेति। ऋत्विजां सोष्णीषत्वस्य प्रकृतावपि सिद्धत्वादतिदेशेन उष्णीषमात्र प्राप्तौ यथा विकृतौ तस्य लौहित्यमात्रं विधीयते तद्वदित्यर्थः। पृषदाज्येनेत्यस्य गुणमात्रविधायकत्वे सिद्धान्तसूत्रं प्रमाणयति तदुक्तमिति। चतुर्थचरणान्त इति। इदं दशमाध्यायचतुर्थपादचरमसूत्रमिति भावः। न वा स्यादिति। पृषदाज्यशब्दस्य समुदायशक्त्या द्रव्यान्तरवाचकत्वं न स्यात्। हेतुमाह गुणशास्त्रत्वादिति। पृषदाज्येनानुयाजान् यजतीति शास्त्रं हि चित्रतारूपगुणमात्रविधायकमित्यर्थः। तथाच पृषच्छब्दश्चित्रवाची आज्यशब्दश्च सर्पिर्वाचकः। तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रतागुणमात्रविधानम्। तं गुणं सम्पादयितुं दधि स्यादिति भावः।

शास्त्रदीपिकायामपि तथैवोक्तमित्याह प्राकृतस्यैवेति। नन्वाज्यनिष्ठचित्रतागुणस्यैव प्रकरणविनियोज्यत्वमस्त्वित्यत आह एवञ्चेति। आज्येनेति आज्येन क्लृप्तः प्रकृतौ सिद्ध उपकारो येषां तेषामित्यर्थः। नैराकाङ्क्ष्य इति। तथाच अनुयाजान् यजतीत्युक्ते केन द्रव्येण जुहोतीत्याकाङ्क्षायां प्रकृतितः प्राप्तस्याज्यस्य प्रकारान्तराभावात् कथम्भूतमाज्यमित्यवान्तराकाङ्क्षाया असम्भवान्नैराकाङ्क्ष्यम्। यूपस्य तु प्रकृतितः प्राप्तावपि नानाकाष्ठमयत्वसम्भवात् कथम्भूतो यूप इत्यवान्तराकाङ्क्षासम्भवेन प्रकृतितः खादिरत्वावगमात् प्रागेव सन्निहितमौदुम्बरत्वमन्वेति इति विशेष इति भावः। तर्हि चित्रतागुणस्य कथमन्वय इत्यत आह चित्रता गुणस्येति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्व्वाङ्गवत् न प्रकरणं विनियोजकं सम्भवति।

यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रतागुणो विधीयेत। तदा स गुणो यावदायाति तावत्प्रकृतेर्नैराकाङ्क्षाभावात् चित्रतागुणस्य च तावदेव विधानादुभयाकाङ्क्षा सम्भवात् प्रकरणविनियोगो भवेत्। न च तादृशः प्राकृतो गुणोऽस्ति

---

उपहोमादीति। उपहोमाः विकृतौ प्राकृतहोमादतिरिक्तत्वेन विहितहोमाः। ते च सौर्य्यायणयागे कृष्णलहोमाः। तथाच सौर्य्यं चरुं निर्व्वपेत् ब्रह्मवर्चसकाम इति श्रुतिविहितसौर्य्ययागस्य आग्नेयविकृतित्वेनाष्टमाध्यायप्रथमपादे सिद्धान्तितत्वात् तत्राग्नेयधर्म्माणां प्राप्त्या प्रयाजोऽपि प्राप्तः। तत्र प्रयाजे प्रयाजे कृष्णलं जुहोतीति श्रुत्या परिप्राप्तप्रयाजानुवादेन प्राकृतहोमातिरिक्तत्वेन कृष्णलहोमा विहिताः। यद्वा नक्षत्रेष्टौ प्राकृतहोमातिरिक्तत्वेन विहिता अग्निकृत्तिकादिहोमाः। तथाच पञ्चमाध्यायद्वितीयपादे शास्त्रदीपिकायाम्। अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्व्वपेदिति नक्षत्रेष्टिं विधाय उपहोमा विहिताः। सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति। प्रकृतौ तु प्रधानानन्तरं नारिष्टहोमा विहिता इत्युक्तम्। अतिदेशप्राप्तनारिष्टहोमानुष्ठानानन्तरमेव उपहोमानुष्ठानमिति तत्र सिद्धान्तितञ्च। तथाच उपहोमप्रभृतीनामपूर्व्वाङ्गानां प्रकृतितोऽप्राप्तानामङ्गानां विकृतिमात्रे विहितानामङ्गानामिति यावत्। यथा प्रकरणं न विनियोजकं किन्तु सान्निध्यरूपस्थानमेव, तद्वदित्यर्थः।

यदि प्राकृतगुणान्तरबाधेन चित्रतागुणो विधीयेत तदास्य प्रकरणविनियोज्यत्वं सम्भाव्येतेत्याह यदि हीति। स्थाने इति। प्राकृतगुणविशेषबाधेनेत्यर्थः। स गुण इति। यस्य स्थाने विधीयेत इति भावः। यावत् यावता कालेन। आयाति कर्त्तव्यताबुद्धिविषयो भवति। तावत् तत्कालपर्य्यन्तम्। नैराकाङ्क्षाभावात् साकाङ्क्षत्वात्। तावदेव तत्कालाभ्यन्तर एव। प्रकृतेतु न तथेत्याह न चेति। तादृशश्चित्रतागुणेन बाध्यः नान्यतमस्थानापन्न एव चित्रतागुणः स्यादित्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

षा ज्यस्यानुयाजानाञ्च चित्रतागुणात् प्रागेव विधानात्। तस्य तत्स्थानापन्नत्वाभावात्।

न चाज्यपृष्टभावेन यावत् प्राकृतं निर्गुणत्वमायाति तावदेवास्य विधानात् प्रकरणसम्भव इति वाच्यम्। निर्गुणत्वस्याविहितत्वेन पाणिकण्डूयनवदनङ्गत्वात् विकृतिस्तदाकाङ्क्षाभावात्। तथाहि। ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणत्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्नि अननुष्ठानम्। उत्तरेऽह्नि दक्षिणादानपूर्व्वकालीनैः पदार्थैः कृष्णविषाणकण्डूयनस्य शास्त्रविहितत्वे-

---

नन्वाज्यस्थानापन्न एव चित्रतागुणः स्यादित्यत आह आज्यस्येति। अनुयाजानां सम्बन्धे आज्यस्य च प्रागेव चित्रतागुणविधानात् पूर्व्वमेव विधानादित्यर्थः। आज्यप्राप्तिं विना चित्रतागुणविधानासम्भवादिति भावः। तत्स्थानेति। चित्रतागुणस्याज्यगतधर्म्मविशेषरूपतया तत्कार्य्यकारित्वाभावादित्यर्थः।

चित्रतागुणस्य गुणविशेषस्थानापन्नत्वशङ्कां निराकरोति न चेति। आज्यपृष्टभावेन कथम्भूतेनाज्येन प्रयाजान् यजतीत्याकाङ्क्षाविषयत्वेन। निर्गुणत्वं निर्गुणस्वरूप धर्म्मः। अस्य चित्रतागुणस्य। प्रकरणसम्भव इति। उभयाकाङ्क्षासम्भवादिति भावः। अविहितत्वेनेति। आज्येन यजतीति सामान्योक्तौ निर्गुणत्व सगुणत्वानुल्लेखादिति भावः। तदाकाङ्क्षेति। कथम्भूतेनाज्येन यजतीत्याकाङ्क्षाविरहादित्यर्थः। पाणिकण्डूयनवदिति दृष्टान्तं विवृणोति तथाहीति।

ज्योतिष्टोम इति। अत्रायमाशयः। ज्योतिष्टोमे प्रथमेऽह्नि दक्षिणादानं विहितम्। तदुपक्रमे कृष्णविषाणस्य त्यागोऽपि विहितः। दक्षिणादानानन्तरञ्च कानिचित्कर्म्माणि विहितानि। तेषु कर्म्मसु मध्ये कृष्णविषाणेन पाणेः कण्डूयनञ्च विहितम्। विकृतीभूते द्विरात्रादौ तु द्वितीयेऽह्नि दक्षिणादानं विहितम्। तेन वैकृतविशेषविधिमहिम्ना दक्षिणादानस्य प्रकृतिप्राप्तप्रथमाहकर्त्तव्यत्वबाधोऽभ्युपेयः। प्रकृतिप्राप्तानां दक्षिणादानेतरेषां दक्षिणादानसमयकर्त्तव्यदक्षिणादानोत्तरकालकर्त्तव्यानां कर्म्मणां विशेषाभावात् विकृतौ द्विरात्रादावपि प्रथमाहकर्त्तव्यता स्थिता। परन्तु विकृतौ दक्षिणादानपूर्व्वकर्त्तव्यकर्म्मगणैः सह कृष्णविषाणेन पाणेः कण्डूयनं विहितम्। तद्विधिमहिम्ना कृष्णविषाणत्यागस्यापि द्वितीयाहकर्त्तव्यता



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नापेक्षितत्वात्। ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽह्नि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालैः पदार्थैर्नापेक्ष्यते। तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति।

एवं निर्गुणत्वस्याविहितत्वेन प्रकृतिस्तदपेक्षा नास्तीति। तस्मादुभयाकाङ्क्षाया असम्भवात् पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीत्यलमतिविस्तरेण।

तदिदं महाप्रकरणं प्रकृताविव विनियोजकम्। विकृतौ तु यत् प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकम्।

---

प्रत्येतव्या। पूर्व्वाह्णपरित्यक्तत्वविपाकेन उत्तरेऽह्नि पाणिकण्डूयनासम्भवात्। एवञ्च प्रकृतौ दक्षिणादानोत्तरकर्म्मगणमध्यपठितं पाणिकण्डूयनं विकृतौ द्विरात्रादौ न पूर्व्वाह्णे नापि दक्षिणादानानन्तरं कर्त्तव्यम्। तदितराणि तु दक्षिणादानोत्तरविहितानि कर्म्माणि द्विरात्रादावपि प्रथमाह्न एव कार्य्याणीति सिद्धम्।

न च विकृतौ पाणिकण्डूयनस्य प्रथमोत्तराह्नयोर्द्विरनुष्ठानं स्यादिति वाच्यम्। प्रकृतिप्राप्तपाणिकण्डूयनस्यैव विकृतौ कालमात्रगुणविधानात् कर्म्मान्तरत्वाभावात्। न च प्रथमाह्नकर्त्तव्यतया विहितस्य द्वितीयाह्नकर्त्तव्यतायां न गुणत्वसम्भवः। विरुद्धधर्म्मत्वादिति वाच्यम्। प्रकृतौ शब्दतः प्रथमाह्नकर्त्तव्यतया विधानाभावात्। तत्र तस्य प्रथमाह्नकर्त्तव्यतायाः प्रथमाह्नविहितस्य दक्षिणादानानन्तरविधानबलेनार्थसिद्धत्वादिति। पदार्थैः कर्म्मभिः। सप्तम्यर्थः। दक्षिणादानोत्तरकालैः दक्षिणादानादुत्तरः कालो येषां तैः।

दृष्टान्तं प्रकृते योजयति एवमिति। यथा पाणिकण्डूयनस्य प्रथमाह्नकर्त्तव्यतया विहितत्वाभावेन प्रकृतेः प्रथमाह्नकर्त्तव्यत्वाकाङ्क्षा नास्ति तथा निर्गुणत्वस्याप्यविहितत्वेन प्रकृतेर्निर्गुणत्वाकाङ्क्षापि नास्ति। एवं पाणिकण्डूयनस्य यथा प्रथमाह्नकर्त्तव्यत्वमर्थसिद्धं तथाज्यत्वपुरस्कारेण विधानात् चित्रत्वादिगुणराहित्यस्याप्यर्थसिद्धत्वमित्यर्थः। उपसंहारेण विचारं समापयति तस्मादिति।

पूर्व्वप्रपञ्चपरिनिश्चितमर्थं सङ्क्षेपेणाह तदिदमिति। यदिति। औदुम्बरत्वादिकमित्यर्थः। प्राकृतेति। प्रकृतिप्राप्तमुपदिष्टदृष्टार्थाङ्गानुवादेनेत्यर्थः। विनियोजकमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न तु केवलं विधीयमानस्यापूर्व्वाङ्गस्येति। यत्तु विकृतावपि प्राकृतधर्म्मानुवादेन विधीयमानयोर्धर्म्मयोरन्तराले अपूर्व्वमप्यङ्गं केवलं पठ्यते, तदपि प्रकरणेन विनियुज्यते।

यद्यपि विकृतेः कथम्भावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति। तथापि यत्र प्राकृताङ्गानुवादेन धर्म्मविधानं तत्र तद्विधानं यावद्भवति तावत् कथम्भावाकाङ्क्षा न निवर्त्तते। अतो विकृति-वाक्याकाङ्क्षासत्त्वादन्तरालविहितस्य भाव्याकाङ्क्षासत्त्वात् युक्तं तस्य प्रकरणाद्विकृत्यर्थत्वम्। यथा आमनहोमेषु। ते हि प्राकृताङ्गा-नुवादेन विधीयमानयोर्धर्म्मयोरन्तराले विधीयन्ते इत्युक्तं तन्त्र-रत्नादावित्यास्तां तावत्।

---

अथाप्रकरणनिरूपणः। केवलं प्राकृताङ्गाननुवादेन। अपूर्व्वाङ्गस्य उपहोमादेः। इतीति विवक्षितमित्यन्वितम्।

प्राकृताङ्गाननुवादविहितस्यापि कस्यचित्प्रकरणेन विनियोजकत्वं भवतीति दर्शयति यत्त्विति। अन्तराले इति। यत्र आदौ कश्चित् प्राकृतधर्म्मानुवादेन धर्म्मो विहितः। अनन्तरं प्राकृतधर्म्माननुवादेन कश्चिद्धर्म्मो विहितः। तदनन्तरञ्च प्राकृतधर्म्मानुवादेन धर्म्मो विहितस्तत्र प्राकृतधर्म्मानुवादविहितयोरपूर्व्वाङ्गयोरन्तराले विहितत्वमित्यर्थः।

ननु प्रकृतिवदित्यनेनैव नैराकाङ्क्ष्यात् कथमुभयाकाङ्क्षारूपप्रकरणमत्र इत्याशङ्क्य निरा-करणायाह यद्यपीति। धर्म्मविधानम् अनेकधर्म्मविधानम्। तद्विधानं तेषां धर्म्माणां विधानम्। यावद्भवति यावता कालेन समाप्नोति। तावत् तद्विधानसमाप्तिकालपर्य्यन्तम्। अन्तरालविहितत्वेन प्रकरणाद्विकृत्यर्थत्वं युक्तमित्याह यथेति। आमनहोमेष्विति। वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकाम इति श्रुतिविहितां विकृतिभूतां सांग्रहणीमधिकृत्य आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति श्रुत्या विहिता ये आमनहोमास्तेष्वित्यर्थः। तेषां पूर्व्वं पश्चाच्च प्राकृतधर्म्मानुवादेन किञ्चित्किञ्चिदङ्गं विहितमित्यन्तरालविहितत्वमित्याह इतीति। तन्त्ररत्नादा-विति। तन्त्ररत्नं पार्थसारथिमिश्रकृतभाष्यटीकाविशेषः। आदिशब्दात् तत्कृतशास्त्रदीपिका-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । तच्च सन्दंशेन ज्ञायते । तदभावे अविशेषात् सर्व्वेषां फलभावनाकथम्भावेन ग्रहणात् ।

---

परिग्रहः । शास्त्रदीपिकाचतुर्थाध्यायचतुर्थपादे आमनहोमानां सांग्रहायण्यङ्गताधिकरणे फलार्थतावादिमिश्रैरभिहितं यथा । सांग्रहायण्याः प्रकरणाभावेऽपि सन्निधेरेव तदङ्गत्वसम्भवात् । आमनहोमा नाम प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि सम्भवादङ्गत्वमेव न्याय्यमिति । अनयोर्हि होमयोर्मध्ये अर्थसंग्रहकृता पूर्व्वङ्गेवनुसारेणामनहोमानां सन्निधिपाठादेव विकृत्यङ्गत्वमभिहितम् । पन्यकृता तु उत्तरङ्गेवनुसारेणेत्यविरोधः । महाप्रकरणं विचारादिरमति आस्तां तावदिति ।

अवान्तरप्रकरणं लक्षयति फलभावनाया इति । फलभावनायाः कथम्भावाकाङ्क्षाया इत्यर्थः । अन्तराले मध्ये । अङ्गभावनायाः अङ्ग विधिप्रतिपाद्यभावनायाः । प्रकरणम् अङ्गभावनाया इतिकर्त्तव्यताकाङ्क्षा, तस्याश्चेतिकर्त्तव्यतायाः फलभावनाकाङ्क्षा, इत्युभयाकाङ्क्षारूपम् । तच्च अवान्तरप्रकरणञ्च । अभिक्रमणेति । अभिक्रमणं होमकाले आहवनीयमभितः सञ्चरणम् । होमकाले आहवनीयसमीपे वर्त्तनमिति यावत् । तथाचोक्तं भाष्यकारैः—

"अभिक्रमणेन समासीदति आहवनीयं कर्त्ता । इयमभ्युपायभूतं होमस्य दूराद्वा अभिप्रसार्य्य हस्तं जुहुयात् समासीदेद्वा अभिक्रमणेन । तस्मादभिक्रमणमुपकरोति होमस्येति ।"

अवान्तरप्रकरणाङ्गीकारे प्रमाणमाह तच्चेति । अवान्तरप्रकरणञ्चेत्यर्थः । सन्दंशेन प्रयाजाङ्गविधीनामन्तरालविहितत्वेन । अवान्तरप्रकरणानङ्गीकारे सन्दंशपतितानामपि प्रधानाङ्गत्वापत्त्या न्यायविरोधः स्यादित्याह तदभाव इति अविशेषादङ्गाङ्गत्वे प्रमाणाभावात् । सर्व्वेषां प्रयाजानां तदङ्गसन्दंशपतिताभिक्रमणादीनाञ्च । ग्रहणात् ग्रहणप्रसङ्गात् । तथाच सन्दंशपतितन्यायविरोध इति भावः । तथाहि प्रयाजपदोल्लेखेन यान्यङ्गानि विहितानि यानि वा प्रयाजपदोल्लेखेन विधास्यन्ते तेषां तावत् प्रयाजाङ्गत्वं वक्तव्यमेव । सुतरां तन्मध्यपठितस्यापि तदङ्गत्वमवश्यमभ्युपगन्तव्यम् । तथाच शास्त्रदीपिकातृतीयाध्यायप्रथमपादे मिश्राः—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सन्दंशो नाम एकाङ्गानुवादेन विधीयमानयोरन्तराले विहितत्वम्। यथाभिक्रमणम्। तद्धि "समानयत उपभृत" इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधायविधीयते। पश्चादपि प्रयाजानुवादेन "यो वै प्रयाजानां मिथुनं वेदे"त्यादिना किञ्चिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति। तत्कथम्भावाकाङ्क्षाया अभावात्तेः। यथाहुः—

परप्रकरणस्थानासङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते॥ इति।

---

भवेदिदं प्रयाजानां नास्ति प्रकरणं यदि।
तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा॥
पश्चाच्च ये विधास्यन्ते तैः सन्दष्टमिदं श्रुतम्।
अभिक्रामं जुहोतीति न ततोऽन्यत्र गच्छति॥ इति।

सन्दंशं लक्षयति सन्दंशो नामेति। एकेति एकस्य यस्य कस्यचित् प्रधानाङ्गस्य प्रकृते प्रयाजाद्यङ्गस्य अनुवादेन उद्देशेनेत्यर्थः। अन्तराले मध्ये। सन्दंशपतितमुदाहरति यथेति श्रुतिवाक्येनाभिक्रमणे सन्दंशपतितत्वं योजयति तद्धीति। हि यस्मात्। तत् अभिक्रमणम्। विधीयत इत्यन्वयः। यतः प्रयाजसम्बन्धिकिञ्चिदङ्गविधानादनन्तरमभिक्रमणं विधीयते पश्चाच्चापरं प्रयाजसम्बन्धि अङ्गं विधीयते तस्मादभिक्रमणे प्रयाजाद्यङ्गसन्दंशः सिध्यतीति भावः। प्रयाजानुवादेन प्रयाजोद्देशेन। विधीयते "यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो वांऽकेभ्यो भ्रातृव्यान्नुदते अभिक्रामं जुहोतीति श्रुत्येति शेषः। पश्चादभिक्रमणविधानानन्तरम्। मिथुनं वेदेत्यादिपदात् स समिधो यह्वीरिव जुहोतीत्युत्तरप्रतीकपरिग्रहः। इदमुपलक्षणम्। स समिधो यह्वीरिव यजतीत्यनन्तरमाम्नातया प्रयाजानिष्ट्वा हवींष्यभिघारयतीति श्रुत्या हविरभिघारणपूर्वत्वविशिष्टक्रिया प्रयाजसमापनाभिधानात् हविरभिघारणपूर्वक्रियायां प्रयाजसम्बन्धिकर्मत्वावगमादपि अभिक्रमणस्य प्रयाजाङ्गसन्दष्टत्वं प्रत्येतव्यम्। एवमेव तृतीयाध्याय प्रथमपादे शास्त्रदीपिका। उपसंहरति अत इति। तत्कथम्भावेति। प्रयाजकथम्भावेत्यर्थः। अत्र प्रमाणमाह यथाहुरिति।

परेति। परप्रकरणस्थानामन्यान्तरप्रकरणस्थानां मध्ये कस्मिंश्चित् कस्मिंश्चित्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न चाङ्गभावनायाः कथम्भावाकाङ्क्षाभावात् कथं प्रयाज-भावना कथम्भावेनाभिसम्बध्यते इति वाच्यम्। भावना-साम्येन सर्व्वत्र कथम्भावाकाङ्क्षायाः सत्त्वात्। प्रयाजैरपूर्व्वं कृत्वा यागोपकारं भावयेदित्युक्ते, यो नाम न जानाति प्रयाजैरपूर्व्वं कर्त्तुं तस्यास्त्येव कथम्भावाकाङ्क्षा, कथमेभिरपूर्व्वं कर्त्तव्यमिति। सा च सन्दंशपतितैर्वाचनिकैः स्मार्त्तैर्वाऽऽचमनादिभिः शाम्यति।

---

कर्म्मणि श्रुत्यादिप्रमाणैः अङ्गे ज्ञाते अङ्गत्वेन निश्चिते सति पुनस्तैः अङ्गत्वेन निश्चितैः कर्म्मभिः सन्दंशेन मध्यपातितत्वेन च हेतुना तत् अङ्गम् इष्यते इत्यर्थः।

अथाकरणकरणानपेक्षपूर्वमीमांसकानां मतं निराकरोति न चेति। प्रयाजेति। प्रयाजभावनाया प्रयाजसम्बन्धकविधिप्रतिपाद्यभावनायाः प्रयाजैर्भावयेदित्येवंरूपाया यः कथम्भावः कथं भावयेदित्याकाङ्क्षारूपस्तेनेत्यर्थः। गृह्यत इति। कथमित्यनेन सम्बन्धान् गृह्यत इत्यर्थः। तत्रैव हेतुरुक्तः अङ्गभावनायाः कथम्भावाभावादिति। भावनासाम्येन अङ्गभावनायाः प्रधानभावनातुल्यत्वेन। द्वयोरपि भावनात्वाविशेषेणेति यावत्। सर्व्वत्र प्रधानभावनायामङ्गभावनायाञ्च। भावनामात्रस्य किं केन कथमित्यपेक्षितांशत्रयवत्त्वनियमादिति भावः।

अङ्गभावनायाः कथम्भावाकाङ्क्षां प्रकाशयति प्रयाजैरिति। प्रयाजानामलौकिकव्यापारत्वेन तत्प्रकारदर्शिभिः श्रुतिनिर्दिष्टैः ज्ञानमशक्यत्वादिति भावः। सा कथम्भावाकाङ्क्षा। सन्दंशपतितैरभिक्रमणादिभिः। वाचनिकैः समानयत उपभृतस्तेजो वा इत्यादिश्रुतिबोधितैः। स्मार्त्तैः अन्तरा क्षुतादौ जाते क्षुत आचामेदित्यादिस्मृतिबोधितैः। तथाच यदङ्गात् प्राक् क्षुतं जातं तदङ्गस्यापि कर्तृसंस्कारद्वारा तदाचमनमङ्गम्। क्षुते जाते कथं कुर्यादित्याकाङ्क्षायाः क्षुत आचामेदित्यनेन शान्तेः। नन्वेवमनवस्थापत्तिः। अङ्गाङ्गानामपि कथम्भावाकाङ्क्षायाः सम्भवात्। अङ्गभावनात्वाविशेषादित्यत आह तदभाव इति। सन्दंशेन श्रुति स्मृतिभ्यां वा धर्म्मविशेषप्रतिपादनाभावे इत्यर्थः। स्वरूपेति। यथाश्रुतकर्म्मविशेषानुष्ठानमात्रेणेत्यर्थः। तथाच यत्र तदङ्गप्रकारविशेषप्रतिपादकप्रमाणविशेषो नास्ति तत्र कथं कुर्यादित्याकाङ्क्षासत्त्वेऽपि यत्कार्य्यं विहितं तत्कार्य्यं विधिवाक्ये यः प्रकार उपलभ्यते तत्प्रकारानुष्ठानेनैव तदाकाङ्क्षा शाम्यतीति नानवस्थाप्रसङ्ग इति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदभावे च स्वरूपनिष्पादनेन दर्व्विहोमन्यायेन निवर्त्तते। दर्व्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तया व्यापारो न श्रूयते। नाप्यतिदेशेन तत्प्राप्तिः। यागीयानां धर्म्माणां तावन्नातिदेशः। यागत्वेन होमत्वेन वैलक्षण्यात्। नापि होमीयानाम्। कस्य होमस्य धर्म्माः कस्मिन् होमे प्रवर्त्तेरन् इति विशेषानिर्णये प्रमाणाभावात्।

अतो धर्म्मप्राप्त्यभावाद्दर्व्विहोमैरिष्टं भावयेत् कथमित्युत्पन्नाप्याकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति। एवं येष्वङ्गेषु सन्दंशाद्य-

---

तदेवोपदर्शयति दर्व्विहोमेति। यदेकया जुहुयात् दर्व्विहोमं कुर्य्यादिति श्रुतिविहितदर्व्विहोमेत्यर्थः। स च न्यायोऽष्टमाध्यायचतुर्थपादेऽनुसन्धेयः। तत्र यथा दर्व्या होमो दर्व्विहोम इति व्युत्पत्तिलभ्यार्थोपस्थितौ दर्व्विकरणकहोमः कथं करणीय इत्याकाङ्क्षा स्वरूपनिष्पादनेन शाम्यति तथा अग्निहोत्रं जुहोतीत्यादौ जायमानायामपि कथम्भावाकाङ्क्षायाम् अभि॰ चादवगीयसमीपे, क्रान्त्या सत्यर्थ्यैर्य्यर्थोपस्थितौ यथाश्रुतानुष्ठानेनैवासौ शाम्यतीति भावः। दर्व्विहोमेषु इतिकर्त्तव्यतोपदेशविरहादेव स्वरूपनिष्पादनस्याकाङ्क्षानिवर्त्तकत्वमिति साधयति दर्व्विहोमेष्विति। तया व्यापारः इतिकर्त्तव्यताख्यव्यापारः।

ननु यागत्वात् यागधर्म्मातिदेशसम्भव इत्यत आह यागीयानामिति। वैलक्षण्यादिति। देवतोद्देशेन द्रव्यत्यागो यागः। अग्निप्रक्षेपावच्छिन्नत्यागो होम इति यागहोमयोर्लक्षणभेदादित्यर्थः। तर्हि होमपदाद्धोमधर्म्माणामतिदेशसम्भव इत्यत आह नापीति। कस्य होमस्येति। नानाहोमानां विभिन्नेतिकर्त्तव्यताकत्वादिति भावः। कस्मिन्निति। वैदिकलौकिकानां बहूनां होमानां दर्व्विहोमसंज्ञकत्वस्याष्टमाध्यायचतुर्थपादे सिद्धान्तितत्वादिति भावः। विशेषनिर्णय इति। व्याख्यानव्यवसायाप्राप्तिरिति भावः।

अत इति। उपदेशातिदेशयोरभावादित्यर्थः। स्वरूपेति। दर्व्विकरणकहोममात्रेणेत्यर्थः। तदभावे च स्वरूपनिष्पादनेन दर्व्विहोमन्यायेन निवर्त्तत इति यदुक्तं तदुपसंहरति एवमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भावस्तत्रोत्पन्नाप्याकाङ्क्षा तेनैव निवर्त्तते । सर्व्वथा तदभावः । तस्मादयुक्तमुक्तमभिक्रमणं प्रयाजाङ्गमिति ।

तच्चेदमवान्तरप्रकरणं महाप्रकरणाद्बलीयः । सन्दंशपतितानां धर्म्माणां केमर्थ्याकाङ्क्षायां प्रधानापूर्व्वात् प्रयाजाद्यपूर्व्वस्य झटित्युपस्थितेरिति । प्रकृतमनुसरामः । तस्मिन्नुभयविधस्य प्रकरणस्य विनियोजकत्वम् ।

तदिदं स्थानादिप्रमाणाद्बलवत् यत्र हि स्थानादङ्गत्वं

---

दर्व्विहोमवदित्यर्थः । सन्दंशादीत्यादिपदात् श्रुतिप्रकृतिवचनपरिग्रहः । तेनैव स्वरूपनिष्पादनेनैव । सर्व्वथेति । न कथमप्याकाङ्क्षासद्भाव इत्यर्थः । एवञ्च विधिबोधितकर्म्मणो लोकप्रसिद्धत्वे लोकादेव तत्प्रकारविशेषस्य ज्ञायमानतया तत्र कथम्भावाकाङ्क्षा जायमानापि लौकिकार्थावधारणादेव शाम्यति । विधिबोधितकर्म्मणः अलौकिकत्वे तु वेदमन्तरेण तत्प्रकारविशेषस्यानुपलभ्यमानतया मुख्यभावनायामिवाङ्गभावनायामपि कथम्भावाकाङ्क्षावश्यमेव भवति, शाम्यति च वेदवाक्यान्तरसमर्पितप्रकारविशेषप्रतिपत्त्येति निष्कर्षः ।

एतेन प्रधानविधावेव कथम्भावाकाङ्क्षा, न त्वङ्गविधावपि । तस्मादवान्तरप्रकरणं नाङ्गीकर्त्तव्यम् । प्रयाजाद्यवादेन विहितानां कर्म्मणां प्रयाजाद्यङ्गत्वन्तु वाक्यादेव, न त्ववान्तरप्रकरणात् । यत्तु लिङर्थभावनासाम्ये नाङ्गविधावपि कथम्भावाकाङ्क्षासम्भव इति तन्न । न हि भावनायाः कथम्भावाकाङ्क्षाव्याप्यत्वम् । होमकाले आहवनीयमभिक्रामेदित्यादौ तदभावात् । तत्रापि तत्सद्भावाभ्युपगमे अनवस्थापत्तिरित्येकदेशिमतमपाकृतम् । अभिक्रमणस्य प्रयाजाङ्गत्वसिद्धान्तमुपसंहरति तस्मादिति ।

नन्ववान्तरप्रकरणसद्भावेऽपि तत्र महाप्रकरणस्यापि सत्त्वात् महाप्रकरणबलेनाभिक्रमणस्य प्रधानाङ्गत्वमेवास्तु, किं विनिगमकं प्रयाजाद्यङ्गत्वे इत्यत आह तच्चेदमिति । झटितीति । प्रयाजाद्यपूर्व्वस्य सन्निहितत्वादिति भावः ।

इदानीं प्रकरणप्रमाणस्योत्तरप्रमाणात् बलवत्त्वं प्रतिपादयति तदिदमिति । प्रकरणमित्यर्थः । श्रुतिलिङ्गादिसूत्रे स्थानसमाख्ययोरुत्तरोत्तरनिर्द्दिष्टत्वादाह स्थानादिप्रमाणादिति । स्थानसमाख्याभ्यामित्यर्थः । प्रकरणञ्च स्थानादर्वाक्तनं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्दान्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम् । न च साकाङ्क्षं निराकाङ्क्षेण सम्बद्धुं योग्यं, विनाकाङ्क्षोत्थापनेन । अतश्चान्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं कल्पयितुमारभ्यते, तावत्प्रकरणेन वाक्यं कल्पयित्वा विनियोगः क्रियते इति स्थानात् प्रकरणस्य बलीयस्त्वम् ।

अतएव विदेवनादयो धर्म्मा अभिषेचनीयसन्निधौ पठिता

---

शीघ्रोपस्थापकत्वं बीजमाह यत्र इति । अन्यतरस्य प्रधानस्य । प्रकारान्तरेण प्राप्ततद्धर्म्म प्राप्त्यादिना । निराकाङ्क्षत्वं कथम्भावाकाङ्क्षाराहित्यम् । निराकाङ्क्षेण सम्बद्धमिति । सम्बन्धं प्रति परस्पराकाङ्क्षायाः प्रयोजकत्वादिति भावः । विनेति । तेन आकाङ्क्षामुत्थाप्य अन्वयो वक्तव्य इति भावः । अन्यतराकाङ्क्षया अङ्गविधेः कैमर्थ्याकाङ्क्षया । उभयाकाङ्क्षेति । प्रधानस्याप्याकाङ्क्षोत्थापनादिति भावः । वाक्यादिकं वाक्यलिङ्गश्रुतिरूपम् । तावत् तावता कालेन । वाक्यं कल्पयित्वेति । वाक्यादिकं कल्पयित्वेत्यर्थः । तथाच स्थानात् प्रकरणवाक्यलिङ्गश्रुतिकल्पना । प्रकरणात्तु वाक्यलिङ्गश्रुतिकल्पनेति विनियोगस्य शीघ्रोपस्थितिरिति भावः ।

अतएवेति प्रकरणस्य स्थानाद्बलवत्त्वादेवेत्यर्थः । तृतीयाध्यायतृतीयपादे श्रुतिलिङ्गाधिकरणे प्रकरणस्य स्थानाद्बलवत्त्वं सिद्धान्तितं यथा । अस्ति राजसूयो नाम यज्ञविशेषः । तत्र पशुयागा इष्टयः सोमयागाश्चेति बहवः प्रधानयागाः सन्ति । यैर्मिलितैरेको राजसूयाख्यः स्यात् । तत्र कश्चित् सोमयागः अभिषेचनीयाख्यो विहितः । तत्सन्निधौ विदेवनादयो धर्म्माः समाम्नाताः । यथा अक्षैर्दीव्यति, पृष्ठौहीं दीव्यति, राजन्यं जिनाति, शौनः शेफं समाख्यापयति इति । यावता वयसा पृष्ठे भारं वोढुं शक्तिर्भवति तावद्वयस्का पृष्ठौहीति चतुर्थाध्यायचतुर्थपादे न्यायमाला । जिनाति जयति । शौनःशेफ शुनःशेफनाम्नो मुनिविशेषस्योपाख्यानं बह्वृच ब्राह्मणे समाम्नातमिति तृतीयाध्यायतृतीयपादे माधवाचार्य्याः ।

अत्र संशयः । किं सन्निधिरूपस्थानात् विदेवनादयो अभिषेचनीयार्थाः उत राजसूयगतपशु यागादिसर्व्वयागार्था इति । अत्र प्रकरणस्य स्थानादिति बलवत्त्वेन राजसूयघटकसर्व्वयागार्था एव विदेवनादय इति निर्णीयते । तथाहि क्लृप्तायामनुवर्त्तमानायां राजसूयकथम्भावाकाङ्क्षायां पठिता विदेवनादयो महाप्रकरणेन राजसूयाङ्गतामर्हन्ति । अभिषेचनीयस्य तु सोमयागत्वेन



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अपि नाभिषेचनीयस्याङ्गम्। तेषां तदङ्गत्वं स्थानाद्भवेत्, न तु प्रकरणात्। अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात् प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात्। किन्तु प्रकरणाद्राजसूयाङ्गम्।

ननु राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजसूयशब्दस्याव-न्नामधेयत्वादाख्यातपरतन्त्रो यत्राख्यातं वर्त्तते तत्रैव वर्त्तते।

---

ज्योतिष्टोमविकृतितया प्राकृतैरेवाङ्गैर्निराकाङ्क्षीकृतत्वात् तेषां तदङ्गत्वानुपपत्तेः। सन्निहितविधि-यत्नादभिषेचनीयकथम्भावाकाङ्क्षारूपावान्तरप्रकरणपरिकल्पनापेक्षया क्लृप्तमहाप्रकरणस्य सन्निकृष्ट-त्वाच्चेति।

एतदेवोदाहरणमाह विदेवनादय इति। विशिष्टा देवनादयो विदेवनादयः। वैशिष्ट्यञ्च देवनस्य अक्षादिकरणकत्वम्। यजनस्य राजन्यकर्त्तृकत्वम्। समाख्यापनस्य च शौनःशेफकर्म्मकत्वमिति। विदेवनादीनामभिषेचनीयाङ्गत्वाङ्गीकारे स्थानादेवाङ्गत्वं वक्तव्यं न तु प्रकरणादित्याह तेषामिति। अभिषेचनीयाङ्गत्वाभावे हेतुमाह अभिषेचनीयस्येति। अव्यक्तेति। यागास्त्रिविधाः। केचिदिष्टिसंज्ञकाः, केचित्पशुसंज्ञकाः, केचिच्च सोमसंज्ञकाः। ते च तत्तद्विधिवाक्येषु तत्तल्लिङ्गदर्शनात् इष्टित्वेन पशुत्वेन च प्रत्येतव्याः। तत्र यस्मिन् विधिवाक्ये लिङ्गविशेषाश्रवणं तद्विधिबोधितस्याव्यक्तचोदनाचोदितत्वम्। तस्य च "अव्यक्तासु सोमस्य" इत्यष्टमाध्यायप्रथमपादसूत्रात् सोमयागत्वम्। सोमयागस्य तु ज्योतिष्टोमविकारत्वमिति सिद्धान्तः। अत उक्तं ज्योतिष्टोमविकारत्वादिति। निराकाङ्क्षादिति। तथाच उभयाकाङ्क्षा-रूपप्रकरणासिद्धिरिति। भावः। प्रकरणादिति। राजसूय प्रकरणस्य अनुवर्त्तमानत्वा-दिति भावः।

राजसूयपदस्य तद्घटकनिखिलयागोपस्थापकत्वात् तेषाञ्च सर्व्वेषामेव स्वस्वप्रकृतिधर्म्म-प्राप्त्या निराकाङ्क्षत्वाद्राजसूयस्य पृथगाकाङ्क्षाविरहेण विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वं न घटते इत्याशङ्कते नन्विति। स्वाराज्यं स्वर्गदेशराजत्वम्। आख्यातपरतन्त्र आख्यातप्रवृत्त्य-धीनप्रवृत्तिकः। हेतुगर्भविशेषण मिदम्। यत आख्यातपरतन्त्रः अत इत्यर्थः।

यत्राख्यातमिति। अत्रायमाशयः। राजसूयेन स्वाराज्यं भावयेदित्यक्त-स्य राजसूयसंज्ञत्वमिति न प्रतीयते। अत एव निश्चेतव्यं यत् येन स्वाराज्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यथा दर्शपौर्णमास-पदं नामधेयमपि नाख्यातपरतन्त्रम्। तत्र हि यजेतेत्याख्यातमविशेषात् सर्व्वानेवाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थम्। दर्शपौर्णमासपदन्त्वाग्नेयादीनेव वदति, न सर्व्वान्। अतश्च न तदाख्यातपरतन्त्रम्। तथा राजसूयपदमपि किं न स्यादिति वाच्यम्। सिद्धेन हि पदेनाप्रसिद्धं निर्णीयते। यथाहुः—

पदमज्ञातसन्दिग्धं प्रसिद्धेरपृथक् श्रुति।
निर्णीयते निरूढ़न्तु न स्वार्थादपनीयते॥ इति।

---

भावयेत् तदेव राजसूयसंज्ञकमिति। एवञ्च उत्तरवाक्येन कतिपयपश्विष्टिसोमयागविशेषाणां स्वाराज्यभावनाकरणत्वेन निर्द्देशात् तेषामेव राजसूयनामकत्वं वाच्यम्। तस्माद्राजसूयस्य पृथगाकाङ्क्षाविरहेण विदेवनादीनां तद्घटकसर्व्वयागाङ्गता न युक्तेति।

ननु दर्शपौर्णमासशब्दयोरपि प्रागुक्तयुक्त्या आग्नेयादित्रितयवाचकत्वात् पृथगाकाङ्क्षाविरहेण प्रयाजादीनामाग्नेयादित्रितयाङ्गत्वं न स्यात्। स्याच्च यत्सन्निधावाम्नातं प्रयाजादिकं तस्यैवाङ्गत्वम्। अतस्तव यथा संज्ञाया नाख्यातपरतन्त्रत्वं तथा राजसूयपदस्यापि नाख्यातपारतन्त्र्यं वाच्यमित्यापत्तिं पूर्व्वपक्षी निराकरोतीति न चेति। दर्शपौर्णमासपदयोरप्याख्यातपरतन्त्रत्वाङ्गीकारे को दोष इत्यत आख्यातपरतन्त्रत्वाभावे हेतुप्रदर्शनमुखेन दोषमाह तत्र हीति। प्रयाजादींश्चेति। यदि तु उत्तरवाक्यैर्येन येन स्वर्गभावनाभिहिता दर्शपौर्णमासपदयोस्तद्वाचकत्वं मन्यते तदोत्तरवाक्येनाग्नेयादीनामिव प्रयाजादीनाञ्चाभिधानात् तद्वाचकत्वमपि स्यादिति भावः। परन्तु दर्शपौर्णमासपदमाग्नेयादित्रितयवाचकमेव न पुनः प्रयाजादीनामपि वाचकमित्याह दर्शपौर्णमासपदन्त्विति। तत् दर्शपौर्णमासपदम्। आख्यातपरतन्त्रमाख्यातवाच्यानां सर्व्वेषां वाचकम्। तथेति। दर्शपौर्णमासपदवदित्यर्थः।

आपत्तिनिराकरणे हेतुमाह सिद्धेन हीति। निश्चितार्थेनेत्यर्थः। अप्रसिद्धमर्थमनिश्चितार्थम्। अत्र प्रमाणमाह यथाहुरिति।

पदमिति अपृथक्श्रुति नास्ति पृथक्श्रुतिः श्रुत्यन्तरं यस्य तत्। अतएव अज्ञातसन्दिग्धम् अज्ञातार्थं सन्दिग्धार्थं वा पदं प्रसिद्धैः परिनिश्चितार्थैः पदैर्निर्णीयते। तथाच यत्र श्रुत्यन्तरमर्थाव-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दर्शपौर्णमासपदस्य कालनिमित्तम्। तद्योगश्चाग्नेयादिषूत्पत्ति वाक्यैरवगतः। अतस्तद्वाचित्वेन दर्शपौर्णमासपदं प्रसिद्धम्। न चाग्नेयादीनां बहुत्वात् द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः।

---

बोधकं नास्ति तत्र पदविशेषस्यार्थानवधारणे सति निश्चितार्थैः पदैरेव तदर्थावधारणं कर्त्तव्यमिति भावः। निरूढं प्रसिद्धार्थन्तु पदं प्रमाणान्तराभावेऽपिस्वार्थान्नापनीयते मुख्यार्थादन्यत्र न नीयत इत्यर्थः।

तथाच राजसूयपदस्यार्थग्राहकप्रमाणाभावेनानिश्चितार्थतया प्रधानीभूताख्यातपरतन्त्रत्वमेव युक्तम्। दर्शपौर्णमासपदस्य तु प्रसिद्धार्थतया नाख्यातपारतन्त्र्यमन्यत्र नेयत्वमिति भावः। दर्शपौर्णमासपदस्य कथं प्रसिद्धार्थत्वमित्यत आह दर्शपौर्णमासपदस्येति। कालेति। कालः काल-विशेषो दर्शः पौर्णमासी च निमित्तं प्रवृत्तिनिमित्तं यस्य तत्तथा। तथाच अमावास्यायाम-मावास्यया यजेत पौर्णमास्यां पौर्णमास्या यजेतेति श्रुत्या अमावास्यायां यद्यष्टव्यं तद्दर्शसंज्ञं यच्च पौर्णमास्यां यष्टव्यं तत्पौर्णमाससंज्ञमिति प्रतीतेरमावास्यापौर्णमासीकर्त्तव्ययागविशेषद्वयेन प्रथममेवावधार्यत इति नाज्ञातार्थं सन्दिग्धार्थं वा दर्शपौर्णमासपदमिति भावः।

नन्वाग्नेयादिवत् प्रयाजादीनामपि दर्शपौर्णमासीकर्त्तव्यतायोगात् कालविशेषनिमित्त-त्वाङ्गीकारेऽपि प्रयाजादीनामपि वाचकं दर्शपौर्णमासपदमस्त्वित्यत आह तद्योगश्चेति। दर्श-पौर्णमासीकर्त्तव्यतारूपो योग इत्यर्थः। आग्नेयादिषु आग्नेयादिष्वेव। उत्पत्तिवाक्यैरिति। आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति। उपांशुयाजमन्तरा यजति। ताभ्यामग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्। ऐन्द्रं दध्यमावास्यायाम्। ऐन्द्रं पयोऽमावास्यायामित्येतैरित्यर्थः।

तथाच दर्शपौर्णमासीकर्त्तव्ययागविशेषावगमाय आग्नेयोऽष्टाकपाल इत्यादिकर्मस्वरूप-ज्ञापकोत्पत्तिवाक्यरूपपृथक्श्रुतिलाभात् आख्यातप्रवृत्तिज्ञानात् प्रागेव तद्बोधितकर्मस्वेव दर्श-पौर्णमासपदं प्रवर्त्तते। तत्र प्रयाजादीनामुल्लेखाभावान्न प्रयाजादिषु। राजसूये तु तादृश-पृथक्श्रुत्यभावाद्राजसूयपदार्थावधारणाऽऽकाङ्क्षायां पदप्रवृत्तिरनुसन्धेयैवेति भावः।

दर्शपौर्णमासपदस्याग्नेयादिषड्यागवाचकत्वात् द्विवचनान्तत्वानुपपत्तिरिति माध्यमि कमशङ्कामपाकरोति न चेति। विद्वदिति। वेदविदित्यर्थः। वाक्यद्वयम् अमावास्यायाममावास्यया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च दर्शपौर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेते त्याख्यातमपि तानेव वदति । न हि तदुक्तौ स्वार्थत्यागो भवति । राजसूयपदन्त्वनिर्णीतार्थम् । अतस्तदाख्यातपरतन्त्रमेव । तच्चाविशेषात् सर्व्वेषु इष्टिपशुसोमेषु विद्यते । तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति ।

---

यजेत पौर्णमास्यां पौर्णमास्या यजेतेति श्रुतिद्वयम् । समुदायद्वयमिति । आग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोरूपयागत्रयात्मक एकः समुदायः । आग्नेयाष्टाकपालोपांशुयाजाग्नीषोमीयरूपयागत्रयात्मकोऽपरः समुदाय इति समुदायद्वयमित्यर्थः । तदुपपत्तेर्द्विवचनोपपत्तेः । तथाच दर्शपदमेकयागतापन्नाग्नेयादिसमुदायवाचकम्, पौर्णमासपदञ्चैकयागतापन्नाग्नेयादिसमुदायवाचकमिति तत्पदयोर्द्विवचनान्तत्वोपपत्तिरित्याशयः ।

एवञ्चेति । दर्शपौर्णमासपदस्य कालनिमित्तत्वेन प्रसिद्धार्थत्वे सतीत्यर्थः । तानेव आग्नेयादियागानेव । ननु तथात्वे आख्यातपदस्य स्वार्थत्यागः स्यादित्यत आह नहीति । स्वार्थत्याग इति । अग्नेयादीनां यागत्वात् यजेतेत्यस्य तद्वाचित्वे यागेतरवाचित्वाभावादिति भावः । राजसूयपदे एतद्वैलक्षण्यं दर्शयति राजसूयपदन्त्विति । तच्च आख्यातपदञ्च ।

नन्वृत्तरवाक्यैरिष्टिपशुसोमवत् विदेवनादिनामपि भावनाकरणत्वेनाभिधानात् तत्र तत्रापि वर्त्ततां राजसूयपदम् । कथमिष्टिपशुसोमानेव वदतीत्युच्यत इति चेन्न । राजसूयेन यजेतेत्यत्र आख्यातप्रकृतिभूतेन यजधातुना निर्द्देशात् येन येन यागेन भावयेत् तद्वाचकत्वप्रतीतेरिष्टिपशुसोमयागवाचकत्वस्यैव न्याय्यत्वात् । विदेवनादीनान्तु यागत्वाभावेन तद्वाचकत्वासम्भवात् । अतएव चतुर्थाध्यायचतुर्थपादे सिद्धान्तसूत्रम् ।

अपि वाङ्गमनिज्याः स्युस्ततो विशिष्टत्वादिति ।

अपि वेति पूर्व्वपक्षव्यावृत्तिः । या अनिज्यास्ता अङ्गम् । यथा विदेवनादयः राजसूयसंज्ञकेन यागेन स्वाराज्यं कुर्य्यादित्युच्यमाने यागेनैव स्वाराज्यं साध्यते, न अयागेन । अयागाश्च विदेवनादयः । तस्मादङ्गं भवेयुरिति भाष्यम् ततो विशिष्टत्वात् यागाद्भिन्नत्वादित्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च राजसूयशब्दस्य राजा सूयते यत्रेति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात् तस्य च सोममभिषुणोतीति वाक्येन सोमयागे अवगतत्वात् तद्वाचित्वमेव नेष्टिपशुवाचित्वमिति वाच्यम्। न हि अभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति। तद्वाक्यस्य ज्योतिष्टोमे सत्त्वात्। अतिदेशात्तत्सम्बन्धोऽवगत इति चेन्न। अतिदेशस्य फलसम्बन्धोत्तरकालीनत्वेन राजसूयेन स्वाराज्यकामो यजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात्। अनेन हि वाक्येन फलसम्बन्धे बोधिते पश्चात् कथम्भावाकाङ्क्षायामतिदेशकल्पनात्। अतस्ततः प्रागेव एतद्वाक्यार्थो वर्णनीयः। तदा चाभिषवस्यानवगतत्वाद्राजसूय-

आपत्त्यन्तरं निराकरोति न चेति। राजा सोमः। सोमं राजानमक्रीणन्निति श्रुतेः। सूयते सो निष्पीड्यते। सोमाभिषवेति। सोमाभिषवो निमित्तं प्रवृत्तिनिमित्तं यस्य तत्त्वादित्यर्थः। तस्य सो माभिषवस्य। अभिषुणोति निष्पीडयति। तद्वाचित्वं सोमयागवाचित्वम्। नेष्टीति। तथाच राजसूयकर्त्तव्येषु इष्टिसोमपशुषु मध्ये सोमस्यैव राजसूयपदवाच्यत्वात् प्राधान्यम्। इष्टिपशुयाग योस्त्वङ्गत्वमिति भावः। प्रत्यक्षेणेति। तथाच अभिषेचनीयादौ सोमाभिषवस्य प्रत्यक्षश्रुत्य भावात् राजसूयपदस्य निरुक्तव्युत्पत्तिर्न घटत इति भावः। प्रत्यक्षश्रुत्यभावेऽपि ज्योतिष्टोमाति देशाल्लभ्यत इत्याशङ्कते अतिदेशादिति। फलसम्बन्धेति। फलस्य करणत्वेनान्वयेत्यर्थः।

अयमाशयः। राजसूयस्य स्वाराज्यभावनाकरणत्वेनान्वये सिद्धे कथम्भावयेदिति करण गतप्रकाराकाङ्क्षा जायते। तदनन्तरश्चातिदेशाविर्भावः सम्भवति। करणत्वान्वयबोधात् प्राक्करणगतप्रकाराकाङ्क्षाया असम्भवात्। स च करणत्वेनान्वयबोधो वाक्यार्थज्ञानान्नातिरिच्यत इति वाक्यार्थज्ञानानन्तरमेवातिदेशोपस्थितिरिति।

अत इति। अतिदेशकल्पनस्य वाक्यार्थबोधानन्तरकालीनत्वादित्यर्थः। ततः अतिदेश कल्पनात्। तदा अतिदेशकल्पनात्प्राक्। अनवगतत्वादिति। तदानी मतिदेशस्यानुपस्थिते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पदसप्रसिद्धार्थमेव । अतएव राजसूयपदमव्युत्पन्नमश्वकर्णशब्द-वदित्युक्तं साम्प्रदायिकैः ।

एवञ्चाप्रसिद्धार्थत्वेनाख्यात-परतन्त्रत्वाद्राजसूय-पदेनेष्टि-पशु-सोम यागा उच्यन्ते । ते च तैस्तैः प्राकृतैर्धर्म्मैर्निराकाङ्क्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम् । उभयाकाङ्क्षाभावात् । न च प्रातिस्विकरूपेणैराकाङ्क्षेऽपि न राजसूयत्वेन रूपेण नैराकाङ्क्ष्यमिति वाच्यम् । आकाङ्क्षाद्वये प्रमाणाभावात् ।

---

रिति भावः । अप्रसिद्धार्थमेवेति । न तु कालविशेषनिमित्तकदर्शादिपदवत्प्रसिद्धार्थकमिति भावः । ननु राजसूयपदस्य राजासूयते यत्रेति व्युत्पत्तेरनभिमतत्वे का व्युत्पत्तिरङ्गीकार्य्येत्यवाह । अतएवेति । सोमाभिषवनिमित्तत्वाभावादित्यर्थः । अव्युत्पन्नशब्दसद्भावं दृष्टान्तेन समर्थयति अश्वकर्णेति । अश्वकर्णशब्दः शालवृचे शक्तः । स यथा अव्युत्पन्नः शक्तो व्युत्पत्तिलेशस्याप्य सम्भवात् तद्वदित्यर्थः ।

विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वसिद्धान्तोपरि, राजसूयशब्दस्याख्यात परतन्त्रतया राजसूयघटकेष्टिपशुसोमरूपसकलयागवाचकत्वेन इष्ट्यादीनाञ्च स्वस्वप्राकृतधर्म्मप्राप्तानिराकाङ्क्षत्वेन उभयाकाङ्क्षाविरहात् कथं प्रकरणविनियोज्यत्वसम्भवो विदेवनादीनामिति पूर्व्वपचकरणाभिप्रायेण पूर्व्वपचिणा राजसूयशब्दस्याख्यातपरतन्त्रत्वोपन्यासमात्रे कृते दर्शपौर्णमासपदस्यापि तर्हि आख्यातपरतन्त्रता स्यादित्यापत्तिरुत्थापिता पूर्व्वपचिणा तामापत्तिं निराकृत्य राजसूयपदस्याख्यातपरतन्त्रत्वस्थापनेन इष्टिपशुसोमवाचकत्वं निर्णीतम् । तदनन्तरञ्च राजसूयपदस्य व्युत्पत्तिविशेषवत्त्वेनाभिषेचनीयमात्रवाचकत्वमापादितम् । पूर्व्वपची तदापादनञ्च निरस्य राजसूयपदस्याख्यातपरतन्त्रत्वनिष्ट्यादिवाचकत्वञ्चोपसंहरति एवञ्चेति ।

उभयाकाङ्क्षासाधकं युक्त्यन्तरमिदानीं निराकरोति न चेति । प्रातिस्विकरूपेण इष्टिपशुसोमयागत्वरूपेण । राजसूयत्वेन समुदायात्मना ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च प्रातिस्विकरूपैर्या कथम्भावाकाङ्क्षा सापि फलसम्बन्धोत्तरकालम्। स च राजसूयत्वेन, न तु प्रातिस्विकरूपैः। राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथम्भावाकाङ्क्षाया विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्। यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्बन्धविधायिवाक्यद्वयं भवेत् तदा युज्येतापि आकाङ्क्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानाञ्चाङ्गानां सम्बन्धः। न तु तदस्ति। तस्मात् प्राकृते धर्म्मैर्निराकाङ्क्षत्वान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत्।

---

अन्वयवामामिव अवयविनोऽप्याकाङ्क्षान्तरमवश्यम्भावीत्याकाङ्क्षाद्वयमवश्यकल्पनीयमित्यत आह किञ्चेति। फलसम्बन्धेति। फलसम्बन्धोत्तरकाले भवतीत्यर्थः। फलसम्बन्धयोधं विना कथं फलं भावयेदित्याकाङ्क्षाया असम्भवादिति भावः। स च फलसम्बन्धः। न त्विति। प्रातिस्विकफलाश्रवणादिति भावः।

राजसूयत्वेनेत्यादि। अयमभिप्रायः। कथम्भावाकाङ्क्षा फलसम्बन्धानन्तरमेव जायते न तु फलसम्बन्धमन्तरेण फलभावनायामेव कथम्भावाकाङ्क्षोदयात्। फलसम्बन्धश्च राजसूयस्यैव श्रूयते न तु तद्घटकयागानाम्। एवञ्च राजसूयस्यैव कथम्भावाकाङ्क्षा, न तु प्रातिस्विकाकाङ्क्षा। तस्मादाकाङ्क्षाद्वयमसिद्धम्। राजसूयस्य तु तत्तद्यागानतिरिक्ततया राजसूयाकाङ्क्षैव तत्तद्यागीयकथम्भावाकाङ्क्षा। तस्याश्च तत्तद्यागेषु स्वस्वप्राकृतधर्म्मप्राप्त्या निवृत्तौ न विदेवनादीनामाकाङ्क्षयान्वयः सम्भवति। किन्तु सान्निध्यरूपस्थानादेवान्वयः। यदि तु तदाकाङ्क्षया विदेवनादीनामन्वयः स्वीक्रियते तेनेवाकाङ्क्षाशान्तेरतिदेशविलोप प्रसङ्ग इति।

फलसम्बन्धवाक्यद्वयसद्भावे तु आकाङ्क्षाद्वयस्यापि सम्भवात् आतिदेशिकानां विदेवनादीनाञ्चान्वयः सम्भवेत्। परन्तु तथाविधवाक्यद्वयमेव नास्तीत्याह यदि हीति। सिद्धिखापत्तिनिरासेन दृढीकृतं पूर्व्वपक्षमुपसंहरति तस्मादिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्यम्। अत: साम्प्रदायिकैर्विदेवनादीनां सन्दंशो दर्शित:। राजसूयत्वपुरस्कारेण ये धर्म्मा विधीयन्ते "राजसूयाय ह्येना उत्पुनाती"त्येवमादयस्तन्मध्ये विदेवनादय: पठ्यन्ते। अतस्ते सर्व्वे राजसूयाङ्गम्। प्रयाजानुवादेन विधीयमानधर्म्ममध्यपठितप्रयाजाङ्गाभिक्रमणवत्। तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति। तत्सिद्धं प्रकरणस्य स्थानाद्बलवत्त्वम्।

देशसामान्यं स्थानम्। तच्च द्विविधं पाठसादेश्यमनुष्ठानसादेश्यञ्चेति। यथाहु:—

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षण:।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम्॥ इति।

---

सिद्धान्तयति सत्यमिति। पूर्व्वपक्षस्य दृढ़त्वसूचकमिदम्। अत इति। भवदुक्तदिशा राजसूयत्वेन प्रातिस्विकरूपेण च पृथगाकाङ्क्षाया झटित्यनुपलभ्यमानत्वादित्यर्थ:। साम्प्रदायिकै: शास्त्रदीपिकाकारादिभि:। शास्त्रदीपिकादर्शितं सन्दंशं दर्शयति राजसूयत्वेति। श्रुतिमाह राजसूयायेति। आदिपदात् राजसूयेनेजान: सर्व्वमायुरेतीत्यादि श्रुतिपरिग्रह:। तन्मध्ये इति। उक्तश्रुतिभि: कानिचिदङ्गानि राजसूयानुवादेन पूर्व्वमुक्तानि। पश्चाच्च कानिचिद्राजसूयानुवादेन वक्ष्यन्ते। तन्मध्ये च विदेवनादीन्युक्तानि। तत्र राजसूयानुवादेन पूर्व्वापरविहितानां तावद्राजसूयाङ्गत्वं वक्तव्यमेव। तन्मध्यपठितानान्तु विदेवनादीनां सन्दंशन्यायात् तदङ्गत्वस्यावश्यवक्तव्यतया तदंशे राजसूयाकाङ्क्षाया उन्नावनीयत्वेन उभयाकाङ्क्षासद्भावात् प्रकरणादेव विनियोग इति भाव:।

क्रमप्राप्तं स्थानं निरूपयति देशसामान्यमिति। समानदेशत्वमित्यर्थ:। स्थानं विभजति तच्चेति। पाठेति। पाठमात्रावगतैकदेशवर्त्तित्वमित्यर्थ:। अनुष्ठानेति। एकस्मिन् देशे अनुष्ठेयत्वेन निर्द्दिष्टत्वमित्यर्थ:। प्रमाणमाह यथाहुरिति। वार्त्तिककारा इति शेष:।

तत्रेति। श्रुतिलिङ्गादिषु विनियोगप्रमाणेषु मध्य इत्यर्थ:। देशसामान्यलक्षण: समानदेशत्वरूप: क्रमो द्विधा द्विप्रकारत्वेनैवेष्ट:। प्रकारद्वयमाह पाठेति। पाठसादेश्यादनुष्ठानसादेश्याच्चेत्यर्थ:। स विनियोगस्य कारणं प्रमाणमित्यर्थ:।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्थानं क्रमश्चेत्यनर्थान्तरम्। पाठसादेश्यमपि द्विविधम्। यथासङ्ख्यपाठः सन्निधिपाठश्चेति। तत्र ऐन्द्राग्नमेकादशकपालं निर्व्वपेत्, वैश्वानरं द्वादशकपालमित्येवं क्रमविहितेष्टिषु इन्द्राग्नी रोचनादिव इत्यादीनां याज्यानुवाक्यमन्त्राणां यथासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः, स यथासङ्ख्यपाठात्।

प्रथमपठितमन्त्रस्य हि केमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्म्मैव प्रथममुपतिष्ठति, समानदेशत्वात्।

यानि तु वैकृतान्यङ्गानि प्राकृताङ्गानुवादेन विहितानि सन्दंशापतितानि। तेषां विकृत्यर्थत्वं सन्निधिपाठात्। तेषां हि

---

ननु स्थानद्वैविध्यप्रमितये क्रमद्वैविध्यप्रमाणोपन्यासोऽसङ्गत इत्यत आह स्थानं क्रमश्चेति। अनर्थान्तरम् अर्थान्तरं न भवति एकपदार्थ एवेति यावत्। अतएवोक्तं स्थानं क्रमो योगबलं समाख्येति। पाठसादेश्यं विभजति पाठसादेश्यमपीति। विविधस्थानाद्विनियोगं प्रदर्शयिष्यन् प्रथमोद्दिष्टस्य पाठसादेश्यस्य प्रथमविभागं यथासङ्ख्यपाठमादावुदाहरति तत्रेति। तेषु स्थानविनियोगेषु मध्ये इत्यर्थः। क्रमेति। क्रमेण विहितासु इष्टिषु। इत्यादीनाम् इन्द्राग्नी रोचनादिवः प्रहर्षणिभ्य इत्यादि, इन्द्राग्नी नवतिं पुरः श्नथद्वृत्तमित्यादि च, यन्मन्त्रयुगलं तदादीनाम्। याज्येति। तेषु मन्त्रेषु मध्ये कश्चिद्याज्याख्यः कश्चिदनुवाक्याख्यश्चेत्यर्थः। प्रथमस्य प्रथमयुगलस्य। तथाच तन्मन्त्रद्वयमभिधाय पूर्व्वं युगलं पूर्व्वस्य उत्तरमुत्तरस्येति तृतीयाध्यायतृतीयपादे भाष्यम्।

यथासङ्ख्यपाठाद्विनियोगे युक्तिमाह प्रथमेति। कैमर्थ्येति। किमर्थत्वरूपाकाङ्क्षायामित्यर्थः। अयं मन्त्रः कमुपकुर्य्यादित्याकाङ्क्षायामिति यावत्। उपतिष्ठते बुद्धौ विषयी भवति। समानदेशत्वात् कर्म्ममन्त्रयोर्द्वयोरपि. कर्म्मसमाम्नायमन्त्रसमाम्नाय सम्बन्धिप्रथमस्थानरूपैकदेशवर्त्तित्वात्। एवमन्यत्रापि।

सन्निधिपाठाद्विनियोगस्य प्रदेशं दर्शयति यानि त्विति। वैकृतानि विकृतिसम्बन्धीनि प्राकृतेति। अतिदेशात् प्राप्तं यददृष्टार्थं प्राकृताङ्गं तदनुवादेन तदुद्देशेनेत्यर्थः। एतेन दृष्टार्थाङ्गानुवादेन विहितानामौदुम्बरत्वादीनां सन्निधिपाठान्न विनियोगः, किन्तु प्रकरणादिति प्रागुक्तेन न विरोधः। सन्दंशापतितानीति। एतेन सन्दंशपतितानामामनहोमादीनामपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्व्वमेव भाव्यत्वेन सम्बध्यते उपस्थितत्वात् । अतएव न तेषु विश्वजिन्न्यायावतारः । स्वतन्त्र फलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च ।

पशुधर्म्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्म्माः

---

न स्थानादिविनियोगः, किन्तु प्रकरणादेवेति प्रागुक्तार्थसङ्गतिः । तेषामिति । उपहोमादि होमानां पृषदाज्यपदोपात्ताज्यगतचिवतागुणादीनाञ्चेत्यर्थः । अतएव विकृत्यपूर्व्वस्य भाव्यत्व प्राप्त्या फलनिराकाङ्क्षत्वादेव । पृथक्फलाकाङ्क्षत्वाङ्गीकारे सन्निधिपाठवैयर्थ्यमित्याह स्वतन्त्रेति ।

अनुष्ठानसादेश्यमुदाहरति पशुधर्म्माणामिति । अत्रायं विस्तरः । ज्योतिष्टोमे त्रयः पशवः समाम्नाताः । अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति । तत्राग्नीषोमीय औपवसथ्य नामके अहनि विहितः । यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति श्रुतेः । तदुत्तरवस्तोत्येऽहनि सवनीयः समाम्नातः । आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति श्रुतेः । आनुबन्ध्यस्त्ववभृथान्ते उक्तः । तत्र औपवसथ्ये अहनि पशुधर्म्माः श्रुयन्ते । ते च उपाकरणं, पर्य्यग्निकरणम्, उपानयनं, बन्धो, यूपे नियोजनं, संज्ञपनं, विशसनमित्येवमादयः । इति भाष्यकारन्यायमालाकारौ । उपाकरणं प्रजापतेर्जायमाना इमं पशुमित्याभ्यामृग्भ्यां पशोरुपस्पर्शनम् । दर्भज्वालया त्रिः प्रदक्षिणीकरणं पर्य्यग्निकरणमिति माधवाचार्य्याः । ते च पशुधर्म्मा महाप्रकरणात् ज्योतिष्टोमाङ्गत्वेन प्राप्ता अपि तस्य सोमयागतया अभिषवादिधर्म्मसाकाङ्क्षत्वेन उपाकरणादौ निराकाङ्क्षत्वात् तदङ्ग पशुयाग एवान्वीयन्ते । तर्हि अविशेषात् त्रिष्वपि पशुयागेषु धर्म्मा अवतिष्ठन्तामित्येवं प्राप्ते उच्यते ।

अत्राव विशेषः सान्निध्यरूपः । तथाहि सौत्यनामकादह्नः प्राक् औपवसथ्ये अहनि पशुधर्म्माः प्राप्ताः अग्नीषोमीयस्यापि तदेवस्थानमित्यनुष्ठानसमानदेशत्वम् । सवनीयस्य सौत्याह विहिततया आनुबन्ध्यस्य चावभृथान्ते कर्त्तव्यतया दिनान्तरानुष्ठेयत्वेन पशुधर्म्माणां विभिन्न देशत्वमित्यनुष्ठानदेशसामान्यरूपस्थानादग्नीषोमीयपश्वङ्गत्वमेव पशुधर्म्माणाम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पशुपूर्व्वमेव भाव्यत्वेन सम्बध्यते। अतो युक्तमनुष्ठानसादेश्यात् तदर्थत्वं तेषाम्।

न च पाठसादेश्यादेव तत् किं न स्यादिति वाच्यम्। अग्नीषोमीयस्य पशोः क्रयसन्निधौ पाठात्। न च क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। स एष द्विदैवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य इति वचनात्तदनुपपत्तेः।

---

ननु सवनीयानुबन्ध्याङ्गत्वम्। तयोरतिदेशात्तद्धर्म्मप्राप्तिः। तथाचोक्तं तृतीयाध्यायषष्ठपादे पार्थसारथिमिश्रैः:—

अग्नीषोमीय एवातो विधेर्धर्म्मा व्यवस्थिताः।
अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः॥ इति।

अत इति। यत उपाकरणादयो अग्नीषोमीयपशुधर्म्मा एव, अत इत्यर्थः। तेषां पशुधर्म्माणाम्। कैमर्थ्याकाङ्क्षायां किंफलकत्वाकाङ्क्षायाम्। किं भावयेदित्याकाङ्क्षायामिति यावत्। उपस्थितम् अनुष्ठानसादेश्यात् झटिति प्रतीतम्। पशुपूर्व्वम् अग्नीषोमीयपशुपूर्व्वम्। भाव्यत्वेन फलत्वेन। एभिर्धर्म्मैरग्नीषोमीयपशुपूर्व्वं भावयेदिति बोध इति भावः।

नन्वौपवसथ्ये अहनि अग्नीषोमीयपशुं पठित्वा उपाकरणादीनां पशुधर्म्माणां पाठात् पाठसादेश्यादेवाग्नीषोमीयपश्वङ्गत्वमुपाकरणादिपशुधर्म्माणामस्तु, अलमनुष्ठानसादेश्यादरणेनेत्यापादनं निराकरोति न चेति। तत् पशुधर्म्माणामग्नीषोमीयपश्वङ्गत्वम्। क्रयसन्निधाविति। तथाच पाठसादेश्याङ्गीकारे पशुधर्म्माणां क्रयाङ्गत्वापत्तिः। सन्निधिरूपपाठसादेश्यस्य यस्य यत्सन्निधौ पाठस्तस्य तदङ्गत्वप्रयोजकत्वनियमात्। तच्चायुक्तमिति भावः।

ननु विदेवनादीनां राजसूयाङ्गत्वेन सिद्धान्तितत्वेऽपि यथाभिषेचनीयसन्निधौ पाठात् तदेशानुष्ठानमिति सिद्धान्तस्तथा पशुधर्म्माणां पश्वङ्गत्वेऽपि क्रयसन्निधौ पाठात् क्रयदेश एवानुष्ठानं स्यादित्यपि निराकरोति न चेति। द्विदैवत्यः अग्नीषोमीयः। आलब्धव्य इति। तथाच आलम्भस्यापि पशुधर्म्मान्तर्गततया तस्य क्रयसन्निधौ कर्त्तव्यत्वे क्रयस्य दृष्टार्थतया दिनान्तरेऽपि सम्भवात् तदानीमपि आलम्भपर्य्यन्तानां पशुधर्म्माणां कर्त्तव्यतापत्तिः। एवञ्च क्रयस्य दृष्टार्थतया दिनान्तरेऽपि करणमस्तु। उपाकरणादीनान्त्वदृष्टार्थानां यथावचनं हि वाचनिक-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च स्थानात् प्रकरणस्य बलीयस्तेन पशुधर्म्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम्। तस्य सोमयागत्वेन पशुधर्म्मग्रहणे अयोग्यत्वात्। अतश्चानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् स्थानात् पशुयागार्थत्वमेव पशुधर्म्माणां युक्तम्।

न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्नीषोमीयकथम्भावाकाङ्क्षायाः क्लृप्तोपकारैः प्राकृतधर्म्मैरेवोपशान्तत्वात्। स हि सान्नाय्ययागप्रकृतिकः। उभयोः पशुप्रभवत्वसाम्यात्। तदुक्तम्—

---

मिति न्यायादौपवसथ्याह एव कर्त्तव्यतेति, न क्रयमन्निधिकर्त्तव्यतानियम इति भावः।

ननु विदेवनादीनां राजसूयाङ्गत्ववत् पशुधर्म्माणामपि ज्योतिष्टोमाङ्गत्वमस्तु, स्थानात् प्रकरणस्य बलवत्त्वादित्यपि परिहरति न चेति। प्रकरणस्येति। महाप्रकरणस्य ज्योतिष्टोमकथम्भावस्यानुवर्त्तमानत्वादिति भावः। अयोग्यत्वादिति। पशुधर्म्मनिराकाङ्क्षत्वादिति भावः। अत इति ज्योतिष्टोमे पशुधर्म्मान्वयस्य निष्प्रयोजनत्वादित्यर्थः। आनर्थक्येति। आनर्थक्येन निष्प्रयोजनतया प्रतिहतानां प्राप्तप्रतिघातानाम्। अन्वयमलभमानानामिति यावत्। धर्म्माणां सम्बन्धे प्रमाणयोर्बलाबलं विपरीतं भवति। सबलमपि दुर्ब्बलं दुर्ब्बलमपि सबलं भवतीत्यर्थः। तथाच प्रकृते पशुधर्म्मनिराकाङ्क्षे ज्योतिष्टोमे अन्वयमलभमानानां पशुधर्म्माणां सम्बन्धे सबलमपि प्रकरणं दुर्ब्बलायते। स्थानन्तु तेषामग्नीषोमान्वयनाय प्रभवत् सबलं भवतीति भावः।

ननु भवतु पशुधर्म्माणामग्नीषोमीयपशुधर्म्मत्वम्। तच्चाग्नीषोमीयकथम्भावाकाङ्क्षासम्भवेन प्रकरणादेव स्यान्न पुनः स्थानादित्यपि निराकरोति न चेति। अग्नीषोमीयकथम्भवाकाङ्क्षा नास्तीति हेतुमाह अग्नीषोमीयेति। का तस्य प्रकृतिर्यद्धर्म्मप्राप्त्या अग्नीषोमीयो निराकाङ्क्षः स्यादित्यत आह स हीति। उभयोः पशुसान्नाय्ययोः। पशुप्रभवत्वेति। पशुत्वादत् पशुप्रभव एव। सान्नाय्यञ्च पशुप्रभवम्। तद्रूपेण तुल्यत्वादित्यर्थः। अत्राष्टमाध्यायद्वितीयपादसिद्धान्तसूत्रं प्रमाणयति तदुक्तमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सान्नाय्यं वा तत्प्रभवत्वादिति ।

सान्नाय्यञ्च दधिपयसी । तत्र पशुयागः पयोयागप्रकृतिकः । साक्षात्पशुप्रभवत्वात् । अतश्चोदकप्राप्तैस्तद्धर्म्मैर्निराकाङ्क्षत्वान्न पशुयागे धर्म्माणां प्रकरणं विनियोजकम्, किन्तु स्थानमेव । तदेवं निरूपितः संक्षेपतः स्थानविनियोगः ।

तच्च समाख्यातः प्रबलम् । स्थानविनियोगे हि पदार्थयो-र्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः । समाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । न च सा

---

सान्नाय्यं वेति । अग्नीषोमीयपशौ दर्शपौर्णमासयोः प्रकृतिरित्युक्तम् । तत्र किं दैवतसाम्यात् पुरोडाशः प्रवर्त्तते सान्नाय्यं वेति संशये दैवतसाम्यात् पुरोडाशविकारं पूर्व्वपक्षयित्वा सिद्धान्तयति । सान्नाय्यं प्रवर्त्तते । कुतः तत्प्रभवत्वात् पशुसान्नाय्ययोर्द्वयोरेव पशुप्रभवत्वादित्यर्थः । अत्र भाष्ये हविःसामान्यञ्च दैवतसामान्याद्बलीय इत्युक्तमित्यभिहितम् ।

सान्नाय्यपदार्थमाह दधिपयसी इति । ननु तर्हि किं पशुयाग उभयप्रकृतिक इत्यत आह तत्रेति । दधिपयसोर्मध्ये इत्यर्थः । साक्षादिति । अष्टमाध्यायद्वितीयपादे प्रागुक्ताधिकरणानन्तरमेव । सान्नाय्यविकारत्वे सिद्धे किं दध्नः पयसो वा विकार इति संशये दध्न एव विकार इति पूर्व्वपक्षयित्वा सिद्धान्तितम् ।

पयो वा कालसामान्यादिति ।

पय एव प्रवर्त्तते कालसामान्यात् । द्वयोरपि एकाहकालीनत्वात् । दध्नो द्व्यहकालीनत्वेन वैधर्म्यात् । तथा पयः साक्षात् पशुप्रभवं दधि तु पयसा व्यवहितमित्यर्थः । अत इति । पयोयागप्रकृतिकत्वादित्यर्थः । तद्धर्म्मैः पयोयागधर्म्मैः । धर्म्माणां पशुधर्म्माणाम् । स्थानमेवेति । अनुष्ठानसादेश्यमेवेत्यर्थः । उपसंहरति तदेवमिति ।

स्थानस्य समाख्यातो बलवत्त्वं दर्शयति तच्चेति । बलवत्त्वबीजमाह स्थानविनियोगे हीति । पदार्थयोः यस्मिन् यस्य विनियोगस्तयोः । देशसामान्येति । एकदेशवर्त्तित्वरूपइत्यर्थः । प्रत्यक्षः प्रत्यक्षशुतशब्दबोधितः । समाख्याविनियोगे तदभावं दर्शयति समाख्येति । भिन्नेति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सम्बन्धवाचिका। यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात्। तथाहि, समाख्या सम्बन्धसामान्यवाचिका स्यात् तद्विशेषवाचिका वा। नाद्यः तदुक्तौ प्रयोजनाभावात्, सर्व्वयौगिकशब्दानां पर्य्यायत्वापत्तेश्च। द्वितीये अवश्यं सम्बन्धिनौ वाच्यौ। तदन्तरेण सम्बन्धे विशेषाभावात्। तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च। अतश्चावश्यं सम्बन्धिवाचकत्वं समाख्याया वक्तव्यम्। तथाच न सम्बन्धवाचकत्वम्। सम्बन्धि-

---

समाख्यया यस्मिन् यस्य विनियोगोऽभिमतस्तयोर्भिन्नदेशे कीर्त्तनादित्यर्थः। तथाच समाख्याबलेन विनियोगे पदार्थयोः सम्बन्धः कल्पनीय इति भावः। समाख्यायाः सम्बन्धवाचकत्वं निरस्यति न चेति। सा समाख्या। शब्दानां पाचकादिशब्दानाम्। द्रव्यवाचकत्वेन पाकादिक्रियासम्बन्धिद्रव्यवाचकत्वेन। तथाच पाकादिसम्बन्धिद्रव्यविशेषस्यैव तत्पदवाच्यत्वं न तु सम्बन्धस्येति भावः। सम्बन्धवाचकत्वे दोषमाह तथाहीति। दूषणीयस्य सम्बन्धवाचकत्वस्य प्रकारद्वयमाह समाख्येति। आद्यप्रकारं निरस्यति नाद्य इति। प्रयोजनेति। पाचकपाठकादीनां सर्व्वेषां यौगिकशब्दानां यदि सम्बन्धमात्रं शक्यं स्यात् तदा तत्तत्पदेन व्यक्तिविशेषप्रत्ययासम्भवात् तत्तत्पदप्रयोगस्य निष्प्रयोजनत्वादित्यर्थः। पर्य्यायत्वापत्तेरिति। सर्व्वेषामेव सम्बन्धार्थकतया एकार्थत्वापत्तेरित्यर्थः।

द्वितीयप्रकारं निरस्यति द्वितीय इति। सम्बन्धविशेषवाचकत्वे इत्यर्थः। सम्बन्धिनौ यस्य येन सम्बन्धस्तौ। तदन्तरेण सम्बन्धिवाचकत्वं विना। विशेषाभावादिति। सम्बन्धप्रतियोगिनोरनुपस्थितौ सम्बन्धस्य विशिष्टत्वासम्भवादित्यर्थः। ननु सम्बन्धप्रतियोगिनोरनभिधाने विशेषः। सामान्यरूपेणोपस्थितौ विशेषप्रतिपत्तिः स्यादित्यत आह तदिति। सम्बन्धिज्ञानं विनेत्यर्थः। तदप्रतिपत्तेरिति। सम्बन्धविशेषप्रतिपत्तेरसम्भवादित्यर्थः। तथाच सम्बन्धिनोरुपस्थितौ तयोर्यादृशः सम्बन्धो घटते तादृशसम्बन्धस्य प्रतिपत्तिः स्यात्। तदनुपस्थितौ तु सम्बन्धसामान्यस्य प्रतीतौ विशेषज्ञानं दुर्घटमिति भावः। तस्मात् सम्बन्धिवाचकत्वं स्वीकार्य्यमेवेत्याह अतश्चेति। उभयवाचकत्वे दोषमाह सम्बन्धीति। यौगिकशब्दार्थस्य सम्बन्धिनो ज्ञानेनैवेत्यर्थः।।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसम्भवे तत्र शक्तिकल्पने गौरवात्। यथाहुः—

सर्व्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते।
न हि सम्बन्धवाचित्वं सम्भवत्यतिगौरवात्॥ इति।

तथा=पाकन्तु पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित्॥ इति।

तथाच समाख्या न सम्बन्धवाचिका। होतृचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसम्बन्ध-

---

तत्प्रतिपत्तिसम्भव इत्यनेनान्वयः। तत्प्रतिपत्तिसम्भवे सम्बन्धज्ञानसम्भवे। ननु सम्बन्धिज्ञानात् कथं सम्बन्धज्ञानं स्यादित्यत उक्तं वाक्यार्थेति।

शास्त्रदीपिकायां विज्ञाताच्छब्दादर्थाभिधानद्वारेण यद्वाक्यार्थविज्ञानं तच्छब्दं प्रमाणमित्युक्तम्। अवयथा पदार्थज्ञानस्य वाक्यार्थज्ञानस्य वाक्यार्थज्ञानहेतुत्वमुक्तं न तु पदार्थानां परस्परसम्बन्धज्ञानस्यापि। तस्य अवश्यम्भावित्वात्। तथा सम्बन्धिज्ञानादेव सम्बन्धज्ञानस्याप्यावश्यकत्वमिति भावः। अतो न तत्र शक्तिरङ्गीकार्य्या गौरवादित्याह तत्रेति। यौगिकशब्दानां सम्बन्धिवाचकत्वमेव न सम्बन्धवाचकत्वमित्यत्र प्रमाणमाह यथाहुरिति।

सर्व्वत्रेति। द्रव्यं सम्बन्धिरूपम्। सम्बन्धस्यानभिधेयत्वे वार्त्तिकोक्तं कारिकान्तरमाह तथेति। पाकन्त्विति। पचिः पचधातुः।

ननु वैदिकसमाख्यारूपस्य होतृचमसशब्दस्य सम्बन्धवाचकताप्यवगम्यते। तस्य षष्ठीतत्पुरुषनिष्पन्नतया षष्ठ्यर्थसम्बन्धप्रत्यायकत्वावश्यकत्वादित्यत आह होतृचमस इति। वैदिकी वेदमात्रसिद्धा। न षष्ठ्यर्थेति। यदि सम्बन्धः षष्ठ्यर्थस्तदाकृतौ न तद्वाचकत्वमित्यतो दृष्टान्त उक्तो निषादस्थपतिवदिति।

षष्ठाध्यायद्वितीयपादे ऐन्द्रं वास्तुमयं चरुं निर्व्वपेदित्युपक्रम्य एतया निषादस्थपतिं याजयेदिति श्रुतौ निषादस्थपतिपदे कर्म्मधारय एवाङ्गीकृतः। "स्थपतिर्निषादः स्याच्छब्दसामर्थ्या" दिति सूत्रेण। न तु निषादानां स्थपतिरधिपतिर्द्विजातिरिति षष्ठीतत्पुरुषः। षष्ठीतत्पुरुषे पूर्व्वपदे सम्बन्धिलक्षणापत्तेः। तथाचोक्तं शास्त्रदीपिकायाम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वाचिका। नापि वाक्यवत् तद्बोधिका। तस्याः पदत्वेनाप्रमाणत्वात्। पौरोडाशिकमित्यादि समाख्यास्तु तिदुर्ब्बलाः। लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात्। काण्डगोचरत्वेन तत्तत्-

---

निषादपदमेवन्तु स्थपतौ लक्षणां व्रजेत्।
न हि षष्ठी श्रुता येन तत्सम्बन्धिविधिर्भवेत्॥ इति।

ननु चम्पककुसुमसुवासितवसनवल्लुप्तविभक्तिकमपि पदं विभक्त्यर्थमभिधत्ते। कथमन्यथा दधि पश्यतीत्यादौ दध्यादेः कर्म्मत्वादिप्रतीतिः स्यात्। तस्मात् तत्पुरुषे पूर्व्वपदस्य सम्बन्धिलाक्षणिकत्वाभिधानमयुक्तमिति चेन्न। निषादानां स्थपतिरिति व्यासवाक्ये उभयोः पदयोर्विभक्त्यन्तत्वेन पूर्व्वपदस्थषष्ठ्यर्थस्य स्थपतावन्वयस्याबाधितत्वेऽपि समासानन्तरमुभयोः पदयोर्विभक्तिलोपात् निषादस्थपतीति प्रातिपदिकावस्थायां लुप्तषष्ठ्यर्थस्य स्थपतीति प्रातिपदिकेनान्वयस्याव्युत्पन्नत्वात् विभक्त्यर्थस्य च विभक्त्यन्तेन सहान्वयस्यैव व्युत्पत्तिसिद्धत्वात् सामासिकलुप्तविभक्त्यर्थान्वयस्य वाधितत्वेन तदनुसन्धानानङ्गीकारात्। तस्मादगत्या सामानाधिकरण्याय पूर्व्वपदं सम्बन्धिलाक्षणिकमेवाङ्गीकार्य्यम्।

एवञ्च यथा निषादस्थपतिपदे षष्ठीतत्पुरुषाश्रयणे पूर्व्वपदस्य सम्बन्धिलाक्षणिकत्वं न तु षष्ठ्याः सम्बन्धवाचकमित्युक्तं तथा हौत्रचमसपदेऽपि प्रागुक्तरीत्या प्रातिपदिकेन सह विभक्त्यर्थस्यान्वयबाधात् सम्बन्धस्य न पूर्व्वपदलुप्तषष्ठीवाच्यत्वं किन्तु पूर्व्वपदस्य सम्बन्धिलाक्षणिकत्वमिति दृष्टान्तदार्ष्टान्तिकयोः सौसादृश्यम्। ननु मा भूत् तत्समाख्यायाः सम्बन्धवाचकत्वम्, परन्तु यथा वाक्यस्यावाचकत्वेऽपि पदार्थानां परस्परसम्बन्धबोधकत्वं तथा सम्बन्धबोधकत्वमङ्गीक्रियतामित्याशङ्कामपनयति नापीति। तद्बोधिका सम्बन्धबोधिका। तस्याः समाख्यायाः। पदत्वेन प्रातिपदिकमात्रत्वेन। समाख्याया निर्विभक्तिकप्रातिपदिकमात्ररूपत्वात्। विभक्त्यन्तस्य तु वाक्यत्वेन समाख्यापदवाच्यत्वाभावात्। अप्रमाणत्वादिति। तथाच वाक्यस्य विभक्त्यन्तपदकदम्बत्वेन अर्थबोधकत्वं पदार्थसम्बन्धबोधकत्वञ्च सम्भवति। समाख्यायास्तु निर्विभक्तिकयौगिकप्रातिपदिकस्वरूपत्वेन प्रकृतिप्रत्ययौ प्रकृत्यर्थविशिष्टं प्रत्ययार्थं सह ब्रूतइति न्यायात् प्रकृतिरहिताया विभक्तेरिव विभक्तिरहितायाः प्रकृतेरपि स्वार्थबोधकत्वासम्भवात् स्वार्थे प्रत्येव न प्रमितिसाधनत्वं, कुतः पुनः स्वार्थसम्बन्धं प्रतीति भावः।

लौकिकत्वेन वैदिकेतरत्वेन। पुरुषेति। व्याकरणाद्युपदिष्टत्वेन पुरुषप्रतीतिसापेक्षत्वा



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पदार्थागोचरत्वाच्च । काण्डवाचकत्वमपि न काण्डत्वेन, किन्तु पौरोडाशिकत्वादिनैव । न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद्वदति, किन्तर्हि एकहायनीत्वेनैव ।

स्थानविनियोगे तु पदार्थयोर्विशिष्टपुरस्कारेणैव सम्बन्धः प्रत्यक्षप्रमाणप्रतिपन्नः । अतश्च समाख्यामुपलभ्य नूनमनयोः पदार्थयोः सम्बन्धोऽस्तीति यावत्कल्प्यते तावत्प्रत्यक्षप्रतिपन्नेन सम्बन्धेन परस्परमाकाङ्क्षा कल्प्यते । तदभावे च सम्बन्धानुपपत्तेः । कल्पितसम्बन्धेन च यावदितरत्राकाङ्क्षादि कल्प्यते, तावदन्यत्राकाङ्क्षया वाक्यादिकल्पनया विनियोगः क्रियते । इति सिद्धं स्थानस्य समाख्यातः प्राबल्यम् ।

---

दित्यर्थः । काण्डेति । पारोडाशिकपदस्य काण्डविशेषपरत्वेनेत्यर्थः । तत्तत्पदार्थेति ।· सुन्धनरून्धा दिपरत्वाभावादित्यर्थः । तथाच पौरोडाशिकपदेन काण्डविशेषस्यैवोपस्थितिः । तत्काण्ड पठितकर्म्मणान्तु तत्काण्डीयत्वेनोपस्थानं न तु तत्तत्कर्म्मत्वेनेति भावः । काण्डोपस्थितिरपि न साक्षात् किन्तु पुरोडाशसम्बन्धित्वेनेत्याह काण्डवाचित्वमपीति । यौगिकशब्दात् सर्व्वत्रैव सामान्यधर्म्मेणैवोपस्थितिर्न विशेषधर्म्मेणेत्याह न हीति । द्रव्यवाचकोऽपि गोरूपद्रव्यवाचकोऽपि । तत् गोरूपं द्रव्यम् ।

स्थानविनियोगस्य समाख्याविनियोगाच्छीघ्रोपस्थितिकत्वं प्रतिपादयति स्थानेति । विशेषपुरस्कारेणेति विशेषधर्म्मवत्त्वेनेत्यर्थः । तथात्वेऽपि शीघ्रविनियोजकत्वं कुत इत्यत आह अतश्चेति । कल्प्यते अर्थापत्त्या निश्चीयते । परस्परमाकाङ्क्षाप्रकरणरूपा । तदभावे आकाङ्क्षाभावे सम्बन्धानुपपत्तेरिति । सम्बन्धस्याकाङ्क्षादिप्रयोज्यत्वादिति भावः । कल्पितेति । समाख्या कल्पिते त्यर्थः । इतरत्र स्थानेन यत्र विनियोगः क्रियते तदितरत्र । अन्यत्र समाख्यया यत्र विनियोगः क्रियते ततोऽन्यत्र । वाक्यादीति । तथाच समाख्यया सम्बन्धकल्पनानन्तरमाकाङ्क्षाकल्पनं तेनच वाक्यादिकल्पनं ततो विनियोगप्रतीतिः । स्थानेन तु न सम्बन्धकल्पनं तस्य प्रत्यक्षप्रमाणसिद्धत्वात् । प्रथमत एवाकाङ्क्षावाक्यादिकल्पनमिति शीघ्रोपस्थितिरिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गम् पाठसादेश्यात्, न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति ।

---

समाख्यातः स्थानस्यबल्यमुदाहरति अतएवेति । शुन्धनमन्त्र इति । अस्यायं बोधसौकर्य्याय विस्तरः क्रियते । दर्शपौर्णमासकाण्डान्तर्गतं किञ्चित्काण्डं पौरोडाशिकमिति समाख्यायते । यत्र पुरोडाशोपयोगिनो विधयः श्रूयन्ते । पुरोडाशमर्हति पौरडाशिक मिति समाख्यया तत्काण्डोक्तानां पात्राणां कर्म्मणां मन्त्राणाञ्च पुरोडाशोपयोगित्वं प्रतीयते । एवञ्च शुन्धध्वं दैव्याय कर्म्मणे इति मन्त्रस्यापि तत्काण्डपठितत्वेन तत्काण्डपठितपुरोडाशपात्राणामुलूखलादीनां शुन्धनार्थत्वं समाख्यया सिद्धति । पाठसादेश्यरूपस्थानेन तु सान्नाय्यपात्रशुन्धनार्थत्वं बोध्यते ।

तथाहि तस्मिन्नेव काण्डे शाखाविभवर्हिः सम्पादनं तदुत्तरं सान्नाय्यपात्रं तदनन्तरञ्च मुष्टिनिर्व्वाप इति त्रयाणां पदार्थानां क्रमेणाभिधानम् । मन्त्राणाञ्च प्रथममिध्मावर्हिः सम्पादनविषयोऽनुवाकः । अनन्तरं शुन्धध्वमित्यनुवाकः । तदनन्तरञ्च मुष्टिनिर्व्वापविषयोऽनुवाक इति क्रमेणाभिधानमिति यथासङ्ख्यकलरूपपाठसादेश्यात् सान्नाय्यपात्रशुन्धनार्थत्वं सिध्यति । तदेवं स्थानसमाख्ययोर्विरोधे स्थानं प्रबलवत् । पौरोडाशिकसमाख्यायां हि प्रकृतिः पुरोडाशमभिधत्ते । तद्धितप्रत्ययेन च काण्डम् । न चैतयोः सम्बन्धः केनचिदभिधीयते । तयोः समभिव्याहारादेव परस्परसम्बन्धः कल्पनीयः । तथाच कृत्स्नपुरोडाशपात्रसन्निधिर्नप्रत्यक्षः, किन्त्वर्थापत्त्या कल्प्यते । तथाहि यदि शुन्धनमन्त्रस्य सर्व्वपुरोडाशपात्रसम्बन्धो न स्यात्तदा तत्काण्डपठितमन्त्रस्य पौरोडाशिकसमाख्या न स्यादिति । तस्मात्काण्डसमाख्यया सम्बन्धं परिकल्प्य तदन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीश्च कल्पयित्वा तया श्रुत्या विनियोगो वाच्य इति समाख्यायाः अर्थविप्रकर्षः । सान्नाय्यपात्रशुन्धने मन्त्रस्य सम्बन्धस्तु यथासङ्ख्यपाठात् प्रत्यक्ष एव । तेन प्रत्यक्षसम्बन्धेन प्रकरणादीनां चतुर्णामेव कल्पनात् शीघ्रोपस्थापकतया समाख्यां बाधित्वा पाठसादेश्यरूपस्थानेनैव सान्नाय्यपात्रशुन्धने मन्त्रो विनियुज्यते इति सिद्धम् । एवमेव तृतीयाध्यायतृतीयपादे न्यायमालादयः । तथाचोक्तं वार्त्तिककृद्भिः ।

वैदिकं देशसामान्यं प्रत्यक्षं दृश्यते क्रमे ।
समाख्यायान्तु सामान्यं कल्प्यात्कल्पयिप्रकल्प्यते ॥ इति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समाख्या यौगिकः शब्दः । सा च द्विविधा, वैदिकी लौकिकी च । तत्र होतृचमसभक्षणाङ्गत्वं होतृचमस इति वैदिकसमाख्यया । अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्यव-मिति समाख्ययेति सङ्क्षेपः ।

---

समाख्यां निर्वक्ति समाख्येति । यौगिकः अनेकपदयोगादर्थप्रत्यायकः । अतएवोक्तं योगबलं समाख्येति । तां विभजति सेति । वैदिकी वैदिकशब्दमात्रोपयोगियोगनिष्पन्ना । लौकिकी तदितरा । चमसभक्षणाङ्गत्वं चमसकरणकसोमभक्षणोपयोगित्वम् । होतृचमस इतीति । अयमभिप्रायः । ज्योतिष्टोमे सोमो भक्षणीयो न वेति संशयः । यद्यप्येवं श्रूयते "प्रैतु होतुश्चमसः, प्रब्रह्मणः, प्रोद्गातॄणां, प्रयजमानस्य, प्रयन्तु सदस्यानिति" तथापि चमससम्बन्ध एव होतुः प्रतीयते न सोमभक्षणम् । तत्र प्रमाणाभावान्न भक्षणीयः सोम इति पूर्व्वपक्षे प्राप्ते तृतीयाध्यायपञ्चमपादे सिद्धान्तसूत्रम्—

चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वादिति ।

होतुश्चमसेन सम्बन्धस्य भक्षणनिमित्तत्वात् चमसेषु भक्षणमस्त्येव । कुतः, समाख्यानात् चमसशब्दस्य भक्षणपात्रत्वेन यौगिकत्वादित्यर्थः । तथाहि चमिर्भक्षणार्थः । तस्मात् चमति भक्षयति अस्मिन्नित्यौणादिको असच्प्रत्ययः । अस्य योगस्य वैदिकशब्दमात्रोपयोगितया भक्षणाधिकरण बोधकचमसशब्दो वैदिकी समाख्या । यूपपोडशिग्रहादिशब्दवत् चमसशब्दोऽपि वैदिक एव, न लोकव्यवहारोपयोगी । नहि चमसादिनामानः केचित्पदार्था लोकव्यवहाराया विद्यन्ते तथाच समाख्यया होतुर्भक्षणाधिकरणत्वावगमात् भक्षणं प्रतीयते ।

ननु भक्षणमेव प्रतीयते न सोमस्येति चेन्न । सोमचमस इति समाख्याया अपि श्रवणात् । तया हि सोमभक्षणपात्रता प्रतीयते । इयं समाख्या लौकिकी । इत्थञ्च वैदिकलौकिक समाख्याभ्यां चमसस्य होतृकर्तृकभक्षणपात्रत्वं सोमकर्म्मकभक्षणपात्रत्वञ्चेत्यवधारणात् होतुश्च मसस्थितसोमभक्षणं सिध्यति । अतएव "स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं न बिभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तस्मै भक्ष्यं प्रयच्छे"दिति भाष्यधृतश्रुत्या अब्राह्मण याजने सोमभक्षणप्रतिषेध उपपद्यते ।

लौकिकसमाख्योदाहरणमाह अध्वर्योरिति । तत्तत्पदार्थाङ्गत्वं यजुर्व्वेदविहितकर्म्मा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं निरूपितानि सङ्क्षेपतः श्रुत्यादीनि षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि द्विविधानि, सिद्धरूपाणि क्रियारूपाणि चेति।

तत्र सिद्धरूपाणि जातिद्रव्यसङ्ख्यादीनि। तानि च दृष्टार्था-

---

गुणत्वम्। लौकिक्या इति। अध्वर्य्योः कर्म आध्वर्य्यवमिति कर्मार्थतद्धित प्रत्ययस्य वैदिकलौकिकोभयशब्दनिष्पादनोपयोगितया तन्निष्पादितशब्दस्य लौकिकसमाख्यात्वम्। वैदिका शब्दमात्रनिष्पादनोपयोगिप्रत्ययनिष्पन्नस्यैव वैदिकसमाख्यात्वात्।

अत्रायमाशयः। याज्यापुरोऽनुवाकपाठादयो धर्म्मा ऋग्वेदे विहिताः। दोहन निर्व्वापादयो यजुर्व्वेदे। आज्यस्तोत्रपाठादयः सामवेदे। तत्र एतस्यैव ऋत्विज एते धर्म्मा इति नियामकाभावात् येन केनचिदृत्विजा यः कश्चिद्धर्म्मोऽनुष्ठेयइत्यनियमः प्राप्नोति तदा हौत्रमाध्वर्य्यवमौद्गात्रमित्येता समाख्याय श्रूयन्ते। ताभिश्च लौकिकसमाख्याभिः ऋग्वेदिना ऋत्विजा कर्त्तव्यं हौत्रम्। यजुर्वेदिना ऋत्विजा कर्त्तव्यमाध्वर्य्यवम्। सामवेदिना ऋत्विजा कर्त्तव्यमौद्गात्रमित्येव प्रतीयते न तु कर्त्तव्यकर्म्मस्वरूपम्। अत्र आकाङ्क्षावशात् ऋग्वेदोक्तं कर्म्म हौत्रम्। यजुर्व्वेदोक्तं कर्म्म आध्वर्य्यवम्। सामवेदोक्तं कर्म्म औद्गात्रमिति तत्तद्वेदोक्तं कर्म्म हौत्रादिकमिति नियमः, प्रमाणान्तरविरोधाभावात्। एवमेव न्यायमालातृतीयाध्याय तृतीयपादे सिद्धान्तितम्। सङ्क्षेप इति नानास्थान स्थानामेकत्रस्थापनमित्यर्थः।

श्रुतिलिङ्गादिप्रमाणनिरूपनमुपसंहरति तदेवमिति एतस्य विधेः सहकारिभूतानि षट् प्रमाणानीत्यनेन श्रुतिलिङ्गादीनां यद्विनियोगविधेः सहकारित्वमुक्तं तदुपसंहरन् विनियोगविधि प्रतिपाद्यानामङ्गानां द्वैविध्यमाह एतत्सहकृतेति। समिदादिभिः समिधो यजतीत्याद्युक्तसमिद्द यागादिभिः। द्वैविध्यं प्रतिपादयति सिद्धेति। क्रियेति च। सिद्धरूपाणि कर्त्तृप्रयत्नासाध्यस्वरू पाणि। क्रियारूपाणि कर्त्तृप्रयत्नसाध्यस्वरूपाणि।

तानि दर्शयति तत्रेति। जातिर्वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिश्रुतिबोधित ब्राह्मण त्वादिः। द्रव्यं व्रीहिभिर्यजेतेत्यादिश्रुतिप्रतीतव्रीह्यादि। सङ्ख्याग्नेयोऽष्टाकपाल इत्यादा वष्टत्वादिरूपा। आदिना श्वेतमालभेतेत्यादिगुणपरिग्रहः। दृष्टार्थानि यागस्वरूपनिर्व्वाहकतया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न्येव। क्रियारूपाणि च द्विविधानि, गुणकर्म्माणि प्रधानकर्म्माणि च। एतान्येव सन्निपत्योपकारकाणि आरादुपकारकाणि चोच्यन्ते। तत्र कर्म्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म्म सन्निपत्योपकारकम्। यथावघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थञ्च। दृष्टार्थमवघातादि। अदृष्टार्थं प्रोक्षणादि। दृष्टादृष्टार्थं पशुपुरोडाशयागादि। तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। इदमेव चास्मिन्यपि कर्म्मे तुरच्यते।

---

दृष्टोपकाराणि। तद्व्यतिरिक्तेण यागस्वरूपानिष्पत्तेस्तत्प्रयोजनस्य दृष्टत्वमेव न त्वनुमेयमित्येवकारार्थः।

क्रियारूपाणि विभजति क्रियारूपाणीति। गुणकर्म्माणि अङ्गभूतद्रव्यादिसम्बन्धिकर्म्माणि। प्रधानकर्म्माणि प्रधानोपकारककर्म्माणि। एतान्येवेति। एवकारात् क्रियारूपयोर्गुणकर्म्मप्रधानकर्म्मणोरेव यथाक्रमं सन्निपत्योपकारकारादुपकारकसंज्ञे, न तु सिद्धरूपाणां जातिद्रव्यादीनां, तेषां साक्षादेव यागशरीरघटकतया यागस्वरूपनिर्वाहकत्वेन उपकारकत्वमात्रमिति सिध्यति। सन्निपत्येति। सन्निपत्य द्रव्यादिद्वारेण यागशरीरघटकीभूय उपकारकाणि यागजन्यापूर्व्वोपयोगीनीत्यर्थः। सन्निपत्योपकारकं लक्षयति कर्म्माङ्गेति। तत्स्वरूपमाह अवघातप्रोक्षणादीति। व्रीहीनवहन्ति व्रीहीन् प्रोक्षतीत्यादिश्रुतिविहितेत्यर्थः। आदिना पेषणादिपरिग्रहो मन्त्रपरिग्रहश्च। तत्प्रयोजनभेदेन द्वैविध्यमाह तच्चेति। दृष्टार्थं दृष्टफलकम्। एवमन्यत्रापि। अवघातादीति। अवघातस्य वैतुष्यकरलौकिकप्रयोजनकत्वात्। प्रोक्षणादीत्यादिना ग्रहं संमार्ष्टीति सम्मार्ज्जनपरिग्रहः। तस्य व्रीह्यादिसंस्काररूपालौकिकप्रयोजनकत्वात्। पशुपुरोडाशयागादीति। अत्र यागपदं होमपरम्। आदिना सोमयागपरिग्रहः। होमस्य देवतोद्देशेनाग्निप्रक्षेपावच्छिन्नद्रव्यत्यागरूपः दृष्टादृष्टार्थत्वमुपपादयति तद्धीति। द्रव्यत्यागांशेन अग्निप्रक्षेपांशेन। अदृष्टं यागजन्यमपूर्व्वम्। करोतीति परिणामः। देवतोद्देशेन अमुकस्य इदं भवत्विंत्यभिसन्धानेन। दृष्टमिति। देवताया इदं भवत्वित्यभिसन्धाने कृते देवतास्मरणस्य जायमानस्य सर्व्वलोकानुभवसिद्धत्वादिति भावः।

अयमत्र सुव्यक्तोऽभिप्रायः। यागाङ्गपश्वादिद्रव्योद्देशेनाग्निप्रक्षेपविधानादग्निप्रक्षेपस्य गुणकर्म्मत्वम्। द्रव्यद्वारा यागशरीरघटकतया यागजन्यापूर्व्वोपयोगित्वेन सन्निपत्योपकारकत्वमपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तच्च सन्निपत्योपकारकं द्विविधम्, उपयोक्ष्यमाणार्थम् उपयुक्तार्थञ्चेति। तत्रावघातप्रोक्षणादि उपयोक्ष्यमाणार्थम्, व्रीहीणामुपयोक्ष्यमाणत्वात्। प्रतिपत्तिकर्म्म इड़ाभक्षणादि उपयुक्तपुरोडाश संस्कारकम्। उपयुक्तस्याकीर्णकरणनिवर्त्तकं कर्म्म प्रतिपत्तिकर्म्म। उपयुक्तसंस्कारार्थञ्च कर्म्म उपयोक्ष्यमाणसंस्कारार्थाद्दुर्ब्बलम्।

---

वाच्यम्। देवताया इदं भवतु न ममेदमिति त्यागस्य यागरूपत्वेऽपि त्यज्यमानस्य हविषोऽग्नि प्रक्षेपणान्तरेण पश्चादिनाशस्य तदपूर्व्वस्य चानिष्पत्तेरग्निप्रक्षेपद्वारेण तद्यागनिष्पादकतायामादृष्टपूर्व्वनिष्पादकतायाञ्चाङ्गी कार्य्यत्वात्। तच्चादृष्टं दृष्टञ्चार्थं जनयति। देवतायै स्वाहेति होमात्मकस्य तस्य अग्निप्रक्षेपांशेनादृष्टजनकत्वात्, देवताया इदं भवत्वित्युद्देशपरेण देवतायै इत्यंशेन देवतास्मरणरूपदृष्टप्रयोजनजनकत्वाच्च। तस्मादंशभेदेन दृष्टार्थमदृष्टार्थञ्चेति न्याय्यमिति। सन्निपत्योपकारकस्य नामान्तरमप्याह इदमेवेति।

सन्निपत्योपकारकं विभजति तच्चे ति। उपयोक्ष्यमाणार्थं यस्य विनियोगः पश्चात् भविष्यति तदुपकारकम्। उपयुक्तार्थं यस्य विनियोगो जातस्तदर्थम्। उपयोक्ष्यमाणत्वात्। विनियोक्ष्यमाणत्वात्। उपयुक्तार्थमुदाहरति प्रतिपत्तीति। प्रधानोपयोगिवस्तुनः सम्बन्धे उपयोगानन्तरं यत्कर्म्म विहितं तदित्यर्थः। तत् किमित्यत आह इड़ाभक्षणादीति। इड़ा दर्शपौर्णमासयोः पुरोडाशविशेषखण्डम्। यजमानपञ्चमा इड़ां भक्षयन्तीति श्रुतेः। आदिना स्विष्टकृदादिपरिग्रहः। तस्योपयुक्तार्थत्वं कथं सिध्यतीत्यत आह उपयुक्तेति। उपयुक्तस्य यज्ञे विनियुक्तस्य पुरोडाशस्य संस्कारकमित्यर्थः। ननु कृतप्रयोजनस्य संस्कारापेक्षलाभावात् कथमस्योपयुक्तसंस्कारार्थत्वसम्भव इत्यत आह आकीर्णेति। कृत प्रयोजनानां यज्ञियद्रव्याणामवशिष्टैर्यागस्थानमाकीर्णं क्रियते तन्निवर्त्तकमित्यर्थः अतएव चतुर्थाध्यायद्वितीयपादे शास्त्रदीपिकायां पूर्व्वपक्षसिद्धान्तश्लोकौ—

न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम्।
प्रतिपत्तिरतो नैव निड़ास्विष्टकृदादि च॥
कृतार्थमपि तु द्रव्यमाकीर्णकरमित्यतः।
प्रतिपत्तिमपेक्षेत तद्विधानमतो वरम्॥ इति।

दुर्ब्बलमिति। अतएव शास्त्रदीपिका। उपयुक्तस्य संस्कारादुपयोक्ष्यस्य संस्क्रिया।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

उपयुक्तापेक्षया उपयोक्ष्यमाणे अत्यादरात्। अतएव प्रायणीयनिष्कासे उदयनीयमनुनिर्व्वपतीत्यत्र निष्कासस्य निर्व्वापार्थत्वं न तु तस्य तदर्थत्वम्। निष्कासस्योपयुक्तत्वादित्युक्तमेकादशे। तच्च सन्निपत्योपकारकमाराादुपकारकाद्बलीयः।

नन्ववघातादि भवतु बलीयः, तस्य दृष्टार्थत्वात्। आरादुपकारकस्य चादृष्टार्थत्वात् दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात्। प्रोक्षणादि सन्निपत्योपकारकन्तु कथं बलीयः, उभयोरदृष्टार्थत्वात्। किञ्च आरादुपकारकं साक्षात्प्रधानाङ्गम्। तस्यान्योद्देशेना-

---

गरीयसीत्यादि। अत्यादरादिति। उपयोक्ष्यमाणसंस्काराभावे असंस्कृतद्रव्येण कृतस्य यागस्यानिष्पत्तिः। उपयुक्तसंस्काराभावे अङ्गविशेषानिष्पत्तिरित्येवात्यादरबीजम्। अतएवेति उपयुक्तसंस्कारार्थस्य। उपयोक्ष्यमाणसंस्कारार्थाद्दुर्बलत्वादेवेत्यर्थः।

प्रायणीयेति। अयमत्र विस्तरः। ज्योतिष्टोमे प्रायणीय उदयनीयश्चेति चरुद्वयमस्ति। तत्र प्रायणीयचरोर्भाण्डलिप्तशेषांशो निष्कासः। उदयनीयचरुश्च हविष्यरूपः। तत्रैवं श्रूयते, प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपतीति। अत्र संशयः प्रायणीयनिष्कासस्य भूतोपयोगस्य प्रतिपत्तिरूपः। किं वा उदयनीयनिर्व्वापस्य भाव्युपयोगस्य प्रायणीयनिष्काससंयोगरूपसंस्कारार्थः। अत्र प्रायणीयनिष्कासस्य प्रतिपत्तिरूपत्वे उपयुक्तसंस्कारार्थत्वं स्यात्। उदयनीयस्य प्रायणीयनिष्काससंयोगरूपसंस्कारार्थत्वे उपयोक्ष्यमाणसंस्कारार्थत्वं स्यात्। एवञ्च उपयुक्तार्थापेक्षया उपयोक्ष्यमाणार्थस्य बलीयस्तया भूतोपयोगस्य निष्कासस्य उदयनीयसंस्कारार्थत्वमेव। न तूदयनीयसंयोगस्य निष्कासप्रतिपत्त्यर्थत्वमित्येकादशाध्यायद्वितीयपादे न्यायमालादौ सिद्धान्तितम्।

तच्चेति। त्रिविधमेवेत्यर्थः। अथादृष्टार्थापेक्षया दृष्टार्थस्यावघातादेर्बलवत्तायान्याय्यतया अदृष्टार्थादारादुपकारकात् दृष्टार्थसन्निपत्योपकारकस्यावघातादेर्बलवत्त्वमस्तु। प्रोक्षणादिरूपस्या दृष्टार्थसन्निपत्योपकारकस्य तु कथं बलवत्त्वसम्भवः। द्वयोरेवादृष्टार्थत्वाविशेषादिति शङ्कते नन्विति। उक्तार्थे युक्त्यन्तरमाह किञ्चेति। अङ्गाङ्गापेक्षया प्रधानाङ्गस्य बलवत्त्वे द्वादशाध्याय

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधानात्। सन्निपत्योपकारकन्तु अङ्गाङ्गम्। कर्म्माङ्गव्रीह्याद्युद्देशेन विधानात्। अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः।

अङ्गगुणविरोधे च तादर्थ्यात्।

इति न्यायात्। अतएव य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेत्यविशेषेण विधानेऽपि पर्व्वानुग्रहः सोमस्यैव क्रियते, न तु दीक्षणीयादेः। अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम्।

उच्यते, सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः। सन्निपत्योपकारके हि कर्म्मणि उपकार्य्योपकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वाक्यक्लृप्तः। उपकारमात्रन्तु

अङ्गाङ्गापेक्षया प्रधानाङ्गस्य बलवत्त्वे द्वादशाध्यायद्वितीयपादसूत्रं प्रमाणयति अङ्गगुणेति। अस्यार्थः। अङ्गगुणेन प्रधानगुणस्य विरोधे अङ्गगुणो बाध्यते, तादर्थ्यात् अङ्गगुणस्यापि प्रधानोपकारकत्वादिति। अयमभिप्रायः। प्रधानस्य सगुणत्वसम्पादनायैव अङ्गं सगुणं क्रियते। एवञ्च यद्यङ्गगुणेऽनुष्ठीयमाने प्रधानगुणबाध आपद्यते तदा अङ्गस्य सगुणताकरणमनर्थकमिति साक्षादुपकारकसम्बन्धे परम्परोपकारकादरो न युक्त इति। एवमेव भाष्याशयः।

तत्पूर्वसिद्धान्तविषयं दर्शयति अतएवेति। य इष्ट्येति। ज्योतिष्टोमे अग्नावैष्णवमेकादशकपालं निर्व्वपेत् दीक्षिष्यमाण इति श्रुत्या दीक्षणीयेष्टिर्विहिता। अनन्तरं य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति श्रुत्या इष्ट्यादीनां पर्व्वकालो विधीयते। एवञ्च अङ्गभूताया दीक्षणीयेष्टेः प्रधानभूतस्य सोमयागस्य च पर्व्वसम्बन्धोऽवगम्यते। तच्च विरुद्धम्, तयोः पूर्व्वापरदिनकर्त्तव्यत्वात्। तस्मात् किं दीक्षणीयेष्टेः पूर्व्वकर्त्तव्यत्वं सोमयागस्य तदुत्तरदिनेऽनुष्ठानं किं वा इष्टेः पूर्व्वदिनेऽनुष्ठानं कृत्वा सोमस्य पर्व्वसम्बन्ध इति संशये, इष्टेरेव प्रथमपठितत्वेन पर्व्वकालसम्बन्धोऽस्तु सोमस्य दिनान्तरे उत्कर्ष इति पूर्व्वपक्षे प्राप्ते प्रधानकालत्वात् सोमस्यैव पर्व्वसम्बन्धी, दीक्षणीयादेस्तु दिनान्तरेऽनुष्ठानमिति निर्णीतम्। सन्निपत्योपकारकस्येति। सर्व्वस्येति शेषः।

पूर्व्वपक्षं सिद्धान्तयितुमाह उच्यत इति। वाक्यक्लृप्त इति। व्रीहीन् प्रोक्षतीति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कल्प्यम्। आरादुपकारकस्थले तु दर्शपौर्णमासप्रयाजयोः सम्बन्धः कल्प्यः, उपकारोऽपि। किञ्च आरादुपकारकस्थले हि प्रकरणं विनियोजकम् इतरत्र तु व्रीहीन् प्रोक्षतीति वाक्यमेव। व्रीहिपदेनापूर्व्वसाधने लक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम्।

यच्चोक्तमङ्गगुणविरोधे च तादर्थ्यादिन्यायेन दुर्ब्बलत्वमिति, तदसत्। न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति। तत्स्वरूपे आनर्थक्यात्। किन्तु तत्संस्कारद्वारा क्रत्वर्थमेव। सन्निपत्योपकारकाणामुत्पत्त्यपूर्व्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात्। अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः। दीक्षणीयादेः पर्व्वानुग्रहस्तु दीक्षणीयाद्यर्थं एव तस्य तदपूर्व्वप्रयुक्त-

---

वाक्ये प्रोक्षणं संस्कारानुकूलजलप्रक्षेपविशेषः। व्रीहीनिति द्वितीयया प्रोक्षणक्रियाजन्यसंस्काररूपफलाश्रयत्वं बोध्यते। तथाच व्रीहीणां संस्काराश्रयत्वं प्रोक्षणस्य तत्संस्कारजनकत्वमित्येवं सम्बन्धो वाक्यादेव प्रतीयत इति भावः। उपकारमात्रमिति। प्रोक्षणस्य स्वजन्यसंस्कारद्वारा अपूर्व्वजनकताधायकत्वं व्रीहीणाञ्च प्रोक्षणसंस्कृतत्वेनापूर्व्वजनकत्वमित्यर्थः। कल्प्यमिति। असंस्कृतव्रीहीणामप्यपूर्व्वजनकत्वे प्रोक्षणाभिधानानुपपत्त्या प्रोक्षणसंस्कृतैरेव व्रीहीभिरपूर्व्वं कुर्य्यादित्येवं कल्प्यमित्यर्थः।

सम्बन्धः कल्प्य इति। प्रकरणपाठादेव प्रधानाङ्गयोः परस्परसम्बन्धः कल्पनीय इत्यर्थः। प्रयाजाद्युपकृतेन यागेनापूर्व्वं कृत्वा भावयेदित्युपकारस्तावदुभयत्रैव कल्पनीय इत्याह उपकारोऽपीति। वाक्यमेवेति। विनियोजकमित्यनेन पूर्व्वेण सम्बन्धः। अपूर्व्वसाधने अपूर्व्वसाधनव्रीहौ। क्रतौ प्रोक्षतीत्याख्यातार्थभावनायाम्। तथाच प्रोक्षणेनापूर्व्वसाधनानि व्रीहीन् भावयेदिति वाक्यार्थपर्य्यवसानात् व्रीह्यपूर्व्वं भावयेदित्येव फलितम्। बलीयस्त्वमिति। प्रकरणाद्वाक्यस्य बलवत्त्वादिति भावः।

द्वादशाध्यायद्वितीयपादोक्तन्यायविरोधोपन्यासं दूषयितुमाह यच्चेति। तदर्थं व्रीह्यादिफलकम्। तत्स्वरूपे व्रीह्यादिस्वरूपोत्पादने। आनर्थक्यादिति। प्रोक्षणात् प्रागपि व्रीह्यादेः सिद्धतया तज्जनकत्वासम्भवादित्यर्थः। क्रत्वर्थमेव संस्कृतव्रीहिकरणकयागजन्यापूर्व्वोत्पादनेन यागोपकारकमेव। उत्पत्त्यपूर्व्वेति। प्रधाना-

स्यात्। अतो युक्तं साक्षात् प्रधानाङ्गेन प्रधाने पर्व्वानुग्रहेण स बाध्यत इति। तत्सिद्धं सन्निपत्योपकारकस्यारादुपकारकाद्दुर्बलीय-स्त्वम्।

अतएव स्थाणौ स्थाणवाहुतिं जुहोतीति विहिता स्थाणवाहुतिर्यूपच्छेदनस्थाणुद्वारा यूपसंस्कारार्था। देवदत्तधारितायाः

---

पूर्व्वार्थत्वस्येत्यर्थः। उभयविधं सन्निपत्योपकारकमारादुपकारकञ्च। क्रत्वर्थमेव प्रधानयागार्थमेव। इति हेतोः।

दीक्षणीयादिपर्व्वानुग्रहे तद्वैलक्षण्यं दर्शयति दीक्षणीयादेरिति। दीक्षणीयाद्यर्थः एवेति। दीक्षणीयाद्युपकारक एव। एवकारान्न सोमोपकारक इति लभ्यते। तदपूर्व्वेति। दीक्षणीयादिपर्व्वानुग्रहस्य दीक्षणीयमात्रार्थत्वादित्यर्थः। साक्षादिति। साक्षात्प्रधानाङ्गरूपो यः प्रधाने पर्व्वसम्बन्धस्तेन स दीक्षणीयादिपर्व्वसम्बन्धो बाध्यत इति युक्तमित्यर्थः। तथाच आरादुपकारकाणां तावत्प्रधानोपकारकत्वं सिद्धम्। सन्निपत्योपकारकस्यापि प्रोक्षणाद्यैर्व्रीह्यादिसंस्कारद्वारा प्रधानोपकारकत्वम्। न तु व्रीह्यादिमात्रोपकारकत्वमित्युभयोरेव साक्षात्परम्परया प्रधानाङ्गत्वमेव। न त्वेकस्य प्रधानाङ्गत्वमन्यस्य गुणाङ्गत्वम्। भवदभिमतदृष्टान्ते तु सोमस्य प्रधानभूततया तस्य पर्व्वसम्बन्धः प्रधानाङ्गम्। दीक्षणीयादिपर्व्वसम्बन्धस्य तु दीक्षणीयाद्युपकारकत्वमेव न तु दीक्षणीयाद्युपकारद्वारा सोमोपकारकत्वमपीत्युभयोः साक्षात् परम्परोदासीनेन एकसोमयागोपकारत्वाभावात् दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यमिति भावः।

क्व तावत् सन्निपत्योपकारकस्य आरादुपकारकाद्दुर्बलीयस्त्वमिति जिज्ञासायां सिद्धान्तवादं दर्शयितुमाह अतएवेति। अग्नीषोमीये पशौ श्रूयते, स्थाणौ स्थाणवाहुतिं जुहोतीति। यूपे छिन्ने यदवशिष्टं वृक्षमूलं विद्यते तदेव काष्ठं स्थाणुरुच्यते। तत्र या आहुतिः सा स्थाणवाहुतिः। तथाच सूत्यन्तरम्। आव्रश्चने जुहोतीति। आवृश्च्यते छिद्यते यूपः अस्मादित्याव्रश्चनमवशिष्टं वृक्षमूलमिति माधवाचार्य्याः। तत्रायं संशयः। किमारादुपकारकं कर्म्म स्थाणवाहुतिः साक्षात् यागोपकारकत्वात्। किं वा यूपसंस्कारद्वारा यागोपकारकतया सन्निपत्योपकारकं कर्म्मेति। तत्रारादुपकारकत्वे विकृतौ खले वाल्यामपि सा आहुतिः प्राप्नोति, यागोपकारकत्वात्। माधवयूपाभावेऽपि खले वाल्यां पशुबन्धनस्य विधानात् तस्याः काष्ठविशेष-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम्। न तु स्थाण्वा-हुतिरारादुपकारिकेत्युक्तं दशमे इति दिक्।

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म्म आरादुपकारकम्, यथा प्रयाजादि। तदेवं निरूपितं द्विविधमप्यङ्गजातम्। तच्च न यागादिस्वरूपप्रयुक्तम्, स्वरूपे आनर्थक्यात्। तदन्तरेणापि तत्सिद्धेः। किन्त्वपूर्व्वप्रयुक्तमेव। नहि तदन्तरेणापूर्व्वम्भवतीत्यत्र किञ्चित्प्रमाणमस्ति, तस्यादृष्टत्वात्।

---

त्वेन स्थाणुत्वावश्यकत्वाच्च। तथाचाश्वलायनः। साद्यस्के ऽनुर्व्वरा वेदिः खली वाली यूप इति। खली वाली, वलीवर्द्दबन्धनाय खलि कृषीवलैर्यो मेधिर्निखन्यते सः। स्थाण्वाहुतेर्यूपसंस्कारार्थत्वे तु साद्यस्कादाहुतिर्निवर्त्तेत खली वाल्या यूपत्वाभावात्।

एवं संशये पूर्व्वपक्षः। छेदनावशिष्टमूलरूपस्य स्थाणोर्यूपत्वाभावादाहुतेर्यूपसंस्कारार्थत्वा-सम्भवादारादुपकारकत्वमेवेति। एवं पूर्व्वपक्षे प्राप्ते सिद्धान्तः। यूप-प्रकरणात् यूपसंस्कारि-कैवेयमाहुतिः। न च यागप्रकरणस्यापि सत्त्वादुभयथाप्यदृष्टार्थत्वाविशेषाच्च आरादुपकारत्व-मेवास्त्विति वाच्यम्। विशेषप्रकरणेन सामान्यप्रकरणस्य बाध्यत्वात्। यूपसंस्कारकस्य सन्नद्धोपकारकरूपतया असन्नद्धोपकारिण आरादुपकारकाद्बलीयस्त्वाच्चारादुपकारकत्वासम्भ-वात्। ननु स्थाणोर्यूपत्वाभावात्तदाहुतिः कथं यूपोपकारार्थेति चेन्न यूपीयोऽयमवशिष्टकाष्ठ-विशेष इति मत्वा तत्र क्रियमाणाया आहुतेर्यूपोपकारकत्वात्। यथाचार्य्यस्य देवदत्तस्य शिरो-ऽवतारिताया अपि स्रजः शिष्येण शुचिदेशे स्थापनमाचार्य्यसम्बन्धित्वादाचार्य्योपकारार्थमेव भवति तथा प्रकृतेऽपीति दशमाध्यायप्रथमपादीयसिद्धान्तमुपन्यस्यति स्थाण्वाविति। यूपव्रश्चनेति। यूप-च्छेदनावशिष्टकाष्ठविशेषरूपस्थाणुद्वारेत्यर्थः।

आरादुपकारकं लक्षयति द्रव्यादीति। विधीयमानं प्रधानसन्निधाविति शेषः। तदुदाहरति यथेति। यागादीति। यागादिस्वरूपार्थमित्यर्थः। तत्स्वरूपे यागादिस्वरूपोत्पत्तौ। आनर्थ-क्यादनिमित्तत्वात्। तदन्तरेणापि तदङ्गं विनापि। यागसिद्धेर्यागनिष्पत्तेः। ननु तर्हि अङ्गानां प्रधानार्थत्वं किंस्वरूपमित्यत आह किन्त्विति। अपूर्व्वप्रयुक्तं यागजन्यापूर्व्वार्थम्। ननु यदि अङ्गाभावेऽपि प्रधाननिष्पत्तिरङ्गीक्रियते तदा तदपूर्व्वमपि निष्पद्यतामित्यत आह नहीति। प्रमाणमस्तीत्यनेनान्वितम्। प्रमाणाभावे हेतुमाह तस्येति। अपूर्व्वस्येत्यर्थः। अदृष्टत्वात्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न चैवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तत्वमेव किं न स्यादिति वाच्यम्। फलभावनायां यागस्य करणत्वादङ्गानाञ्च करणानुग्राहकत्वात् तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्व्वमेवोपस्थाप्यते, सन्निकर्षात्। दीक्षणीयादिशब्देनैव तदपूर्व्वम्। न तु फलमुपस्थाप्यते, विप्रकर्षात्। अतो न तत्प्रयुक्तत्वमङ्गानाम्। अतएव अगन्म सुवः सुवरगन्मेति मन्त्रो विकृतावूहितव्य इत्युक्तं

---

अप्रत्यक्षत्वात्। तथाच अङ्गाभावेऽपि प्रधानापूर्व्वं जायत इत्येवं शब्दप्रमाणं तावन्नास्तीत। परन्तु अपूर्व्वस्याप्रत्यक्षतया प्रत्यक्षानुमानादेरपि नात्रावसरः। अनुमानादेरपि प्रत्यक्षोपजीवकत्वादिति भावः।

अङ्गानां फलार्थत्वं निराकरोति नचैवमिति। प्राधान्यात फलस्यमुख्यप्रयोजनत्वात। अदृष्टत्वात स्वर्गादेरिदानीमप्रत्यक्षत्वात्। तथाच फलस्याप्रत्यक्षतया अङ्गानां तज्जनकत्वाभावस्यानुपलब्धिगम्यत्वमपि न सम्भवतीति भावः। फलप्रयुक्तत्वं फलार्थत्वम्। करणानुग्राहकत्वादिति। कथं कुर्य्यादिति करणप्रकारविशेषाकाङ्क्षानिवर्त्तकत्वादित्यर्थः। तदर्थत्वे तत्फलत्वे। बुद्धे तत्तदङ्गेन तत्तद्यागं भावयेदित्यवगते। तत्र करणांशे। आनर्थक्येति। करणीभूतयागादुत्पादनासमर्थतया निष्फलत्वप्रसक्तावित्यर्थः। तेन यागपदेन। स्वापूर्व्वं स्वजन्यमपूर्व्वं। उपस्थाप्यते लक्षणया बोध्यते।

ननु करणीभूतयागादावङ्गविधिबोध्यभावनान्वयानुपपत्त्या यागजन्यफल एवान्वयोऽस्तु, कुतो भावनाया यागजन्यापूर्व्वान्वयमङ्गीकरोषीत्यत आह सन्निकर्षादिति। तथाच यागात् साक्षादपूर्व्वमेव जायते। फलन्तु न साक्षाद्यागजन्यम्, किन्तु तदपूर्व्वजन्यम्। एवञ्च यागपदे जन्यत्वेन लक्षणायां सन्निकृष्टस्य तज्जन्यापूर्व्वस्यैवोपस्थितिः सम्भवति, न विप्रकृष्टस्य स्वर्गादिफलस्येति भावः। अत्रैव दृष्टान्त उक्तो दीक्षणीयादीति। वाङ् नियमे दीक्षणीयादिपदैर्यथा लक्षणया तत्तदपूर्व्वमुपस्थाप्यते तद्वदित्यर्थः। तत्प्रयुक्तत्वम् अङ्गानां फलार्थत्वम्।

अतएव अङ्गानामपूर्व्वार्थत्वादेव। अगन्मेति। सुवः स्वरित्यर्थः। स्वरित्येव पाठो भाष्यादौ। मन्त्रः दर्शपौर्णमासप्रकरणे श्रुतोव्रीह्यवघातमन्त्रः। विकृतौ सौर्य्ययागे। ऊहितव्य इति। अगन्म स्वरित्यत्र अगन्म ब्रह्मवर्च्चसमित्येवमूहितव्य इत्यर्थः। विकृतेः सौर्य्ययागस्य ब्रह्मवर्च्चसफलकत्वादिति भावः। उक्तं पार्थसारथिमिश्रैः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नवमे फलदेवतयोश्चेत्यत्र । फलप्रयुक्तत्वे तु सौर्य्यादिविकृतिषु स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्त्तेत, न तरां चोहितव्यः स्यादिति । तस्मिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्व्वप्रयुक्तत्वम् ।

तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतासंस्कारद्वारा यागस्वरूपोपयोगादुत्पत्त्यपूर्व्वार्थत्वम् । अतएवौषधधर्म्मावघातादीनामाज्येऽप्रवृत्तिस्तेषामाग्नेयापूर्व्वप्रयुक्तत्वादाज्यस्य च तदर्थत्वाभावादित्युक्तं तृतीये ।

आरादुपकारकाणान्तु स्वरूपेऽनुपयोगात् परमापूर्व्वार्थत्वम् । तत्रोत्पत्त्यपूर्व्वस्य यागस्वरूपानुष्ठानान्तरमेवोत्पद्यमानत्वात् ।

---

नवमे नवमाध्यायप्रथमपादे । कस्मिन्नधिकरणे उक्तमित्यत आह फलदेवतयोश्चेति । इत्यत्र एतत्सूत्रीयाधिकरणे । एतत्सूत्रेण मन्त्रस्य फलदेवतयोः फलाद्यर्थत्वं नापूर्व्वार्थत्वमिति पूर्व्वपक्षयित्वा परसूत्रेण तयोरपि अपूर्व्वार्थत्वं सिद्धान्तितम् । नन्वनेन सिद्धान्तेन कथमूहितव्य इत्युक्तं सिद्धैरित्यतस्तत्सिद्धान्ताभिप्रायमाह फलप्रयुक्तत्वे त्विति । स्वर्गफलाभावादिति । दर्शपौर्णमासयोः स्वर्गफलकतया स्वरगन्नेति मन्त्रः सङ्गच्छते, सौर्य्ययागे तु विकृतौ ब्रह्मवर्चसफलश्रवणान्मन्त्रप्रवृत्तिरेव न स्यात् सुतरामेव नोहसम्भवः । यदि तु अपूर्व्वार्थत्वं तदा प्रवृत्तेरावश्यकतया स्वः पदस्यासमवेतार्थत्वादूहः स्यादेवेति भावः ।

उत्पत्त्यपूर्व्वार्थत्वम् आग्नेयाद्यपूर्व्वार्थत्वम् । औषधधर्म्माणां व्रीह्यादिधर्म्माणाम् । आज्येऽप्रवृत्तिरिति । औषधधर्म्माणामवघातादीनामाज्यधर्म्माणामुत्पवनादीनाञ्च परमापूर्व्वार्थत्वमङ्गीकृत्य सर्व्वेषामेव परमापूर्व्वार्थत्वे सर्व्वत्र सर्व्वधर्म्माः स्युरिति पूर्व्वं पक्षयित्वा अवघातादीनामाग्नेयप्रकरणविहितत्वेन आग्नेययागजन्योत्पत्त्यपूर्व्वार्थत्वम्, न परमापूर्व्वार्थत्वम् । आज्यस्य तु नाग्नेयापूर्व्वार्थत्वमिति न तत्रौषधधर्म्मप्रवृत्तिरिति सिद्धान्तितम् । उक्तं शास्त्रदीपिकायाम् । तृतीये तृतीयाध्यायप्रथमपादे । स्वरूपे यागस्वरूपोत्पादने । अनुपयोगादशक्तत्वात् परमापूर्व्वार्थत्वं प्रधानयागजन्यप्रधानापूर्व्वार्थत्वम् ।

अवान्तरापूर्व्वादीनामुपयोगप्रकारमाह तत्रेति । तेष्वपूर्व्वेषु मध्ये इत्यर्थः । उत-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सन्निपत्योपकारकाणां पूर्व्वाङ्गाणां तदुत्पत्तावुपयोगः। उत्तराङ्गाणां तेषान्तु तत्स्थितावुपयोगः। परमापूर्व्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्व्वेषामारादुपकारकाणां तदुत्पत्तौ, प्रयोगवहिर्भूतस्य तु तत्स्थितावुपयोगः।

---

पत्नापूर्व्वस्य आग्नेयादिरैकैकयागजन्यैकैकापूर्व्वस्य। याग स्वरूपेति। प्रधानभूतयागेत्यर्थः। पूर्व्वाङ्गाणां प्रधानानुष्ठानात् प्राङ्कृतानाम्। तदुत्पत्तौ उत्पत्त्यपूर्व्वोत्पत्तौ। पूर्व्ववर्त्तिनामेवोत्पादकत्वसम्भवादिति भावः। उपयोगः स्वजन्यावान्तरापूर्व्वद्वारेण निमित्तत्वम्। उत्तराङ्गाणां प्रधानानुष्ठानोत्तरकालकृताङ्गानाम्। सन्निपत्योपकारकाणामित्यनुषङ्गः। तत्स्थितौ प्रधानापूर्व्वस्य फलपर्य्यन्तस्थायित्वशक्तिमत्त्वोत्पत्तौ।

परमापूर्व्वोपकारकाणामारादुपकारकाणां कीदृश उपकारक्रम इत्यवाह परमापूर्व्वेति। साङ्गप्रयोगेति। अङ्गापूर्व्वाणि प्रधानापूर्व्वञ्च क्रमेण जायन्ते। अनन्तरमङ्गापूर्व्वाणि प्रधानापूर्व्वस्य फलजननोन्मुखत्वरूपमुपकारं विधाय विनश्यन्तीति नियमादङ्गप्रधानसमुदायरूपप्रयोगसमाप्तावेव परमापूर्व्वोत्पत्त्यवश्यम्भावादिति भावः। सर्व्वेषां पूर्व्वोत्तरकालकृतानाम्। तदुत्पत्तौ परमापूर्व्वोत्पत्तौ। तत्स्थिताविति। यद्यपि मीमांसकान्तरैः पूर्व्वापरकालकृताङ्गजातजन्यावान्तरापूर्व्वाणि निःशेषमुत्पद्यप्रधानापूर्व्वस्य फलजननोन्मुखत्वरूपमुपकारं जनयित्वा युगपदेव विनश्यन्ति। न पुनः कानिचित् तदुत्पत्तौ कानिचिच्च स्थितौ निमित्तानीति मन्यते। स्थितिनिमित्तत्वाङ्गीकारे तदवान्तरापूर्व्वाणामपि फलपर्य्यन्तस्थायित्वस्याभ्युपेयत्वापत्तेः। अतएव शास्त्रदीपिकायाम्। तथाङ्गान्यपि क्रतूपकारकत्वेन चोदितानि चणिकत्वात् स्वरूपेण संहत्योपकर्त्तुं न शक्नुवन्तीत्यवान्तरापूर्व्वाणि तावदारभन्ते। ततः सर्व्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भोन्मुखत्वरूपमनुग्रहं महोपकारं जनयन्ति। तत्र त्वयं विभागः। सन्निपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यतिशयमादधानानि तदुत्पत्त्यपूर्व्वनिष्पत्तौ व्याप्रियन्ते। तद्द्वारेण फलापूर्व्वे। आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्व्वेभ्यः फलापूर्व्वनिष्पत्तावित्युक्तम्। तथापि मतान्तरमवलम्ब्य ग्रन्थकृताभिहितम्। एतद्विस्तरेणाभिहितमर्थसंग्रहटीकायामस्माभिः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्व्वस्थितावुपयोगः! तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे। तत्सिद्धं सर्व्वथाङ्गानामपूर्व्वार्थत्वम् । प्रकृतमनुसरामः । तदेवं निरूपितः सङ्क्षेपतो विनियोगविधिः ।

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यै-

---

प्रयोगवहिर्भूतस्य परमापूर्व्वस्थितावुपयोगे उदाहरणमाह यथेति । अङ्गत्वेनेति । तथाच शास्त्रदीपिकायाम्—

प्रसिद्धात्कर्म्मणो भिन्नमनिर्ज्ञातप्रयोजनम् ।
वाजपेयाङ्गभावेन वाक्येनैव विधीयते ॥

वाजपेयप्रयोगं यथोक्तं निर्व्वर्त्त्य न तावत्येव कृती स्यात्, इदमपरमङ्गं तस्य पश्चात् कर्त्तव्यमित्यभिहितम् । चतुर्थे चतुर्थाध्यायतृतीयपादे ।

अथ उद्देशक्रमप्राप्तमप्यधिकारविधिनिरूपणमपहाय विनियोगविधिनिरूपणप्रकरणावगताङ्गप्रधानवाक्यानां झटित्युपस्थितिसम्भवात् तद्घटितप्रयोगविधिनिरूपणस्य शिष्यसौगम्याय विनियोगविधिनिरूपणानन्तरमेव प्रयोगविधिं निरूपयति प्रयोगेति । प्रयोगस्य एककर्म्मतापन्नाङ्गप्रधानात्मककार्य्यसङ्घातस्य प्राशुभाव उत्तरोत्तरकर्म्मणो विलम्बराहित्यं तद्बोधक इत्यर्थः । नन्वेतादृशं किमपि वाक्यान्तरं न श्रूयते येन तत्तत्कर्म्माण्यविलम्बेन कर्त्तव्यतया विधीयन्ते, तदेतल्लक्षणमसम्भवीत्यत आह स चेति । अङ्गवाक्येति । अङ्गवाक्यैरङ्गविधिभिरेकवाक्यतापन्नो यः प्रधानविधिः स एवेत्यर्थः । एवकारात् प्रयोगविधिर्न विध्यन्तरमिति लभ्यते ।

ननु वाक्यानां स्वस्वार्थबोधनानन्तरं परिसमाप्ततया नानात्वमेव स्वीक्रियते, तत्कथमस्य एकवाक्यत्वसम्भव इति चेत् । उच्यते, यथा स्वर्गकामो यजेतेत्यादौ पदानां स्वस्वार्थबोधनानन्तरं विरतत्वेऽपि आकाङ्क्षावशात् परस्परान्वितत्वेन मिलितानां तेषां वाक्यत्वं जायते, तथा दर्शपौर्णमासाभ्यां यजेत, समिधो यजति, इडो यजतीत्यादिवाक्यानां स्वस्वार्थबोधनानन्तरं समाप्तत्वेऽपि परस्परमुपकार्य्योपकारकाकाङ्क्षया अन्वितत्वेन मिलितानामेकवाक्यत्वं भवति । अतएव परस्परान्वितपदसङ्घातो वाक्यं तथाविधवाक्योच्चयो महावाक्यमित्युच्यते । तथाचोक्तं भट्टपादैः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कवाक्यतापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्य्यायं प्रयोगप्राग्भावं विधत्ते।

न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम्।

---

अर्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।

वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥ इति।

अथाङ्गाङ्गित्वं वैदिकवाक्य एव। तन्मात्रोक्तौ भारतरघुवंशादीनामेकमहावाक्यत्वं न स्यादिति। तत्संग्रहाय आदिपदमुपकार्य्योपकारकभावसम्बन्धग्राहकमुपात्तम्। तथाच प्राग्भावबोधकवाक्यान्तराभावेऽपि तत्तद्वाक्यसमुदायात्मकमहावाक्यस्यैव प्रयोगविधित्वमिति नासम्भव इति सिद्धम्।

अङ्गवाक्यैकवाक्यतापन्नप्रधानविधौ प्रयोगविधिलक्षणं सङ्गमयति स हीति। विधत्त इत्यन्वयः। को नाम प्रयोगप्राग्भाव इत्यतस्तत्स्वरूपमाह अविलम्बेति। अविलम्बः अपरपर्य्यायो नामान्तरं यस्य तमित्यर्थः। महावाक्यापरपर्य्यायस्य अङ्गवाक्यैकवाक्यतापन्नप्रधानविधेरविलम्बप्रतिपादकत्वे हेतुगर्भविशेषणमुक्तं साङ्गमित्यादि। अनुष्ठापयन् अनुष्ठेयत्वेन प्रतिपादयन्। तथाच यथा भारतादौ एकैकवाक्येन इतिवृत्तांशविशेष एव बोध्यते, वाक्यसमुदायात्मकमहावाक्येन तु समग्रेतिवृत्तम्। तथा वेदेऽपि तत्तद्वाक्येन कर्म्मावयवविशेष एवानुष्ठेयत्वेन प्रतिपाद्यते। तत्तद्वाक्यसमुदायात्मकमहावाक्येन तु कर्म्मसमुदायात्मकं साङ्गप्रधानमनुष्ठेयत्वेन बोध्यत इत्येककर्म्मात्मकव्यापारनिचयस्य अविलम्बेन कर्त्तव्यतैवायातीति भावः। नन्वेककर्म्मतापन्नत्वे बोधितेऽपि तत्तत्कर्म्मणामविलम्बेन कर्त्तव्यत्वे किं मानमित्यत उक्तं विलम्बे प्रमाणाभावादिति।

यथाच एककर्म्मतापन्नानां व्यापाराणां यत्र विलम्बे प्रमाणं नास्ति तत्राविलम्बेनैव कर्त्तव्यता। एकपाककर्म्मतापन्नस्थालीमार्ज्जनाद्योदनपरीक्षान्तव्यापाराणामविलम्बवदिति भावः। पूर्व्वोक्तहेतोः सत्प्रतिपक्षितत्वशङ्कामपनयति न चेति। अविलम्बेऽपीति। तेषां कर्म्मणामविलम्बेन कर्त्तव्यत्वेऽपीत्यर्थः। तथाच यथाविलम्बेऽपि प्रमाणाभावस्तथा विलम्बेन कर्त्तव्यतापि सम्भवति। ग्रामान्तरं गच्छतः पुरुषस्यान्तरा छायायामुपविशतो ग्रामान्तरगमनरूपैककर्म्मतापन्नपादविहरणानामन्तरा विलम्बवदिति भावः। तथाच विलम्बाविलम्बयोर्वैकल्पिकत्व-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विलम्बे हि अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते। नहि विलम्बेन क्रियमाणयोः पदार्थयोरिदमनेन सहकृतमिति साहित्यं व्यवहरन्ति। न चैवं साहित्यानुपपत्त्या

---

मस्त्वित्याशङ्कार्थः। तच्छङ्कानिरासकं हेतुमाह विलम्बे हीति। अङ्गेति। अङ्गविधीनां प्रधानविधेश्च या एकवाक्यता एकमहावाक्यता तया अवगतं यत् साहित्यम्। अङ्गप्रधानयोः परस्परसम्बद्धत्वं विलम्बे सति तदनुपपत्तिः प्रसज्यते इत्यर्थः।

तथाच लौकिककर्मणि विलम्बाविलम्बयोरैच्छिकत्वसम्भवेऽपि वैदिककर्मणि तत्तद्वाक्य-बोधित-तत्तत्कर्मणामङ्गप्रधानभावावगमात् अङ्गानाञ्च प्रधानसहकारित्वात् एतदेतत्सहकृतमेत-त्कर्म कर्त्तव्यमित्यङ्गप्रधानयोः परस्परसम्बद्धत्वप्रतीतेर्विलम्बेन तत्तत्कर्मानुष्ठाने तदनुपपत्तिरिति भावः। एतेनार्थापत्तिरेवाविलम्बे प्रमाणमिति दर्शितम्। विलम्बानुष्ठाने सहकारिसह-कृतत्वानुपपत्तौ हेतुमाह नहीति। साहित्यं व्यवहरन्तीति। दिवारात्रिक्रियमाणयोर्भोजनयो-रेकभोजनसहकृतमपरभोजनमित्यादिसाहित्यव्यवहाराभावादिति भावः। एवञ्च यदि साहित्यानुपपत्त्यैवाविलम्बत्वकल्पनं तदा अङ्गप्रधानयोरिव प्रधानानामप्याग्नेयादीनाम-विलम्बेनानुष्ठानं मन्तव्यम्, परस्परसाहित्यप्रतीत्यविशेषादिति ध्येयम्।

अविलम्बस्तु अप्रामाणिकवैधकर्मान्तराव्यवधानम्। अप्रामाणिकत्वं। कर्ममध्ये कर्त्तव्यत्वेन प्रमाणाप्रतिपादितत्वम्। तत्र वैधेति विशेषणात् पुरोडाशादितो मक्षिका-पसारणादौ कृतेऽपि न क्षतिः। अप्रामाणिकेति विशेषणात् क्षुतादावाचमने कृतेऽपि वैधकर्मव्यवहितत्वान्नाविलम्बहानिः। अतएव पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति श्रुतेरन्तरा सायंसन्ध्याद्यनुष्ठानं न दोषाय। अन्याधानयागयोः पूर्वापरदिनकर्त्तव्यताविधान-मुखेन अन्तरा तदनुष्ठानस्याभ्यनुज्ञानात्। एवं दर्शपौर्णमास्यनुष्ठेययागयोरेकयागत्वेऽपि न क्षतिः। न तु पूर्वापरक्रियामधिकरणकालाव्यवधानमविलम्बः। कालस्य क्षणरूपत्वे असम्भवः। स्थूलकालरूपत्वे तु प्रातरारब्धयागस्य किञ्चिदनुष्ठाय तद्दिनकर्त्तव्यवैधकर्माणि समाप्य आरब्धयागसमापनेऽपि अविलम्बेनानुष्ठानं सिध्यतु इत्यादिकमालोचनीयम्।

ननु प्रयोगविधियोध्यसाहित्यानुपपत्त्या समानकालीनत्वमेव प्रतीयतां क्रियासाहित्यस्य यौगपद्यरूपत्वात्। अव्यवधानेन पूर्वोत्तरकालक्रियमाणयोरविलम्बकृतत्वव्यवहारदृष्ट्या अविलम्बो न वाच्यः। प्रयोगविधिना अविलम्बाप्रतिपादनादित्यापत्तिं निरस्यति न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

समानकालत्वमेव स्यान्न त्वविलम्बः, अव्यवधानेन पूर्व्वोत्तरकालक्रियमाणपदार्थयोरविलम्बेन कृतमिति व्यवहारादिति वाच्यम्। अनेकपदार्थानामेकस्मिन् कालेऽनुष्ठानानुपपत्तेः। न च तावत्कर्त्तृसम्पादनेनानुष्ठानं किं न स्यादिति वाच्यम्। तस्येतस्य यज्ञक्रतश्चत्वार ऋत्विज इत्यादिना कर्त्तॄणां नियतत्वात्।

तस्मादङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेकवाक्यतावगतसाहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्त इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति।

स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत्कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं

---

चेति। व्यवहारादिति। अविलम्ब इत्यत हेतुरयम्। पश्चान्नञा योगः। तथाच एवं व्यवहारदर्शनेन अविलम्ब एव शास्त्रार्थ इति नेत्यर्थः। आपत्तिनिरासकं हेतुमाह अनेकेति अनुपपत्तेरिति। तथाच साहित्यस्य यौगपद्यरूपत्वे अननुष्ठानलक्षणमप्रामाण्यं स्यादिति भावः। नानाकर्त्तृसमवधानेनानुष्ठानमस्त्विति निराकरोति न चेति। यज्ञक्रतो यज्ञकर्त्तुः। उक्तविधया कर्म्मसङ्घस्य चतुर्भिरेव ऋत्विग्भिर्युगपत्कर्त्तुमशक्यतया।

अविलम्बमिति। तथाच प्रयोगविधिबोध्यसाहित्यस्य यौगपद्यरूपत्वासम्भवेन अव्यवहितकालवर्त्तितास्वरूपत्वमेवाङ्गीकार्य्यमिति भावः।

अविलम्बप्रतिपादनमुखेन पदार्थानां क्रमनियमोऽपि प्रयोगविधिना दर्शित इत्याह स चेति। प्रयोगविधिरित्यर्थः। नियते क्रमे क्रमनियमे। तदनङ्गीकारे दोषमाह अन्यथेति। प्रयोगविक्षेपेति। नियामकाभावादिच्छया पौर्व्वापर्य्यकल्पने प्रयोगस्य नानारूपत्वापत्तेरित्यर्थः। इष्टापत्तौ विधेस्तात्पर्य्यविशेषनिश्चयाभावप्रसङ्गः नानातात्पर्य्यकत्वानुपपत्तेरिति भावः।

अत इति। यतः क्रमनियममन्तरेण प्रयोगविधेस्तात्पर्य्यनिश्चयानुपपत्तिरत इत्यर्थः। पदार्थविशेषणतया तत्तत्कर्म्मविशेषणतया। एतत्कर्म्मानन्तर्य्यविशिष्टमेतत्कर्म्मेत्यादिरूपेण कर्म्म-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्रममपि पदार्थविशेषणतया विधत्ते। तत्र क्रमो नाम विततिविशेषः पौर्व्वापर्य्यरूपो वा।

तत्र षट् प्रमाणानि सन्ति। श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्या-

---

समुदायबोधनात् पौर्व्वापर्य्यरूपक्रमस्य पदार्थविशेषणत्वमिति भावः। क्रमपदार्थं निरूपयति तत्रेति। प्रयोगविधावित्यर्थः। विततिविशेष इति। यथा अव्यवधानेन स्थापनाद्घटादेः श्रेणीभावो विततिस्तथा अव्यवधानेनानुष्ठानात्कर्म्मगणस्य धारावाहिकत्वं विततिः। तत्र घटादेः पूर्व्वपूर्व्वस्य सद्भावदशायामेवोत्तरस्य स्थापनम्। कर्म्मगणस्य तु पूर्व्वपूर्व्वध्वंसदशायामेवोत्तरोत्तरस्यानुष्ठानमिति वैलक्षण्याद्विशेषपदम्।

ननु तथाविधा विततिरङ्गप्रधानरूपकर्म्मसमुदायनिष्ठैव, न पदार्थनिष्ठा, तत्तदेकैककर्म्मणः पदार्थपदव्यपदेश्यत्वात्। तत्कथं विततिनाम्नः क्रमस्य पदार्थविशेषणतया विधानमुक्तमित्यतः क्रमपदार्थमन्यथा निर्वक्ति पौर्व्वापर्य्येति। पौर्व्वापर्य्यं कस्यचित्कर्म्मणः पूर्व्वत्वं कस्यचिदपरत्वमित्यर्थः। तच्च एकैककर्म्मनिष्ठमिति पदार्थविशेषणमिति भावः।

ननु पदार्थबोधकवाक्येषु क्वचित् क्वचित् क्रमः श्रूयते। यथा वषट्कर्त्तुः प्रथमभक्ष इति। अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमित्यादि च, न तु सर्व्वत्र वाक्ये। एवञ्च तत्तद्वाक्यैकवाक्यतापन्नः प्रधानविधिः कथं सर्व्वपदार्थविशेषणतया क्रमं बोधयेत्। स हि यथाभिहितान्यङ्गानि समीक्ष्य प्रवर्त्तमानो नाधिकं ब्रूते। इत्यतः श्रुतिमन्तरेणापि क्रमः प्रमेय एव, श्रुतिवदन्येषामपि क्रमप्रमाणानां सद्भावादिति प्रतिपादयति तत्रेति। क्रमप्रतिपत्तावित्यर्थः षट् प्रमाणानीति। तथाच अर्थादीनामपि क्रमप्रतिपादकतया सर्व्वत्रैवान्यतमप्रमाणेन क्रमप्रतिपत्तिरावश्यकीति प्रयोगविधिना पदार्थमात्रस्य क्रमो विधीयत एवेति भावः। तत्र षडिति सङ्ख्यानिर्द्देशात् क्रमप्रतिपत्तौ प्रमाणान्तरासद्भावप्रतिपादनमुखेन षडन्यतमप्रमाणाविषयत्वे क्रमप्रतिपत्तिर्नास्तीति सूचितम्। तथाच पञ्चमाध्यायप्रथमपादे सिद्धान्तसूत्रम्।

अनियमोऽन्यत्रेति।

यत्र क्रमप्रतिपादकं श्रुत्याद्यन्यतमप्रमाणं नास्ति तत्र क्रमनियमो नास्तीत्यर्थः। तदुदाहरणमर्थसंग्रहटीकायामुपन्यस्तमस्माभिः।

षट् प्रमाणानि नाम्ना निर्द्दिशति श्रुत्यर्थेति। उद्दिष्टेषु तेषु प्रथमं श्रुतिं निरूप-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ख्यानि । तत्र क्रमपरवचनं श्रुतिः । तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरञ्च । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् ।

---

यति तत्रेति । क्रमपरवचनं क्रमवाचकः शब्दः । श्रुतिरिति । तथाविधशब्दस्य श्रवणमात्रेणैव क्रमप्रतीतेः । अतएव यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते सा श्रुतिरित्यवगम्यत इत्युक्तं भाष्यकारैः । उक्तलक्षणां श्रुतिं विभजति तच्चेति । केवलेति । पदार्थानुवादेन क्रममात्रविधायकमित्यर्थः । यत्र प्रमाणान्तरेण कर्म्मप्राप्तं क्रमस्त्वप्राप्तस्तत्र क्रमविशिष्टककर्म्मप्रतिपादकवाक्यस्य कर्म्मानुवादेन क्रममात्रविधायकत्वम् । कर्म्मणः प्रमाणान्तरप्राप्तत्वेनाविधेयत्वात् । तद्विशिष्टेति । क्रमविशिष्टपदार्थविधायकमित्यर्थः । यत्र पदार्थस्तत्क्रमश्चाप्राप्तौ तत्र तत्प्रतिपादकवाक्यस्य विशिष्टविधायकत्वम् । क्रमकर्म्मणोर्द्वयोरप्यप्राप्तत्वेन विधेयत्वावश्यकत्वात् ।

आद्यस्योदाहरणमाह तत्रेति । तयोः क्रमपरवचनयोर्मध्ये इत्यर्थः । वेदं कृत्वेति । वेदो नाम दर्भमयं सम्मार्ज्जनसाधनम् । वेदिराहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिरिति माधवाचार्य्याः । तत्र क्त्वाप्रत्ययस्य पूर्व्वकालबोधकतया वेदवेदिकरणयोः पौर्व्वापर्य्यप्रतिपादकत्वेन क्रमपरवचनत्वात् श्रुतित्वम् । एवमथ ततः प्रभृतिपदानामपि । अथास्य क्रमविशिष्टकर्म्मप्रतिपादकस्य केवलक्रमविधायकत्वे किं मानमित्यत आह वेदिकरणादेरिति । वचनान्तरेणेति । दर्शपौर्णमासयोर्हविरधिवासनोत्तरं वेदिकरणादिविधायकवाक्यप्राप्तत्वादित्यर्थः । तथाच वेदिकरणादेः प्रमाणान्तरप्राप्ततया विधातुमशक्यत्वान्न क्रमविशिष्टपदार्थविधायकत्वं किन्तु प्रमाणान्तराप्राप्तस्य क्रमस्यैव विधायकत्वमिति भावः ।

श्रुते द्वितीयप्रकारमुदाहरति वषड़िति । वषट्कर्त्ता होतेति माधवाचार्य्याः । ज्योतिष्टोमे प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणामित्यादिश्रुतिभिर्भक्षणार्थचमधातुनिष्पन्नचमसशब्दबोधितभक्षणेन होत्रादीनां सर्व्वेषामृत्विजां यज्ञशेषभक्षणं समाख्यया-प्राप्तम् । इदानीन्तु वाक्यान्तरेण प्राथम्यविशिष्टं सोमभक्षणं होतुर्विधीयते वषट्कर्त्तुः प्रथमभक्ष इति । ननु होतुः समाख्ययैव भक्षण

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्य-त्वात्।

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। तेषां वचनकल्पन द्वाराक्रमप्रमाणत्वात्। अतएव आश्विनस्य पाठक्रमात् तृतीय-स्थाने ग्रहणप्रसक्तावाश्विनो दशमो गृह्यत इति वचनाद्दशम-स्थाने ग्रहणमित्युक्तम्।

यत्र तु प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः। यथाग्नि

---

प्राप्तेः प्राथम्यस्य चाप्राप्तेस्तदेवात्र विधीयत इतीदमपि क्रममात्रविधायकं वाक्यमस्त्वित्यत आह एकप्रसरेति। मिलितार्थविधायकतेत्यर्थः। तद्भङ्गभयेन तद्बाधरूपदोषभिया।

अयमाशयः। वषट्कर्तुः प्रथमभक्ष इत्यस्य वषट्कर्तृकर्तृकप्राथम्यविशिष्टभक्षणविषयता त्वसम्भवे तदेकदेशवषट्कर्तृकर्तृकभक्षणानुवादेन प्राथम्यमात्रविधाने एकप्रसरताभङ्गेन विशिष्टा नुवाददोषापत्तिः। तथा प्रथमभक्ष इति समस्तपदस्य प्राथम्यविशिष्टभक्षणविधायकत्वसम्भवे यो भक्षः स प्रथम इत्येकांशेन भक्षणमुद्दिश्य अपरांशेन प्राथम्यविधाने मिलितार्थविधायकत्वहान्या वचन व्यक्तिद्वयं सम्भवतीति क्रममात्रस्य विधातुमशक्यत्वमिति। एवमेव तृतीयाध्यायपञ्चमपादे शास्त्र दीपिका।

इदानीं श्रुतेर्बलवत्त्वं साधयति सेयमिति। इतरेति। अर्थादीत्यर्थः। वचन कल्पनम् एतत्कृत्वा एतत्कुर्यादित्येवं श्रौतक्रमबोधकवचनकल्पनम्। तद्द्वारेणेत्यर्थः। अतएव श्रुतेरितरप्रमाणापेक्षया बलवत्त्वादेव।

आश्विनस्य आश्विनग्रहस्य। अयमाशयः। ज्योतिष्टोमे ऐन्द्रवायवादिनामकेषु ग्रहेषु आश्विन नामा ग्रहस्तृतीयस्थाने पठितः। अतः पाठात् तृतीयस्थाने तद्ग्रहणप्रसक्तिः। आश्विनो दशमो गृह्यत इति श्रुत्या तु दशमस्थाने ग्रहणं बोध्यते तत्रोभयोरेव प्रमाणत्वादैक्षिकक्रमप्राप्तौ श्रुतेर्बलवत्प्रमाणतया पाठक्रमं बाधित्वा प्रवृत्तो दशमस्थान एवास्य ग्रहणमिति पञ्चमाध्याय चतुर्थपादे सिद्धान्तितम्।

अर्थक्रमं सूचयति यत्रेति। प्रयोजनवशेनेति। एतेन प्रागुक्तक्रमगणनायामर्थपदं प्रयोजनपरमिति दर्शितम्। क्रमनिर्णयः क्रमावगमः। स तथाविधस्थलेनिर्णीतः क्रमः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

होत्रयवागूपाकयोः। अत्र हि यवग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्व्वमनुष्ठीयते। स चायं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वञ्च स्यात्। नहि होमानन्तरं क्रियमाणस्य किञ्चिद्दृष्टं प्रयोजनमस्ति।

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। यथार्थप्रत्ययञ्च पदार्थाना मनुष्ठानात्।

---

उदाहरति यथेति। अग्निहोत्रयवागुपाकयोरिति। प्रयोजनवशेन क्रमनिर्णय इति शेषः। प्रयोजन वशेन कीदृशः क्रमो निर्णेयः किंवा प्रयोजन मित्येतत्प्रदर्शनाय हेतुमाह अत्र हीति। होमार्थ त्वेन होमप्रयोजनकत्वेन। तत्पाको यवागूपाकः। पूर्व्वम् अग्निहोत्र होमात् प्राक्।

पाठक्रमादर्थक्रमस्य बलवत्त्व साधयति स चायमिति। बलवत्त्वे हेतुमाह यथापाठमिति। पाठक्रममनतिक्रम्य, पाठक्रमानुसारेणेति यावत्। अनुष्ठाने अग्निहोत्रहोमानन्तरं यवागूपाक करणे क्लृप्तप्रयोजनेति। दृष्टप्रयोजनेत्यर्थः। दृष्टप्रयोजनाभावे हेतुमाह नहीति। अयमेव पञ्चमाध्यायचतुर्थपादसिद्धान्तः। तथाचोक्तं शास्त्रदीपिकायाम्।

हुत्वा हि पच्यमानस्य भवेद्द्व्यमनर्थकम्।
पाकश्चैव यवागूश्च तां पक्वा जुहुयात्ततः॥ इति।

पाठक्रममाह पदार्थेति। तत्तत्कर्म्मबोधकेत्यर्थः। तस्मात् तत्तत्कर्म्मबोधकक्रम पठितवाक्यात्। आश्रीयते पौर्व्वापर्य्यबोधकश्रुतिकल्पनया निश्चीयते। तथाच क्रमपठित वाक्यमेव पदार्थक्रमप्रमाणभूतपाठशब्दार्थ इति सिध्यति। वाक्यक्रमेणार्थक्रमकल्पनायां बीज माह येन हीति। अर्थ प्रत्यय मर्थग्रहम्। यथाप्रत्ययं। वाक्यार्थग्रहमनतिक्रम्य। तथाच यथा यथा वाक्यानि पठितानि तथा तथैवाध्ययनात् प्रयोगवेलायां तथा तथैव स्मरणं यथा यथा वाक्यस्मरणं तथा तथैव वाक्यार्थस्मरणं यथा यथा चार्थस्मरणं तथा तथैव कर्म्मानुष्ठानमित्येवं पौर्व्वापर्य्यस्यावश्यम्भावात् श्रुतेरपि तथैव तात्पर्य्यं कल्पनीयमिति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स च पाठो द्विविधः, मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्रा ग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां क्रमाद्यः क्रम आग्नोयति स मन्त्रपाठात्। स चायं मन्त्रपाठो ब्राह्मणपाठा द्बलवान्। अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्ग त्वात्। ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेव इदमेवं कर्त्तव्यमित्येव- मवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते। मन्त्राः

---

पाठं विभजति स चेति। मन्त्रपाठः क्रमपठितमन्त्रः। ब्राह्मणपाठः क्रमपठितब्राह्मणम्। मन्त्रेतरवेदभागस्य ब्राह्मणरूपतया तत्पदेन विधेरर्थवादादेर्वा कर्म्मप्रतिपादकवाक्यमात्रस्य ग्रहणम्। मन्त्रपाठस्योदाहरणमाह तत्रेति। आग्नेयेति। आग्नेयाष्टाकपालाग्नीषोमीय-यागयोरित्यर्थः। तत्तद्याज्यानुवाक्यानामिति। याज्या अनुवाक्या च ऋग्विशेषः। यः क्रम इति। प्रथममाग्नेयानुष्ठानमनन्तरमग्नीषोमीयानुष्ठानमित्यर्थः। मन्त्रपाठक्रमादिति। मन्त्रकाण्डे प्रथममाग्नेयमन्त्रस्य अनन्तरमग्नीषोमीयमन्त्रस्य पाठादित्यर्थः।

तथाहि होत्रकाण्डे आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् अग्निर्मूर्द्धेत्यादिके आग्नेय्यौ याज्यानुवाक्ये ऋचावाम्नाते। ततः प्रजापते नत्वदेतानीत्यादिके प्राजापत्ये ऋचौ। ततोऽग्नीषोमास वेदसी इत्यादिके अग्नीषोमीये ऋचावाम्नाते। एव माध्वर्य्यवे काण्डे अग्नये जुष्टं निर्वपामि अग्नीषोमाभ्यामित्याग्नेयमन्त्रः पूर्व्वमाम्नातः। यजमानकाण्डेऽपि अहं देवजज्यया-न्नादो भूयासमित्याग्नेयमन्त्रः पश्चाच्च अहं देवयज्यया हवद्दा भूयासमित्यग्नीषोमीयमन्त्र आम्नायते। अत एतेषु आग्नेयाग्नीषोमीयमन्त्राणां क्रमेण पाठदर्शनात् तयोर्यागयोरपि क्रमकल्पना सिध्यति। एवमेव पञ्चमाध्यायप्रथमपादे न्यायमाला।

मन्त्रपाठस्य बलीयस्त्वमाह स चायमिति। तत्र हेतुमाह अनुष्ठान इति। अन्तरङ्गत्वात् प्रयोगसन्निहितत्वात्। एतेन ब्राह्मणवाक्यस्य बहिरङ्गत्वं प्रतिपादितम्। तत्रादौ ब्राह्मणवाक्यस्य बहिरङ्गत्वं युक्त्यावधारयति ब्राह्मणवाक्यं हीति। प्रयोगाद्बहिरिति। अनुष्ठानात् प्रागित्यर्थः। एवकारेण प्रयोगदशायां नास्तास्य व्यापार इति दर्शितम्। अवबोध्य ज्ञानमुत्पाद्य। कृतार्थं निष्पादितस्वप्रयोजनम्। तथाच विधिवाक्यस्य. कर्त्तव्यताज्ञानोत्पादनैकप्रयोजनकतया पुरुषस्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वच्यामः। तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादिति बलवान्। अतएवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येव क्रम इत्युक्तम्।

---

उत्पादिते सति धर्मानुष्ठानाय प्रवृत्तिर्भवतीत्यनुष्ठानात् प्रागेव विधेः सिद्धप्रयोजनतया विरामो विरतस्य चानुष्ठानवेलायां व्यापाराभावः सुगम एव। अतएवोक्तं शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इतीत्याशयः।

इदानीं मन्त्रस्यान्तरङ्गत्वे युक्तिमाह मन्त्राः पुनरिति। अनन्येति। अर्थस्मरणेतरप्रयोजनरहिता इत्यर्थः। प्रयोगेति। अनुष्ठानवेलायामर्थस्मृतिमात्रजनका इत्यर्थः। तेन अर्थस्मृतिजनकत्वेन। स्मरणक्रमेति। मन्त्रार्थस्मरणक्रमेत्यर्थः। तत्क्रमस्य अर्थस्मरणक्रमस्य। अन्तरङ्गः प्रयोगसन्निहितः। इतरस्मात् ब्राह्मणपाठात्। तथाचोक्तम्।

लभ्यतेऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह।

अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः॥ इति।

मन्त्रपाठक्रमस्य ब्राह्मणपाठात्प्रबलवत्त्वोदाहरणमाह अतएवेति। ब्राह्मणपाठादिति। तैत्तिरीयब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके अग्नीषोमीययागः समाम्नातः। ताभ्यामग्नीषोमीयमेकादशकपालं प्रायच्छदिति। आग्नेययागस्तु तदीयषष्ठप्रपाठके आम्नातः। यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्यां चाच्युतो भवतीति। तस्माद्ब्राह्मणपाठक्रमादग्नीषोमीयस्यैव प्रथमानुष्ठेयत्वमस्तु, मन्त्रब्राह्मणपाठयोः पाठक्रमत्वाविशेषादित्यत्र सिद्धान्तः। मन्त्रपाठक्रमस्यान्तरङ्गत्वेन बलवत्तया ब्राह्मणपाठं बाधित्वा प्रवृत्तत्वेन प्रथममाग्नेयानुष्ठानं पश्चाच्चाग्नीषोमीयस्यानुष्ठानमिति। उक्तं न्यायमालायां पञ्चमाध्यायप्रथमपादे इति शेषः। शास्त्रदीपिकायामप्युक्तं यथा।

नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत्।

स्मारकक्रमतश्चापि स्मृतीनां क्रमं इष्यते॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधायक-वाक्यक्रमादयः क्रमः स ब्राह्मणपाठक्रमः । अत्र च यद्यपि ब्राह्मणवाक्यानि अर्थं विधाय कृतार्थानि तथापि प्रयाजानां स्मारकान्तरस्याभावात् तान्येव स्मारकत्वेन स्वीक्रियन्ते । तथाच येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीतियुक्तं तेनैव क्रमेण तेषामनुष्ठानमिति । तस्मिद्धं प्रयाजानां ब्राह्मण पाठक्रमात् क्रम इति ।

ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृता-र्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते । प्रयोगसमवेतार्थ-स्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात् । न च तेषां देवतास्मारकत्वात् कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियते

---

मन्त्राणामन्यकार्यत्वात् भूत्यर्थो विषयः पुनः ।
विधिनैव कृतार्थत्वात्तावश्यं स्मारका मताः ॥ इति ।

ब्राह्मणपाठोदाहरणमाह प्रयाजानामिति । विधायकेति । क्रमपठितविधिवाक्यादित्यर्थः । ननु ब्राह्मणवाक्यानां प्रयोगप्राक्काल एव कर्त्तव्यताबोधसम्पादनोपक्षीणत्वेन बहिरङ्गत्वात्प्रानुष्ठान क्रमप्रामाण्यसम्भव इत्याशङ्क्य निराकरोति अत्रेति । अनयोः क्रमयोर्मध्ये इत्यर्थः । स्मारकान्तरस्य क्रमबोधकप्रमाणान्तरस्य । तान्येव ब्राह्मणवाक्यान्येव । स्मारकत्वेन स्वार्थबोधजन्यसंस्कार-द्वारा स्मरणोत्पादकत्वेन । तथाच मन्त्रब्राह्मणयोः क्रमकर्त्तव्यताज्ञानजनकत्वाविशेषेऽपि संस्काराद्वारकत्वतद्वारकत्वभेदात् मन्त्रावली बोद्धव्ये । एतदेवाह तथा चेति । अर्थस्मरणं स्वार्थ ज्ञानजन्य संस्कारद्वारेति शेषः ।

ननु प्रयाजेष्वपि प्रयोगसमवेतार्थस्मारका मन्त्राः सन्ति, तत्कथं प्रयाजानां स्मारकान्तरा भावात् ब्राह्मणवाक्यानां परम्परया स्मारकत्वं स्वीक्रियते इत्याशङ्कते नन्वित्यादिना तत् कथं प्रया जेषु ब्राह्मणपाठक्रमात् क्रम इत्युच्यत इत्यन्तेन । आग्नेयादिष्विवेति । आग्नेयाग्नीषोमीयादौ यथा प्रयोगसमवेतार्थस्मारकायाज्या मन्त्राः सन्ति तथा समिदादियागेष्वपि मन्त्रविशेषाः सन्तीत्यर्थः । देवता

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इति वाच्यम्। आग्नेयादिष्वपि कर्म्मस्मारकत्वेन तत्स्वीकारापत्तेः।

न चेष्टापत्तिः, तथा सति ब्राह्मणपाठान्मन्त्रपाटस्य बलीयस्त्वं न स्यात्। तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्व मितरस्य तदस्मारकत्वं हेतुः। यदि च कर्म्मस्मारकत्वं ब्राह्मण-वाक्यस्य स्वीक्रियते तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्त-रङ्गत्वादङ्गभूतदेवतास्मारकत्वेन च मन्त्रानां वहिरङ्गत्वान्मन्त्र-पाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात्। तथाच "मन्त्रतस्तु विरोधे स्या"दिति पाञ्चमिकाधिकरणविरोधः। तत्र हि ब्राह्मण-

---

स्मारकत्वात् देवतामात्रबोधकत्वात् कर्म्मक्रमस्मारकत्वाभावादिति यावत्। ब्राह्मणवाक्यमिति। तथाच याज्यामन्त्राणां कर्म्मस्मारकत्वाभावेन ब्राह्मणवाक्यमेव कर्म्मस्मारकत्वेनाङ्गीक्रियत इति भावः। तत्स्वीकारेति। ब्राह्मणवाक्यस्वीकारापत्तेरित्यर्थः। तथाच तथा सति आग्नेया-दिष्वपि मन्त्राणां देवतामात्रस्मारकतया ब्राह्मणवाक्यस्यैव कर्म्मस्मारकत्वेनाङ्गीकारापत्तिरिति भावः।

इष्टापत्तिं निराकरोति न चेति। तथा सतीति। आग्नेयादिष्वपि ब्राह्मणवाक्यस्यैव कर्म्मक्रमबोधकत्वाङ्गीकारे सतीत्यर्थः। बलीयस्त्वं न स्यादिति। सर्व्वत्रैवेति शेषः। नन्वाग्नेयाग्नीषोमीययोः ब्राह्मणपाठबलीयस्त्वाभ्युपगमे कथं मन्त्रपाठस्य बलीयस्त्वं सुघटं, तदितरत्र सर्व्वत्रैव मन्त्रपाठस्य बलीयस्त्वं स्यादित्यत आह तद्बलीयस्त्वे हीति। मन्त्रपाठबलीयस्त्वे इत्यर्थः। इतरस्य ब्राह्मणपाठस्य। हेतुरिति। तथाच मन्मते मन्त्राणां देवतामात्रस्मार-कत्वेन प्रयोगसमवेतार्थस्मारकत्वाभावान्न कुत्रापि तथाविधहेतोः सम्भव इति भावः। तथा ब्राह्मणवाक्यस्य कर्म्मस्मारकत्वाङ्गीकारे तस्य तदस्मारकत्वासिद्ध्या आस्तां दुर्व्वलत्वं प्रत्युत प्रधानस्मारकत्वेन तस्यैव बलवत्त्वं मन्त्रपाठस्य त्वङ्गभूतदेवतास्मारकत्वेन दुर्व्वलत्वमेव सर्व्वत्र स्यान्न बलवत्त्वमित्याह यदि चेति। ब्राह्मणपाठस्यैव यावद्ब्राह्मणपाठस्य।

भवतु ब्राह्मणपाठस्यैव बलवत्त्वं को दोष इत्यत सिद्धान्तसूत्रविरोधं दोषमाह तथाचेति। तथा सतीत्यर्थः। मन्त्रतस्त्विति। "मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्ति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम् ।

अथाग्नेयादिषु याज्या मन्त्रा एव देवताप्रकाशनद्वारा कर्म्मप्रकाशकाः । त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति चेत्, तुल्यं प्रयाजेषु । तत्रापि याज्या मन्त्रा देवताप्रकाशकाः । प्रयाजेषु देवताया मान्त्रवर्णिकत्वात् । तथाच प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्म्मप्रकाशकत्वात् तत्क्रमो मन्त्रपाठादेव स्यान्न तु ब्राह्मणपाठक्रमात् ।

न च मन्त्रपाठस्यान्याहृष्टत्वात् प्रयाजक्रमो ब्राह्मणपाठ-

---

देशः स" इति पञ्चमाध्यायप्रथमपादसूत्रम् । अस्यार्थः । विरोधे ब्राह्मणपाठेन सह विरोधे मन्त्रतः क्रमो ग्राह्यः स्यात् । मन्त्रपाठो बलीयानित्यर्थः । कुतः प्रयोगरूपसामर्थ्यात् । प्रयोगाय कर्म्मानुष्ठानाय मन्त्ररूपस्य मन्त्रघटकपदसमुदायस्य सामर्थ्यात् । मन्त्रघटकपदस्य कर्म्मानुष्ठानबोधकत्वादिति तात्पर्य्यम् । ननु ब्राह्मणपाठस्यापि तथात्वमस्तीत्यत आह तद्धादिति । मन्त्रपाठस्य बलीयस्त्वात् स ब्राह्मणपाठ उत्पत्तिदेशः कर्म्मोत्पत्तिविधायक इति ।

तत्र हि तदधिकरणे हि । आदावाग्नेयानुष्ठानमिति । एतेन आग्नेयाग्नीषोमीययोरपि ब्राह्मणपाठबलीयस्त्वं नेष्टं भवितुमर्हतीति दर्शितम् । उक्तमिति भाष्यकारादिभिरिति शेषः । नन्वाग्नेयादिषु मन्त्राणां न केवलं देवतास्मारकत्वं, देवताप्रतिपादनमुखेन कर्म्मणोऽपि प्रकाशनात् । वेदनीययागोद्देश्यस्य देवतात्वेन देवताप्रकाशनादेव तदुद्देश्यकद्रव्यविशिष्टयागप्रकाशस्यापि जातत्वात् ।

अतो देवताकर्म्मोभयप्रकाशकत्वेन तत्र मन्त्रक्रमस्य बलीयस्त्वं न पुनः केवलदेवताप्रकाशकत्वेनेति शङ्कते अथेति । तुल्यमिति । प्रयाजमन्त्राणामपि निरुक्तरूपेण उभयप्रकाशकत्वात्तत्रापि मन्त्रक्रमस्यैवादरः स्यादिति भावः ।

एतदेव व्यक्तमाह तत्रापीति । प्रयाजमन्त्राणां देवताप्रकाशकत्वे हेतुमाह प्रयाजेष्वपीति । मान्त्रवर्णिकत्वात् मन्त्रवर्णावगतत्वेन सिद्धान्तनात् । तथा सति भवदुक्तरीत्या कर्म्मप्रकाशकत्वमप्यवश्यम्भावीत्याह तथाचेति ।

प्रयाजेषु मन्त्रपाठादरणे ब्राह्मणपाठादन्याहृष्टक्रमप्रसङ्ग इत्यापत्तिं परिहरति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्रमादेवेति वाच्यम्। अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात्। मन्त्रक्रमस्य बलीयस्त्वात्। अभ्यासाधिकरणे च वार्त्तिककृता क्रमविनियुक्तैरेवंलिङ्गकमन्त्रवर्णैरित्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः। नवमे तन्त्ररत्ने समिधोऽग्न आज्यस्य व्यन्त्वित्यादिक्रमप्रकरणप्राप्तैर्मन्त्रैर्देवतागुणत्वेन समर्प्यन्त इत्युक्तम्।

मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात्। तत्कथं

---

न चेति। तत्रेष्टापत्तिरेवेत्याह अन्यादृशत्वे इति। इदमापाततः वस्तुतः प्रयाजेषु मन्त्रक्रमस्यान्यादृशत्वं नास्तीति वक्ष्यते।

अत्र प्राचीनसंवादमाह अभ्यासेति। वार्त्तिककृता भाष्यव्याख्यानरूपवार्त्तिककारेण कुमारिलभट्टेन। क्रमविनियुक्तया यथासङ्ख्यक्रमविनियोगेन। एवं लिङ्गकेति। समिदादिप्रकाशकेत्यर्थः। याज्यामन्त्राणां समिधोऽग्न आज्यस्य व्यन्त्वित्यादिसमिदादिदेवताप्रकाशकमन्त्राणाम्। क्रमविनियोगः क्रमेण विनियोगः। संवादान्तरमाह नवमे चेति। नवमाध्यायद्वितीयपादे इत्यर्थः। तन्त्ररत्ने पार्थसारथिमिश्रकृतभाष्यटीकायाम्। भाष्यकृता तत्पादीयग्रीपाधिकरणे "समिधो यजति, तनूनपातं यजति इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति प्रयाजेषु समिदादिशब्दा यागनामधेयान्येव न देवतावाचका" इति सिद्धान्तयित्वा अभिहितम् "यदा न देवतोपदेशस्तदा मान्त्रवर्णिकी देवताविधिः। तदा चोपादेयत्वादेवंशब्दिका देवताश्चोद्यन्ते" इति। अत्र एवंशब्दिकाः समिदादिनामिकाः। देवताश्चोद्यन्ते मन्त्रवर्णैर्देवता विधीयन्ते इत्यर्थः। एतदेव तन्त्ररत्नकृता समिधोऽग्न आज्यस्य व्यन्त्वित्यादिक्रमप्रकरणप्राप्तैर्मन्त्रवर्णैर्देवता गुणत्वेन विधीयन्त इति व्याख्यातम्।

इदानीं मन्त्रक्रमस्य नान्यादृशक्रमत्वमित्याह मन्त्राणामिति। तदनुपपत्तिः, वार्त्तिके क्रमविनियुक्तैरित्यस्य तन्त्ररत्ने च क्रमप्रकरणप्राप्तैरित्यस्य चानुपपत्तिः। तथाच प्रयाजपञ्चकस्य क्रमेण यथा यथा पाठस्तत्प्रकरणे मन्त्रपञ्चकस्यापि तथा तथैव क्रमेण पाठ इति यथासङ्ख्यक्रमेण प्रथममन्त्रस्य प्रथमयागे द्वितीयादिमन्त्रस्य द्वितीयादियागे विनियोगो लभ्यते। तत्र प्रथममन्त्रस्य समिद्रूपदेवताप्रकाशकत्वात् प्रथमयागस्य समिद्याग इति नामधेयम्। एवमन्येषामपीति मन्त्रब्राह्मणक्रमयोरनन्यादृशत्वमिति भावः। दृढीकृतं पूर्व्वपक्षमिदानीमुपसंहरति तत्कथमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रयाजेषु ब्राह्मणपाठक्रमात् क्रम इत्युच्यते । सत्यमेतत्, तथापि यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णीं विहितेषु कर्मसु, तेषां क्रमो ब्राह्मणपाठक्रमात् । तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणन्तु कृत्वा चिन्तया । तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् ।

यथाहुरर्थवादचरणे वार्त्तिककाराः । "प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि, स्वरूपसंस्पर्शे सत्यपि प्रयोजकतां न प्रतिपद्यन्ते" इति । तस्मात् समन्त्रककर्म्मणां क्रमो मन्त्रपाठात्, अमन्त्रककर्म्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक् ।

---

उत्तरयति सत्यमेतदित्यादिना । यत्र येषु कर्मसु । अर्थस्मारकमन्त्रासद्भावः क्वचित्त्यत्राह यथेति । तूष्णीं विहितेष्विति । उपलक्षणमेतत् हुं फडादिमन्त्रकरणकेष्वपीति बोध्यम् । तर्हि भाष्यादौ ब्राह्मणपाठक्रमप्रदर्शनाय प्रयाजोदाहरणं कथं सङ्गच्छत इत्यत आह प्रयाजोदाहरणन्त्विति । कृत्वा चिन्तया, निरापत्तिकतया । मन्त्रब्राह्मणयोरन्याद्यक्रमबोधकत्वेनापत्तिसिद्धस्यासम्भवादिति भावः । वस्तुतस्तत्र प्रयोगसमवेतार्थस्मारकत्वं मन्त्राणामेव । ब्राह्मणानां तदसम्भवादित्याह तत्रेति ।

अत्र वार्त्तिककारसंवादमाह यथाहुरिति । अर्थवादचरणे प्रथमाध्याय द्वितीयपादे मन्त्रलिङ्गाधिकरणे । समर्प्य प्रकाश्य । चरितार्थानि प्रकृतप्रयोजनानि । स्वरूपसंस्पर्शे कर्त्तव्यताबोधनद्वारेण प्रयाजादियागसम्बन्धे । प्रयोज्यतां प्रयाजादियागप्रयोज्यताम्, प्रयाजादियागार्थतामिति यावत् । तथाच यदर्थं हि क्रियन्ते धर्म्मास्तत्प्रयोजकम् । यस्मिन् सति क्रियन्ते तन्निमित्तमिति नवमाध्यायप्रथमाधिकरणे वृतीयवर्णके भाष्योक्तेर्वाक्यानामनुष्ठानार्थत्वे अनुष्ठानप्रयोज्यतापि सम्भवेत् । परन्त्वत्र व्यभिचारादनुष्ठानार्थता नास्ति, कुतस्तत्प्रयोज्यतासम्भव इति भावः । ननु कोऽयं व्यभिचार इति चेत् उच्यते, वाक्यस्य अर्थबोधनार्थत्वमेव, वाक्यश्रवणे अर्थावगमावश्यम्भावात् । अतोऽव्यभिचारादर्थबोधनप्रयोज्यत्वमेव । अर्थबोधनद्वारेणानुष्ठानार्थत्वन्तु न सार्व्वत्रिकम् । स्वर्गकामोऽश्वमेधेन यजेतेत्यादिवाक्यानामर्थावगमे जातेऽप्यश्रद्धादिभिः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन् देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमित-रयोश्च पश्चात्। अयं यः क्रमः स स्थानक्रमः।

स्थानं नामोपस्थितिः। यस्य हि देशेऽनुष्ठीयन्ते तत्पूर्व्वतने पदार्थेकृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनु-ष्ठानम्। अतएव साद्यस्के अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्त्तव्ये आदौ सवनीयपशोरनुष्ठानम्। तस्मिन् देशे आश्विनग्रहग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः। इतर योस्तु पश्चात्।

---

स्वदर्थानुष्ठानात्। एवञ्चादेव व्यभिचाराद्यानुष्ठानप्रयोज्यता वाक्यानामिति। स्वसिद्धान्त मुपसंहरति तस्मादिति।

क्रमप्राप्तं स्थानक्रमं निरूपयति प्रकृताविति। नानादेशानामिति बहुव्रीहिः। विभिन्न कालकर्त्तव्यत्वेन विहितानामित्यर्थः। वचनात् विशेषवचनात्। देशे अवसरे। अनुष्ठीयन्त इति। प्रकृतौ विभिन्नकालकर्त्तव्यत्वेन विहिताः पदार्था इति शेषः। स स्थानक्रम इति। एतेन स्थानक्रमस्वरूपं दर्शितम्।

इदानीं तल्लक्षणमाह स्थानं नामेति। उपस्थितिः कर्त्तव्यत्वेन ज्ञानम्। यस्य देशे यदवसरे। अनुष्ठीयन्ते सर्व्वाणि कर्म्माणीति शेषः। तत्पूर्व्वतने तदव्यवहितपूर्व्वकर्म्मणि। स एव यस्यावसरे कर्म्मान्तरमपि क्रियते स एव पदार्थः। एवकारेण तदवसरकर्त्तव्यपदार्थान्तरं व्यावर्त्त्यते। उपस्थितः कर्त्तव्यत्वेन ज्ञानविषयः। युक्तमिति। विकृतौ तदवसरे कर्म्मा-न्तरस्य विहितत्वेऽपि प्राकृतप्रथाल्क्ष्य। तस्यैव तदानीमनुष्ठेयत्वेन निश्चयसम्भवादिति भावः। अतएव प्रकृतौ यस्मिन्नवसरे यत्कर्म्मानुष्ठाननियमस्तस्यैव तत्पूर्व्वतनकर्म्मानुष्ठानानन्तरमुपस्थितत्वा देव। साद्यस्कः सोमयागविशेष इति वक्ष्यते। अग्नीषोमीयादयः पशुयागविशेषाः। सवनीय देशे सवनीयानुष्ठानावसरे। सहानुष्ठाने अव्यवधानेनोत्तरोत्तरानुष्ठाने। आदौ प्रथमतः। तस्मिन् देशे सवनीययागप्राक्तनसवनीययागोत्तरकालीनयोः कर्म्मणोरन्तराले। आश्विनसञ्ज्ञका

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा हि ज्योतिष्टोमे त्रयः पशुयागाः, अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, अनुबन्ध्यस्त्वन्ते । साद्यस्को नाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोम-विकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषाञ्च तत्र साहित्यं श्रुतम्, सह पशूनालभेतेति । तच्च साहित्यं सवनीय देशे । तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च ।

---

ग्रहविशेषः । प्रथममुपस्थितेरिति । प्रकृतावाश्विनग्रहणानन्तरं तस्यैव कर्त्तव्यतानियमा-दित्यर्थः । इतरयोः अग्नीषोमीयानुबन्ध्ययोः । पश्चात् सवनीयानुष्ठानानन्तरम् ।

एतस्योदाहरणस्याव्यक्ततया बुद्ध्यारोहणयोग्यतामुत्पादयति तथा हीति । पशुयागांस्त्रीनाह अग्नीषोमीय इत्यादि । भिन्नदेशा ज्योतिष्टोमे विभिन्नकालकर्त्तव्याः । कालभेदं दर्शयति अग्नीषोमीय इति । औपवसथ्ये ज्योतिष्टोमयागात् पूर्व्वस्मिन्नहनि । न्यायमालाप्येवमेवोक्तवती सुत्याकाले सुत्यादिने । प्रातःसवने आश्विनग्रहणादूर्द्धमिति माधवाचार्य्याः । अन्ते अवभृथादूर्द्धम् । साद्यस्कं विवृणोति साद्यस्को नामेति । अव्यक्तत्वादव्यक्तदेवताकत्वात् । ज्योतिष्टोमविकार इति । अव्यक्तयागमात्रस्य ज्योतिष्टोमविकारत्वनियमादिति भावः । ते अग्नीषोमीयसवनीयानुबन्ध्याः । चोदकप्राप्ताः प्रकृतिवद्विकृतिरित्यतिदेशप्राप्ताः । तेषा-मग्नीषोमीयादीनाम् । तत्र साद्यस्के । साहित्यम् एकस्मिन्नवसरे कर्त्तव्यत्वम् । श्रुतं श्रुतिबोधितम् । श्रुतिमाह सहेति । आलभेत आलभ्ययजेत । अत्र सहेत्युपादानात् वैकृतविशेषेण प्राकृतदिनभेदस्य बाधः । शरमयबर्हिषा कुशमयबर्हिर्बाधवत् ।

ननु विकृतौ सहालम्भनमौपवसथ्ये अहनि सुत्यादिने अवभृथादूर्द्धं वेत्यत्राह तच्चेति । सवनीयदेशे सुत्याकाले सवनीयानुष्ठानावसरे । विनिगमनामाह तस्येति । सवनीयदेशस्येत्यर्थः । प्रधानेति । प्रधानस्य यागस्य सान्निध्यादित्यर्थः । प्रधानद्रव्यस्य सोमस्य सान्निध्याच्च । तथाच प्रकृतौ कालविशेषोपदेशेऽपि विकृतौ कालविशेषानिर्द्देशेन यौगपद्यमात्रविधानादनिर्द्दिष्ट-कालाङ्गस्य प्रधानकालकर्त्तव्यताया औचित्येन यागदिन एव कर्त्तव्यता न तु यागात् पूर्व्वदिने यागान्ते वेति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययो: स्वस्वस्थानातिक्रममात्रं सम्भवति। अग्नीषोमीयदेशे ह्यनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम्। अनुबन्ध्यस्य तु स्वस्थानातिक्रम: सवनीयस्थानातिक्रमश्च स्यात्। एवमनुबन्ध्य-देशे अग्नीषोमीयस्य द्रष्टव्य:।

तथाच सवनीयस्य देशे सर्व्वेषामनुष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानम्। आश्विनग्रहग्रहणानन्तरं हि सवनीयदेश:। प्रकृतौ आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोती-

---

ननु सवनीयस्थाने त्रयाणामनुष्ठाने अग्नीषोमीयानुबन्ध्ययो: स्वस्वस्थानातिक्रम: स्यादित्यत्र स्थानान्तरेऽपि त्रयाणामनुष्ठाने स्थानातिक्रमतौल्यमित्याह स्थानातिक्रमेति। स्थानातिक्रम-साम्यं हेतूपन्यासमुखेन विवृणोति सवनीयदेश इति। यागदिने इत्यर्थ:। स्वस्वेति। अग्नीषोमीयस्थानस्य औपवसथ्याहरूपस्यातिक्रम:। अनुबन्ध्यास्थानस्य अवभृथानन्तरकालस्याति-क्रमश्चेत्यर्थ:। मात्रपदेन तयोरेकतरस्यापि न स्थानद्वयातिक्रमसम्भव इति दर्शितम्।

औपवसथ्याहरूपाग्नीषोमीयदेशे त्रयाणामनुष्ठाने तु एकस्य स्वस्थानातिक्रममात्रमन्यस्य तु स्थानद्वयातिक्रम इत्याह अग्नीषोमीयदेश इति। अनुष्ठाने यागत्रयानुष्ठाने। सवनीय-स्थानातिक्रमश्चेति। तृतीयस्यानुबन्ध्यस्य स्वस्थानं सवनीयरूपद्वितीयस्थानस्थानतिक्रम्य प्रथमस्थान-प्राप्तेरसम्भवादिति भाव:। अनुबन्ध्यदेशे इति। त्रयाणामनुष्ठाने क्रियमाणे इति शेष:। अग्नीषोमीयस्येति।. प्रथमस्याग्नीषोमीयस्य स्वस्थानातिक्रम: सवनीयरूपद्वितीयस्थानाति-क्रमश्चेत्यर्थ:।

आदौ सवनीयपशोरनुष्ठानमितरयोस्तु पश्चादिति यदुक्तं तदिदानीं प्रमाणप्रदर्शनपूर्व्वकं व्यञ्जयति तथाचेति। सवनीयस्थान एव त्रयाणामनुष्ठाने सतीत्यर्थ:। आश्विनग्रहणानन्तर-मिति। आश्विननामकग्रहग्रहणोत्तरकाल इत्यर्थ:। तत्र प्रमाणमाह प्रकृताविति। आश्विनसन्नामा ग्रहविशेष:। त्रिवृता त्रिगुणरज्वा। यूपं पशुबन्धनार्थदारुविशेषम्। परिवीय वेष्टयित्वा। उपाकरोति मन्त्रेणाभिमन्त्रयति। तस्य सवनीययागस्य। विहितत्वादिति। सवनीयपशूपाकरणादौतिकर्त्तव्यताविधानेन तदालम्भनपूर्व्वकयागस्यापि विहितत्वादित्यर्थ:।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्याश्विनग्रहणानन्तरं तस्य विहितत्वात् । तथाच साद्यस्क्रेऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात् प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम् ।

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । येन क्रमेण प्रधानानि क्रियन्ते तेनैव क्रमेण तेषामङ्गान्यनुष्ठीयन्ते चेत्तदा सर्व्वेषामङ्गानां स्वप्रधानैस्तुल्यं व्यवधानं भवति ।

व्युत्क्रमेण त्वनुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यव-

---

प्रथममुपस्थितः आदौ कर्त्तव्यतया निर्णयविषयः । विकृते: प्रकृतिधर्म्मग्राहित्वादिति भावः । इतरयोः अग्नीषोमीयानुबन्ध्ययोः । उक्तं पञ्चमाध्यायप्रथमपादे सिद्धान्तितम् ।

अग्नीषोमीयानुबन्ध्ययोः क्रमस्तु बाधकाभावात् प्राकृतपाठादेव द्वितीयमग्नीषोमीयानुष्ठानं तृतीयमनुबन्ध्यानुष्ठानमित्येवंरूपमिति तत्रैवोक्तम् ।

मुख्यक्रममाह प्रधानक्रमेणेति । यत्रानेकयाग एकस्मैकप्रयोगान्तर्गतत्वेन विहितस्तथा तत्तद्यागीयतत्तद्धविःसम्बन्धिकर्म्म च विहितं तत्रेदमुच्यते । तथाच तत्तत्प्रधानं येन क्रमेणानुष्ठेयत्वेन विहितं हविःसम्बन्धिकर्म्म च तेनैव क्रमेणानुष्ठेयमित्यर्थः । एतदेव व्यनक्ति येनेति । तेषामङ्गानि तत्तद्यागीयहविःसम्बन्धिकर्म्माणि । तुल्यं व्यवधानमिति । एकमात्रकर्म्मान्तरितत्वरूपं व्यवधानं तुल्यमित्यर्थः ।

तथाहि आदौ प्रथमानुष्ठेयप्रधानयागीयहविःसम्बन्धिकर्म्म कृत्वा अनन्तरं पश्चादनुष्ठेययागीयहविःसम्बन्धिकर्म्म समाप्य यदि प्रथमानुष्ठेयप्रधानयागं पश्चादनुष्ठेयप्रधानयागञ्च क्रमेण समापयेत् तदा प्रथमानुष्ठेयप्रधानयागीयहविःसम्बन्धिकर्म्मणः स्वप्रधानेन प्रथमानुष्ठेययागेन एकमात्रकर्म्मणैव व्यवधानम् । तथा पश्चादनुष्ठेययागीयहविःसम्बन्धिकर्म्मणश्च स्वप्रधानेन पश्चादनुष्ठेययागेन एकमात्रकर्म्मव्यवधानमित्युभयत्रैव यागे अङ्गाङ्गिनोस्तुल्यं व्यवधानमिति ।

व्युत्क्रमेणत्विति । पश्चादनुष्ठेययागीयहविःसम्बन्धिकर्म्मणः प्रागनुष्ठानं प्रथमानुष्ठेययागीयहविःसम्बन्धिकर्म्मणश्च पश्चादनुष्ठानं कृत्वा प्रथमद्वितीययागयोः क्रमेणानुष्ठाने इत्यर्थः । केषाञ्चिदङ्गानां प्रथमानुष्ठेययागीयहविःसम्बन्धिकर्म्मणाम् । अत्यन्तमव्यवधानं व्यवधानलेशस्याप्यभावः । तद्धविःसम्बन्धिकर्म्मानुष्ठानानन्तरमेव तदीयप्रधानयागानुष्ठानादिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

धानमनेनैषामत्यन्तव्यवधानं स्यात्। तच्चायुक्तं प्रयोगविध्यवगत-साहित्यबाधापत्तेः। अतः प्रधानक्रमोऽपि अङ्गक्रमे हेतुः।

अतएव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः। आग्नेययागेन्द्रयागयोः पौर्व्वापर्य्यात्। अत्र हि द्वयो-रभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितत्वव्यव-धानं भवति। आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रयागहविरभि-

---

कीर्षाश्चेदिति। पश्चादनुष्ठेययागीयहविःसम्बन्धिकर्म्मणामित्यर्थः। अत्यन्तव्यवधानमिति। पश्चादनुष्ठेययागीयहविस्सम्बन्धिकर्म्मपश्चादनुष्ठेययागयोरङ्गाङ्गिनोरन्तराले प्रथमानुष्ठेययागीय-हविःसम्बन्धिकर्म्मप्रथमानुष्ठेययागयोः पातावश्यम्भावादिति भावः। इष्टापत्तिं परिहरति तच्चायुक्तमिति। अयुक्तत्वे हेतुमाह प्रयोगेति। साहित्यबाधापत्तेरिति। व्यवहितयोः साहित्यव्यवहाराभावादिति भावः। प्रधानक्रमेण योऽङ्गानां क्रम इत्यनेन अङ्गक्रमम् प्रति प्रधानक्रमस्य यद्धेतुत्वमुक्तं तदुक्तयुक्तिमूलकमित्युपसंहरति अत इति। एतद्युक्तिबला-दित्यर्थः।

उदाहरति अतएवेति। प्रधानक्रमस्याङ्गक्रमनियामकत्वादेवेत्यर्थः। प्रयाजशेषेणेति। प्रयाजयागावशिष्टेनाज्येनेत्यर्थः। अभिघारणं धारया सिक्त्वा मिश्रणम्। आग्नेयहविष इति। अयमाशयः। दर्शे आग्नेययाग ऐन्द्रयागश्च एकप्रयोगरूपेण विहितः। तत्राग्नेयः प्रथम-कर्त्तव्यतया ऐन्द्रस्तूत्तरकालकर्त्तव्यतया मन्त्रपाठबलात् प्रतीतः। आग्नेययागे अष्टकपाल-संस्कृतं हविः। ऐन्द्रे तु दधीत्याम्नातम्। तत्र वत्सापाकरणदोहनादय ऐन्द्रहविषो धर्म्माः प्रथमं पठिताः। पश्चादाग्नेयहविषो धर्म्मा निर्व्वापावघातादयः पठिताः। ते तथैवानुष्ठेयाः पाठक्रमात्। परन्तु प्रयाजशेषेणाभिघारणं स्विष्टकृदवदानं वेदामासादनञ्चेत्येते धर्म्मा उभयत्रैव हविषि कर्त्तव्याः। केन क्रमेण कर्त्तव्या इत्यत्र न किञ्चिदाम्नानमस्तीत्यतोऽत्र नियामकान्तराभावात् प्रधानयोराग्नेयैन्द्रयागयोः पौर्व्वापर्य्यादेव तेषामङ्गानां पौर्व्वापर्य्य-मवधार्य्यमित्याग्नेयहविषः प्रथममभिघारणं पश्चाच्चैन्द्रस्य दध्न इति।

मुख्यक्रमानुसरणे द्वयोरेव एकान्तरितत्वं वैपरीत्ये तु एकतरस्य द्व्यन्तरितत्वमिति व्यवधानलाघवरूपां प्रागुक्तां मुख्यक्रमानुसरणहेतुभूतयुक्तिमत्र सङ्गमयति अत्र हीति। आग्नेयेन्द्रयागयोरित्यर्थः। एकान्तरितत्वरूपं स्वरूपं दर्शयति आग्नेयहविरिति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

घारणेन व्यवधानात्। ऐन्द्रयागहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात्।

अतस्तस्मादादावाग्नेयहविरभिघारणं ततः ऐन्द्रस्य हविषः, तत आग्नेययागः, ततश्चैन्द्रयाग इत्येवं क्रमो मुख्यक्रमात् सिद्धो भवति। यदि त्वादावैन्द्रहविरभिघारणं तत आग्नेयस्य हविषोऽभिघारणं क्रियते तदा याज्यानुवाक्याक्रमवशादादावाग्नेयानुष्ठानादाग्नेययागतदङ्गहविरभिघारणयोरत्यन्तमव्यवधानम्। ऐन्द्रयागतदङ्गहविरभिघारणयोरत्यन्तं व्यवधानं स्यात् तच्चायुक्तम्। अतो युक्तः प्रयाजशेषेणाभिघारणस्य मुख्यक्रमात् क्रम इति।

स चायं [1]मुख्यक्रमः पाठक्रमाद्दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः। पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्।

---

अनुष्ठानप्रकारमाह अत इति। मुख्यक्रमानुसरणे द्वयोरेकान्तरितत्वं प्रदर्श्य वैपरीत्ये कस्यचिदत्यन्तमव्यवधानं कस्यचिच्च द्व्यन्तरितत्वं प्रकृते यथा भवति तथा दर्शयति यदि त्विति। याज्या अनुवाक्या च ऋग्विशेषः। क्रमेति। मन्त्रकाण्डे आदावाग्नेय्यौ ऋचावाम्नाते अनन्तरमैन्द्री ऋग् आम्नाता इत्यर्थः। एतेन आग्नेयस्यैव प्रथममनुष्ठानं ततश्चैन्द्रस्येति दर्शितम्। उपसंहरति अतो युक्तमिति।

मुख्यक्रमस्य पाठक्रमाद्दौर्बल्यमाह स चेति। दौर्बल्ये हेतुमाह मुख्यक्रमो हीति। प्रमाणेति। प्रमाणान्तरसापेक्षा प्रधानक्रमबोधकशास्त्रमूलिका या प्रधानक्रमप्रतिपत्तिः प्रधानयोः क्रमज्ञानं तत्सापेक्षतया तदधीनतया विलम्बिता झटित्यनुत्पन्ना प्रतिपत्तिर्ज्ञानं यस्य तथाभूत इत्यर्थः। पाठक्रमस्य बलवत्त्वे हेतुमाह पाठक्रमस्त्विति। निरपेक्षेति। निरपेक्षः प्रमाणान्तरानधीनो यः स्वाध्यायानां वेदानां पाठक्रमः पाठमात्रेण क्रमज्ञानं तन्मात्रसापेक्षतया तन्मात्राधीनतयेत्यर्थः। न तथा न विलम्बितप्रतिपत्तिकः। इति हेतोः। तथाच मुख्यक्रमस्थले प्रथमं प्रधानक्रमज्ञानं तदनन्तरञ्च तदङ्गानां क्रमज्ञानमुत्पद्यते। पाठक्रमस्थले तु प्रथमं क्रमपठितवाक्यानां ज्ञानमन-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएवाग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाजाजग्रनिर्व्वापो मुख्यक्रमान्न पूर्व्वमनुष्ठीयते तस्य दुर्ब्बलत्वात् । पाठक्रमात्तु पश्चादनुष्ठीयते तस्य प्रबलत्वादिति ।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् । प्रवृत्तिक्रमे ह्या-

---

न्तरञ्च तदर्थानां क्रमज्ञानमित्युभयीः क्रमान्तरज्ञानमूलकत्वाविशेषेऽपि प्रथमक्रमज्ञानस्य शास्त्रज्ञानमूलकत्व तदमूलकत्वाभ्यां द्वितीयक्रमज्ञानस्य विलम्बाविलम्बाविति भावः ।

तदुदाहरणमाह अतएवेति । मुख्यक्रमात् पाठक्रमस्य बलवत्त्वादेवेत्यर्थः । आग्नेयेति । अत्रायं भावः । पौर्णमासयागे आग्नेयाष्टाकपालोपांशुयाजाग्नीषोमीयैकादशकपालाख्यास्त्रयो यागा मन्त्रपाठात् क्रमेणानुष्ठेयाः । तत्राग्नेयहविः पुरोडाशरूपम् । उपांशुयाजहविराज्यम् । अग्नीषोमीयहविश्च पुरोडाशरूपम् । तत्राग्नेयहविर्धर्म्मास्तावत् प्रथममनुष्ठेयाः प्रवृत्तिक्रमात् । तथा उपांशुयाजीयाज्यधर्म्मान् आज्यस्थाल्यां निर्व्वाप उत्पवनं चतुर्गृहीतत्वञ्चेत्यादीन् अनुष्ठाय ओषधिद्रव्यकाग्नीषोमीयहविषो धर्म्मान् निर्व्वापावघातादीन् प्रवृत्तिक्रमादेवानुष्ठातुमर्हति । परन्तु अग्नीषोमीयौषधधर्म्माः पूर्व्वमाम्नाताः पश्चात्तु आज्यधर्म्मा इति पाठक्रमात् प्रथममग्नीषोमीयहविर्धर्म्मा अनन्तरञ्च उपांशुयाजीयाजग्रधर्म्मा इति । एवमेव पञ्चमाध्यायप्रथमपादे सिद्धान्तितम् ।

ननु येषां हविर्धर्म्माणां पाठक्रमादैन्द्रहविःपूर्व्वकत्वं सिद्धान्तितं तेषां तथाविधप्रवृत्तिदर्शनात् तदितरेषामुत्तरकर्त्तव्यानामभिघारणादीनामपि प्रवृत्तिक्रमादैन्द्रहविःपूर्व्वकत्वमस्तु । पूर्व्वपूर्व्वकर्म्मणां यत्क्रमेणानुष्ठानमुत्तरोत्तरकर्म्मणामपि तत्क्रमेणानुष्ठानस्य प्रवृत्तिक्रमत्वात् । मुख्यक्रमस्य बलवता प्रवृत्तिक्रमेण बाध्यतामित्यतो मुख्यक्रमस्य प्रवृत्तिक्रमाद्बलवत्त्वमाह स चायमिति । अत्र हेतुमाह प्रवृत्तिक्रमे हीति । पूर्व्वपूर्व्वकर्म्मणां यत्क्रमेणानुष्ठानमुत्तरोत्तरकर्म्मणामपि तथाविध क्रमः प्रवृत्तिक्रम इति वक्ष्यते । दर्शिताग्नेयमाणे, पाठबलादैन्द्रहविर्धर्म्माणां वत्सापाकरणदोहनादीनामादावनुष्ठानस्य आग्नेयहविर्धर्म्माणाञ्च निर्वापावघातादीनां पश्चादनुष्ठानस्य प्रवृत्त्या अन्येषामपि हविरङ्गानां तथाविधक्रमे अङ्गीक्रियमाणे । बहूनामिति । अवदाना-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति । अस्मिंस्तु आश्रीयमाणे सन्निकर्षः ।

तद्यथा दर्शपौर्णमासयोरादावाग्नेयानुष्ठानं ततः सान्नाय्यस्य तद्धर्म्माश्च केचित् पूर्व्वमनुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्म्माः सर्व्वे पूर्व्वमनुष्ठीयेरन् तत आग्नेयधर्म्माः तत आग्नेयानुष्ठानं ततः सान्नाय्यानुष्ठानं तदा तद्धर्म्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्म्मानुष्ठानाभ्यां विप्रकर्षः स्यात् ।

यदा तु सान्नाय्यधर्म्माणां केषाञ्चित् पूर्व्वमनुष्ठानेऽपि अन्ये

---

भिघारणासादनादीनामपीत्यर्थः । प्रधानविप्रकर्षः प्रधानेन सह सम्बन्धे कर्म्मान्तरितत्वरूपं व्यवधानम् । अस्मिन् मुख्यक्रमे । सन्निकर्षोऽव्यवधानम् ।

विप्रकर्षसन्निकर्षाववगमयति तद्यथेति । आग्नेयानुष्ठानमाग्नेयहविस्त्यागः । ततः सान्नाय्यस्येति । सन्नयनान्मिश्रणाज्जातं सान्नाय्यं दधिमिश्रितपयोरूपमैन्द्रहविः । तस्यानुष्ठानमित्यनुषङ्गः । तत्त्यागः पश्चादित्यर्थः । तद्धर्म्माः सान्नाय्यनामक ऐन्द्रहविर्धर्म्माः । केचित् वत्सापाकरणदोहनादयः । पूर्व्वम् आग्नेयहविर्धर्म्मानुष्ठानात् प्राक् । प्रवृत्तिक्रमं वत्सापाकरणदोहनादौ यः प्रवृत्तिक्रमः प्रथमप्रवृत्तिरूपः क्रमस्तमाश्रित्य इतरेष्वपि ऐन्द्रहविर्धर्म्मेषु तमेव प्राथम्यरूपक्रममनुसृत्य । सर्व्वे तद्धर्म्मा अवदानाभिघारणासादनान्यपि । ततः सर्व्वस्मादैन्द्रहविर्धर्म्मानुष्ठानात् परम् । आग्नेयानुष्ठानम् आग्नेयहविस्त्यागः । तद्धर्म्माणां सर्व्वेषां सान्नाय्यधर्म्माणाम् । स्वप्रधानेन सान्नाय्यानुष्ठानेन । आग्नेयेति । सान्नाय्यानुष्ठानात् पूर्व्वमाग्नेयानुष्ठानस्य तत्पूर्व्वमाग्नेयधर्म्मानुष्ठानस्य तत्पूर्व्वञ्च सान्नाय्यधर्म्मानुष्ठानस्य भवन्मते प्राप्तत्वादिति भावः ।

वत्सापाकरणदोहनादिभिन्नानामवदानाभिघारणासादनादीनां मुख्यक्रमाश्रयणे तु न तस्यापि स्वप्रधानेन सह द्वाभ्यां व्यवधानं किन्त्वेकमात्रव्यवधानमित्याह यदा त्विति । केषाञ्चित् वत्सापाकरणादीनाम् । पूर्व्वमनुष्ठानेऽपीति । बलवतः पाठक्रमादिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सर्व्वं मुख्यक्रममाश्रित्याग्नेयधर्म्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्व्वेषामाग्नेयधर्म्मसान्नाय्यधर्म्माणामेकैकेन विजातीयेन व्यवधानं भवति।

आग्नेयधर्म्माणां स्वप्रधानेन सह सान्नाय्यधर्म्मैर्व्यवधानात्। सान्नाय्यधर्म्माणाञ्च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानात्। इति न विप्रकर्षः। तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्।

---

भावः। अन्ये सर्व्वे अवदानाभिघारणासादनरूपा धर्म्माः। मुख्यक्रममिति। आग्नेय-सान्नाय्ययोर्यः पौर्व्वापर्य्यरूपः क्रमस्तमनुसृत्येत्यर्थः। आग्नेय धर्म्मानुष्ठानानन्तरमिति। अग्नेयानुष्ठानस्य प्राक्कर्त्तव्यतया तद्धर्म्मानुष्ठानस्यापि प्राक्कर्त्तव्यतौचित्यात् सान्नाय्यानुष्ठानस्य पश्चात्कर्त्तव्यतया तद्धर्म्मानुष्ठानस्याग्नेयधर्म्मानुष्ठानानन्तरमुचितत्वाच्चेति भावः। एकैकेनेति। न कस्यापि द्वाभ्यां व्यवधानमिति भावः।

एकैकव्यवधानं विशदयति आग्नेयधर्म्माणामिति। न विप्रकर्ष इति। नात्यन्तव्यवधानमित्यर्थः। ननु मुख्यक्रमानुसरणेऽपि आग्नेयधर्म्मानुष्ठानानन्तरं सान्नाय्यधर्म्माणामवदानाभिघारणासादनानामनुष्ठाने तदनन्तरञ्चाग्नेयसान्नाय्ययोः क्रमेणानुष्ठानेऽपि अवदानस्य स्वप्रधानेन सान्नाय्येन सह अभिघारणासादनाग्नेययागैस्त्रिभिरेव व्यवधानम्। अभिघारणस्य च द्वाभ्यां व्यवधानं भवति तत्कथमेकैकेन व्यवधानमुच्यत इत्यत उक्तं विजातीयेनेति। तथाच सान्नाय्यधर्म्मत्वेन एकजातीयाभ्यामभिघारणासादनाभ्यां व्यवधानं न दोषायेव। विजातीयेनाग्नेययागेन व्यवधानन्तु प्रयोगविधिबोधितसाहित्यभङ्गकत्वेनदोषः। सोऽपि मुख्यक्रमादरणजन्यत्वेन सोढव्य इति भावः। तथाच पञ्चमाध्यायचतुर्थपादे—

अवदानाभिघारणासादनेष्वानुपूर्व्वं प्रवृत्त्या स्यादिति सूत्रेण पूर्व्वपक्षयित्वा

यथा प्रदानं वा तदर्थत्वादिति

सूत्रेण यस्य हविषस्त्यागः पूर्व्वं विहितस्तस्यैवावदानादि प्रथममिति सिद्धान्तितम्। उपसंहरति तस्मादिति।

प्रवृत्तिक्रमं निरूपयति सहेति। साहित्येन कर्त्तव्यतया विहितेष्वित्यर्थः। प्रधानेषु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सह प्रयुज्यमानेषु प्रधानेषु सन्निपतितानामङ्गानामावृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमात् यः क्रमः स प्रवृत्तिक्रमः ।

यथाप्राजापत्याङ्गेषु । प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्द्देशात् सेतिकर्त्तव्यताका एककालत्वेन विहिताः । अतस्तेषां तदङ्गानाच्चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पाद्यम् ।

---

परस्पराङ्गाङ्गिभावरहितेषु । सन्निपतितानां यौगपद्येनोपस्थितानाम् आवृत्त्येति । तत्तत्प्रधानेषु तत्तदङ्गानां यौगपद्येनानुष्ठानस्यावश्यकतया अव्यवधाने नानुष्ठानस्यैव शास्त्रार्थत्वेन तत्तत्प्रधानेषु तत्तदङ्गानामव्यवहितानन्तर्य्येण पुनः पुनरनुष्ठाने इत्यर्थः। द्वितीयादिपदार्थानामिति । प्राथमिकाङ्गस्य तत्तत्प्रधानेष्वावृत्त्यानुष्ठानसमाप्तावुपस्थितानां तदुत्तरकर्त्तव्याङ्गाना मित्यर्थः । यः क्रम इत्यनेनास्यान्वयः। प्रथमानुष्ठानेति । प्राथमिकाङ्गस्य किञ्चित्प्रधानमारभ्यानन्तर्य्येण प्रतिप्रधानमनुष्ठाने यत्पौर्व्वापर्य्यमुपलब्धं तस्मादित्यर्थः ।

उदाहरति यथेति । प्रजापत्येति । वाजपेये सप्तदश प्राजापत्यान् पशूनालभेतेति श्रुतिविहितसप्तदशपशूनामग्नीषोमीयपशुविकृतित्वेनातिदेशप्राप्तेषु उपाकरणादिष्वित्यर्थः । प्रवृत्तिक्रम इत्यन्वयः। तेषु कुतः प्रवृत्तिक्रम इत्यत्र हेतुमाह प्राजापत्याहीति । एककालत्वेन विहिता इत्यनेनान्वितम् । तथा विधायक श्रुतिवाक्यमाह वैश्वदेवीमिति । तृतीयानिर्द्देशात् तृतीया बहुवचननिर्द्देशात् । अत्र तृतीयार्थोऽभेदः । तस्य चाचरणक्रियायामन्वयः। आचरणमनुष्ठानम्। तेन प्राजापत्याख्यकर्म्माभिन्नानुष्ठानप्रतीतेः प्राजापत्यस्य सेतिकर्त्तव्यताकत्वं लभ्यते। साङ्गप्रधानसम्पादनस्यैव कर्म्मानुष्ठानत्वात् न ह्येकदेशाचरणे कर्म्मानुष्ठितमिति व्यवह्रियते । बहुवचनेन तु साहित्यप्रतीतिबलेन एककालकर्त्तव्यता प्राप्ता । एतदेवाह सेतिकर्त्तव्यताका इति । एककालत्वेनेति च ।

अत इति । यतः प्राजापत्यानां सदितिकर्त्तव्यतानाञ्चैककालकर्त्तव्यताविधानमत इत्यर्थः। उपाकरणनियोजनप्रभृतीनामिति । एकैकपशुविषयाणामिति शेषः। साहित्यमेककालकर्त्तव्यत्वम्। सम्पाद्यं घटयितव्यम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन् कालेऽनुष्ठानादुपपद्यते साहित्यम्। तदङ्गानाञ्चैकस्मिन् कालेऽनुष्ठानमशक्यम्। न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन् काले कर्त्तुं शक्यम्। अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात् सम्पाद्यम्। एकस्योपाकरणं कृत्वा अपरस्योपाकरणमिति।

अतः प्राजापत्येषु एकपदार्थं सर्व्वत्रानुष्ठाय द्वितीयपदार्थोऽनुष्ठेयः। तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित्पशोरारभ्य कर्त्तव्यं द्वितीयस्तु पदार्थो येन क्रमेन प्रथमोऽनुष्ठितस्तेनैव क्रमेणानुष्ठेयः। प्रयोगविध्यवगतस्य मिथोऽङ्गसाहित्यस्योपपत्तये। प्रयोगविधिना हि दैवे तदङ्गानामुपाकरणनियोजनादीनां

---

तत्र प्राजापत्यतदङ्गेषु मध्ये। सम्प्रतिपन्नेति। प्राजापत्यपदघटकतद्धितावगतप्रजापतिरूपैकदेवताकत्वेनेत्यर्थः। अनुष्ठानात् हवनात्। उपपद्यत इति। द्रव्यदेवतैक्येन सप्तदश पश्ववयवैस्तन्त्रेण सकृद्धोमसम्भवादिति भावः।

तदङ्गानाञ्चेति। तदङ्गोपाकरणादीनान्त्वित्यर्थः। अशक्यत्वे हेतुमाह न हीति। अनेकेषामिति। तथाच उपाकरणीयव्यक्तिभेदादेकजातीयकर्म्मत्वेऽपि न तन्त्रानुष्ठानसम्भव इति भावः। अत इति। तन्त्रेणैककालकरणरूपसाहित्यसम्पादनस्याशक्यत्वादित्यर्थः। अव्यवधानेन कर्म्मान्तरव्यवधानाभावेन। कर्म्मान्तराव्यवधानप्रकारं प्रतिपादयति एकस्येति।

एकं पदार्थमुपाकरणम्। सर्व्वत्र सप्तदशसु पशुषु। द्वितीयपदार्थो नियोजनरूपः। स च प्रथमपदार्थः कतमं पशुमुपक्रम्य कर्त्तव्य इत्यत आह तत्रेति। तेषूपाकरणादिष्वित्यर्थः। कस्माच्चिदिति। यस्मात् कस्माच्चिदित्यर्थः। ननु प्रथमपदार्थानुष्ठाने यथा पशुविशेषनियमो नास्ति तथा द्वितीयादिपदार्थानुष्ठानेऽपि किं नियमाभाव इत्यत आह द्वितीयस्त्विति। येन क्रमेणेति। तथाच उपाकरणं यमारभ्य यं यं पशुं प्रति कृतं तमारभ्य तं तं प्रत्येव कर्त्तव्यमिति भावः। प्राथमिकक्रमानुसरणं कस्मै फलायेत्यत आह प्रयोगेति। मिथः परस्परम्।

तदङ्गसाहित्यस्य प्रयोगविध्यवगतत्वं प्रतिपादयति प्रयोगविधिना हीति। दैवे



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मिथः साहित्यमानन्तर्य्यापरपर्य्यायं विहितम्। तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तम्। तस्य प्राणिद्रव्यकत्वेन दैक्ष-विकृतित्वात् सवनीयाच्चैकादशिनेषु प्राप्तम्, सुत्याकालत्व-सामान्यात्। तेभ्यश्च प्राजापत्येषु प्राप्तम्, गुणत्वसामान्यात्।

प्राजापत्येषु च प्रतिपशु यागभेदाच्चोदका भिद्यन्ते। अतश्चोदकात्तत्तत्पश्वङ्गभूतानामुपाकरणनियोजनादीनां साहित्य-

---

दीक्षाङ्गपशौ। आनन्तर्य्येति। अव्यवहितत्वनामकमित्यर्थः। तथाच यदि सर्व्वेषूपाकरणमनुष्ठाय तेषु सर्व्वेषु क्रमेण नियोजनादिकमनुष्ठीयते तदा उपाकरणनियोजनादीनां कर्म्मान्तराव्यवहितत्व-रूपं परस्परसाहित्यमुपपद्यते। यदि तु एकस्मिन् पशावुपाकरणनियोजनादीनि सर्व्वाण्यनुष्ठाय द्वितीयादिपशुषु तान्यनुष्ठीयन्ते तदा उपाकरणानन्तरमेव नियोजनमित्याद्युक्तमुपाकरणनियोजना दीनां साहित्यं भज्येत। उपाकरणानन्तरमप्युपाकरणस्य नियोजनाजन्तरमपि नियोजनस्य सम्भवादिति भावः। विहितं साक्षाद्विहितम्। चोदकेन अतिदेशेन। ननु विकृतावेवातिदेशो न प्रकृतौ। तत्कथं दैक्षपशुधर्म्माणां सवनीयपशावतिदेशः सम्भवतीत्यतः सवनीयस्य दैक्षविकृतित्वं साधयति तस्येति। प्राणिद्रव्यकत्वेन पशुद्रव्यकत्वरूपसाधर्म्म्येण। एकादशिनेषु एकादशिनाख्ययागविशेषीयपशुषु। प्राप्तमतिदेशादागतम्।

तेषां सवनीयविकृतित्वमुपपादयति सुत्येति। सवनीयस्यैकादशिनानाञ्च सुत्याकालकर्त्तव्य त्वरूपसाधर्म्म्यादित्यर्थः। तेभ्यः एकादशिनेभ्यः। प्राजापत्येषु वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती त्युक्तप्राजापत्यपशुषु। गुणत्वेति। एकादशिन पशूनां प्राजापत्यपशूनाञ्च गुणत्वरूपसाधर्म्म्या दित्यर्थः।

यथैकादशिनेषु पशुभेदेन यागभेदात् एकैकस्मिन् पशावुपाकरणादीनामतिदेशभेदाः स्युस्तथा प्राजापत्येष्वपि यागभेदादतिदेशा भिद्यन्ते एवेत्याह प्राजापत्ये ष्विति। प्रतिपशु एकैकपशुना। यागभेदात् यागभेदस्तु तद्गिंकत्वात्। चोदका अतिदेशाः भिद्यन्ते एकैकपशुषु प्रत्येकरूपेण गच्छन्ति। चोदकात् भिन्नभिन्नातिदेशात्। तत्तत्पश्विति। एकैकपश्वित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मानन्तर्य्यापरपर्य्यायं प्राप्तम् । अतएवैकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात् कर्त्तव्यत्वेन प्राप्तं तच्च नक्रियते । प्रत्यक्षवचनावगतसर्व्वपश्वङ्गसाहित्यानुपपत्तेः ।

अत एकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव कर्त्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते । प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोड़शस्वु उपाकरणमेव क्रियते । कृते तु तेषूपाकरणे प्रथमपशो र्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्य्यम् ।

---

अतएव एकैकपशुषु उपाकरणनियोजनाद्यतिदेशप्राप्तेरेव । चोदकबलात् विभिन्नातिदेशबलात् । तच्च न क्रियत इति । तथाच एकादशिनादौ यथा पशुभेदेन यागभेदादतिदेशस्यापि भिन्नभिन्नत्वेन प्राप्तेरेकपशावुपाकरणनियोजनादीनि कृत्वा पश्वन्तरे तानि क्रियन्ते । तथा प्राजापत्येष्वपि यागभेदस्यौत्सर्गिकत्वेनातिदेशभेदादेकैकस्मिन् पशावुपाकरणनियोजनादीन्यव्यवधानेन कर्त्तव्यतयापाततः प्रतीतानि । परन्तु तथा न कार्य्याणीति भावः । अकरणे हेतुमाह प्रत्यक्षवचनेति । वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति प्रत्यक्षश्रुतवाक्येत्यर्थः ।

सर्व्वपश्वङ्गेति । प्राजापत्यैरिति बहुवचनबलेन सैतिकर्त्तव्यताकपशुयागस्य साहित्यप्रतीतेः प्राप्तस्य सप्तदशपश्वङ्गसाहित्यस्यानुपपत्तेरित्यर्थः । तथाच एकादशिनधर्म्मातिदेशात् प्राप्तस्य एकस्मिन् सर्व्वाण्यनुष्ठाय अन्यस्मिन् सर्व्वानुष्ठानस्य प्रत्यक्षश्रुत्या बाध इति भावः ।

अतः प्रत्यक्षश्रुत्या अतिदेशस्य बाधितत्वात् । षोड़शसु पशुषु । तेषु पशुषु । तदीयोपाकरणेन प्रथमपशोरुपाकरणेन सह । व्यवधाने कर्म्मान्तरव्यवधाने ।

प्रमाणाभावादिति । तथाच उपाकरणेन सह नियोजनस्य व्यवधानं साहित्यव्याघातकं न पुनः सजातीयकर्म्मव्यवधानम् तेन । षोड़शोपाकरणव्यवधानेऽपि न क्षतिः । तेषां सजातीयकर्म्मत्वात् । तथाच पञ्चमाध्यायद्वितीयपादे सिद्धान्तसूत्रम्—

सर्व्वेषां वैकजातीयं कृतानुपूर्व्यत्वादिति ।

वाशब्दः पूर्व्वपक्षं व्यावर्त्तयति । सर्व्वेषां पशूनां सम्बन्धे एकैकजातीयं कर्म्म कर्त्तव्यम् । तेनैव आनुपूर्व्यस्य साहित्यस्य कृतत्वादित्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्च येन क्रमेणोपाकरणं कृतं तेन क्रमेण नियोजनं कार्य्यम्। एवञ्च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोड़श-क्षणैर्व्यवधानं भवति। अन्यथा केषाञ्चिदत्यन्तव्यवधानं केषाञ्चिच्चाव्यवधानं स्यात्। तच्च न युक्तम्।

तस्मात् येन क्रमेण प्रथमपदार्थोऽनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः। तस्मिद्धं प्रथमानुष्ठीतपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति। तदेवं निरूपितः सङ्क्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः।

फलस्वाम्यबोधको विधिरधिकारविधिः। फलस्वाम्यञ्च कर्म्मजन्यफलभोक्तृत्वम्। स च यजेत स्वर्गकाम इत्येवंरूपः।

---

अत्र भाष्यम्। "एकजातीयानुसमयः कर्त्तव्यः। किमेवं भविष्यति, सकलमनुग्रहीष्यते। तत्सकलं श्रूयते, वैश्वदेवीं कृत्वा पशुभिश्चरन्तीत्येकस्मिन् काले पशूनां प्रचारः। नन्वेवं सति पूर्व्वस्य पदार्थस्य उत्तरः पदार्थः पश्वन्तरव्यापारेण व्यवधीयते। नैष दोषः, एवमपि कृतमेवानुपूर्व्वम्। योऽसौ पश्वन्तरे व्यापारः स एवासौ, न पदार्थान्तरम्। न पदार्थान्तरेण व्यवधानं भवतीति।"

तुल्यमिति। न कस्यापि न्यूनाधिककालव्यवधानमिति भावः। षोड़शक्षणैः षोड़शोपाकरणकालैः। एतेन कालव्यवधानमात्रं न कर्म्मान्तरव्यवधानम्। षोड़शोपाकरणानामुपाकरणत्वेन सजातीयत्वादिति दर्शितम्। अन्यथा प्राथमिकपदार्थक्रमातिक्रमेण।

प्रकृतिक्रमनिरूपणमुपसंहरति तस्मिद्धमिति। क्रमषट्कनिरूपणं प्रयोगविधिनिरूपणञ्चोपसंहरति तदेवमिति।

क्रमप्राप्तमधिकारविधिं निरूपयति फलस्वाम्येति। फलस्वाम्यं विवृणोति कर्म्मेति। फलभोक्तृत्वमपि फलभागित्वं फलसम्बन्धवत्त्वमिति यावत्। अन्यथा स्वर्गफलस्य सुखरूपतया तदंशे अनुभवितृत्वं पुत्रपश्वादिफलांशे च तज्जन्यसुखानुभवितृत्वमिति भोक्तृत्वस्य द्वैरूप्यापत्तेः। अधिकारविधिस्वरूपमाह स चेति। तत्राधिकारविधिलक्षणं योजयति अनेन होति। स्वर्गं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफल-भोक्तृत्वं प्रतिपाद्यते। यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते अष्टाकपालं निर्व्वपेदित्यादिभिस्त्वग्निदाहादौ निमित्ते कर्म्म विदधद्भिर्निमित्तवतः कर्म्मजन्यपापक्षयरूपफलस्वाम्यं प्रति-पाद्यते।

तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः। अधि-कारिविशेषणं तदेव यत् पुरुषविशेषणत्वेन श्रुतम्। अतएव

---

मुद्दिश्येति। स्वर्गफलकत्वमभिप्रेत्येत्यर्थः। स्वर्गकामस्येति। तथाच स्वर्गकाम इति वाक्येन यागद्वारा स्वर्गं भावयेदिति बोधयता स्वर्गस्य भाव्यत्वप्रतिपादनमुखेन यागप्रयोजकेच्छाविषयत्वे सति यागजन्यत्वरूपं यागफलत्वं तत्कामस्य तत्फलसम्बन्धवत्त्वं प्रतिपाद्यत इति भावः।

श्रुतफलस्वाम्यबोधकत्वाभावेऽपि अर्थसिद्धफलस्वाम्यबोधकस्याप्यधिकारविधित्वं स्यादिति प्रदर्शनाय उदाहरणान्तरमाह यस्याहिताग्नेरिति। क्षामवते इत्यनेन क्षामवच्छब्दवत्त्वेन देवतात्वं बोध्यते। इत्यादिभिरित्यादिपदात् यस्य हिरण्यं नश्येदाग्नेयादीनि निर्व्वपेदिति भाष्यधृता श्रुतिः परिग्राह्या। गृहदाहादावित्यादिपदात् हिरण्यनाशपरिग्रहः। निमित्तवतः गृहदाहादिरूपनिमित्तनिश्चयवतः। पापक्षयेति। गृहदाहादिसूचितपापक्षयकामनाया अश्रुतत्वेऽपि अर्थं सिद्धत्वात् तस्यैव भाव्यत्वप्रतीतेरिति भावः।

नन्वधिकारविधेः कर्म्मजन्यफलस्वाम्यबोधकत्वमुक्तम्। तत्रेयं पृच्छा यत् विधिना कस्य फलस्वाम्यं बोधनीयमिति। न च कर्त्तुरेव फलस्वाम्यं बोध्यत इति नास्त्येव प्रश्नावकाश इति वाच्यम्। प्रतिनिधौ व्यभिचारादित्यत आह तच्चेति। अधिकारिविशेषणविशिष्ट इति। किन्तावदधिकारिविशेषणमित्यत आह अधिकारिविशेषणं तदेवेति। पुरुषविशेषणत्वेन नियोज्य विशेषणत्वेन। श्रुतं श्रुतिबोधितम्। एतेन प्रतिनिधेर्व्युदासः, तस्य नियोज्यत्वाभावात्।

पुत्रे जाते ऐन्द्रं द्वादशकपालं चरुं निर्व्वपेत् पुत्रपूतत्वकाम इत्युक्तजातेष्टौ तु पितुरेव फलस्वाम्यम्। श्रुतिबोधितपुत्रपूतत्वकामना पुत्रजन्मनिश्चयरूपनियोज्यविशेषणविशिष्टत्वात् ननु पापक्षयापरपर्य्यायपूतत्वरूपफलस्य पुत्रभोग्यत्वात् पितुः फलभोक्तृत्वाभावेन कथं फलस्वाम्यं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किन्तु राज्ञः सतस्तत्कामस्य।

किञ्चित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति। यथाध्यायनविधिसिद्धा विद्या, अग्निसाध्येषु कर्मसु आधानसिद्धाग्निमत्ता, सामर्थ्यञ्च। एतेषां पुरुषविशेषणत्वेनाश्रवणेऽप्यधि-

---

स्यादिति चेन्न फलभोक्तृत्वस्य फलसम्बन्धवत्त्वेन व्याख्यानात्। पुत्रनिष्ठपापचयस्य पितृसम्बन्धित्वाच्च। एवं पित्रादिस्वर्गोद्देशेन पुत्रादिक्रियमाणकर्मण्यपि पुत्रादेरेव फलस्वाम्यं द्रष्टव्यम्।

अतएव नियोज्यविशेषणत्वेन श्रुतियोधितधर्म्मसत्त्वस्य अधिकारिविशेषणत्वादेव। अत्र स्व पदं निरवच्छिन्नसुखानुभवजनकस्थानपरम्, न तु तथाविधसुखविशिष्टपरम्, राजत्वान्वयानुपपत्तेः। राज्ञः सत इति। राजत्वे सति स्वाराज्यकामनावान् फलभोक्ता, न तु केवल स्वाराज्यकामनावानिति भावः।

पुरुषविशेषणत्वेन श्रुतमिति यदुक्तं तस्य प्रायिकत्वमित्याह किञ्चित्त्विति। विशेषणमिति शेषः। अधिकारिविशेषणं नियोज्यविशेषणम्। तथाच फलभोक्तृत्वं फलसम्बन्धार्हत्वम्। अर्हता च येन केनचित् प्रमाणबलेन कर्त्तृर्यद्धर्ममन्तरेण फलसम्बन्धी न सम्भवति तद्धर्मवत्त्वम्। एवञ्च यथा वेदवाक्यप्रतिपादितस्वर्गकामत्वादिधर्म्मविशिष्टमन्तरेण फलसम्बन्धाभावात् तद्धर्मवत्त्वं फलसम्बन्धार्हत्वम्। यथा वा नैमित्तिके कर्म्मणि तात्पर्य्यसिद्धो निमित्तनिश्चयः। तथान्यत्रापि प्रमाणान्तरावगतधर्म्मविशिष्टस्यापि तथात्वं स्यादिति भावः।

अतो यत्र यत्प्रमाणान्तरबलेन यद्धर्मवत्त्वं योग्यत्वेनाश्रयणीयं तत्तत्प्रदर्शयति यथेति। अध्ययनेति। अध्ययनविधिना स्वाध्यायोऽध्येतव्य इति विधिना सिद्धा निश्चितेत्यर्थः। विद्या वेदार्थज्ञानम्। अध्ययनविधेरर्थज्ञानपरतायाः सिद्धान्तितत्वादिति भावः। आधानसिद्धेति। आधानविधिबोधितेत्यर्थः। सामर्थ्यमनुष्ठानशक्तत्वम्। सर्व्वत्र अधिकारिविशेषणमित्यनुषज्यते।

नन्वेतेषामपि पुरुषविशेषणत्वं वेदवाक्यबोधितमेव कथमन्यथा अधिकारिविशेषणत्वसम्भव इत्यत आह एतेषामिति। अश्रवणेऽपि श्रुतिबोधितत्वाभावेऽपि।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कारिविशेषणत्वमस्त्येव। उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेर्भावि-नाध्ययनविधिसिद्धज्ञानवत्त्वं प्रत्येव प्रवृत्तेः। अग्निसाध्यकर्मणाञ्चा-न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमत्त्वं प्रत्येव प्रवृत्तेः।

अतएव शूद्रस्य न यागाधिकारः। तस्याध्ययनविधिसिद्ध-ज्ञानाभावात् आधानसिद्धाग्निमत्त्वाभावाच्च। अध्ययनस्यो-पनीताधिकारत्वात् उपनयनस्य चाष्टवर्षं ब्राह्मणमुपनयीतेत्या

---

ननु यद्येषां पुरुषविशेषणत्वं न मुख्यवगतं तदा केन प्रमाणवलेन तदङ्गीकार्य्यमित्यत्र विद्यादित्रितयस्याधिकारिविशेषणत्वसाधनाय प्रमाणत्रयं प्रदर्शयिष्यन् प्रथमं विद्यायास्तथात्वे प्रमाणमाह उत्तरेति। ब्रह्मचर्य्यान्तरगार्हस्थ्याश्रमक्रियमाणयागविषयकविधीनामित्यर्थः। प्रवृत्तेरित्यनेनान्वितम्। ज्ञानेति। ज्ञानस्य तत्तद्वाक्यार्थज्ञानस्य य आक्षेपः अर्थापत्त्या बोधकत्वं तथाविधशक्तेर्भाविन अवश्यम्भाविनेत्यर्थः।

अयमाशयः यागप्रतिपादकवाक्यानामर्थज्ञानमन्तरेण यागानुष्ठानानुपपत्तेर्नियोज्यस्यार्थ-ज्ञानवत्त्वमपि विधयोऽर्थापत्त्या बोधयन्त्येव। अतो विधीनां तद्बोधकताशक्तिरस्त्येवेति। ननु यद्यादौ अर्थज्ञानाय न नियुक्तः स्यात् तदा कथमुत्तरत्रार्थज्ञानवत्त्वं नियोज्यस्याक्षिप्येतेत्यत आह अध्ययनेति। ब्रह्मचर्य्यदशायामध्ययनविधिना स्वाध्यायोऽध्येतव्य इत्यनेन सिद्धं यज्ज्ञानं तद्वत्त्वं प्रत्येव विधीनां प्रवृत्तेरित्यर्थः।

इदानीमग्निमत्त्वस्याधिकारिविशेषणत्वे प्रमाणमाह अग्निसाध्येति। होमघटितकर्म्मणा-मित्यर्थः। अन्यपेक्षत्वेन आहवनीये जुहोतीत्यादिश्रुतिभिराहवनीयादौ होमविधानादाह-वनीयाद्यग्निं विना असम्भावत्वेन। तद्विधीनाम् अग्निसाध्यकर्म्मविधायकवाक्यानाम्। आधानेति। वसन्ते ब्राह्मणोऽग्निमादधीतेत्यादिश्रुतिभिराहवनीयाद्यग्न्याधानप्रतिपादनात् तद्विधिना सिद्धोय आहवनीयाद्यग्निः तद्वत्त्वं प्रत्येवेत्यर्थः।

अर्थज्ञानवत्त्वाग्निमत्त्वयोरधिकारिविशेषणत्वकल्पनाफलमाह अतएवेति। वेदार्थज्ञानवत्त्वा-ग्निमत्त्वयोरधिकारिविशेषणत्वादेवेत्यर्थः। अर्थज्ञानाभावे हेतुमाह अध्ययनस्येति। उपनीताधि-कारत्वादिति। उपनीतमधिकृत्यैव स्वाध्यायोऽध्येतव्य इत्याम्नानादिति भावः। शूद्रस्योपनीत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दिना त्रैवर्णिकाधिकारत्वात् । आधानस्यापि वसन्ते ब्राह्मणो ऽग्नीनादधीतेत्यादिनात्रैवर्णिकाधिकारत्वात् ।

यद्यपि वर्षासु रथकारोऽग्नीनादधीतेत्यनेन रथकारस्य सौधन्वनापरपर्य्यायस्याधानं विहितं योगाद्रूढ़ेर्बलीयस्त्वात्, तथापि नास्योत्तरकर्म्मस्वधिकारः, अध्ययनविधिसिद्धज्ञानाभावात् ।

न च तदभावे आधानेऽपि कथमधिकारः । तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम् । तस्याध्ययनविधिसिद्धज्ञानाभावेऽपि वर्षासु रथकारोऽग्नीनादधीतेत्यनेनैव विधिना आधानमात्रेऽपि

---

त्वाभावे हेतुमाह उपनयनस्य चेति । त्रैवर्णिकेति । ब्राह्मणादिवर्णत्रयमात्रसम्बन्धित्वादित्यर्थः । शूद्रस्याधानाभावे हेतुमाह आधानस्यापीति । इत्यादिनेत्यादिपदात् ग्रीष्मे राजन्यः शरदि वैश्य इत्युत्तरप्रतीकपरिग्रहः ।

यद्यपि अर्थज्ञानवत्ताया अधिकारिविशेषणत्वाङ्गीकारादेव शूद्रस्य यागानधिकारो लभ्यते, तदर्थमग्निमत्ताया अधिकारिविशेषणत्वकल्पनमनावश्यकम्. तथापि तस्य निरग्निचैवर्णिकानधिकारार्थं तथात्वकल्पनमुचितमिति बोध्यम् । अत्र मीमांसाषष्ठाध्यायप्रथमपादे सूत्रम्—

अपि वा वेदनिर्द्देशादपशूद्राणां प्रतीयेतेति ।

नन्वेवं सङ्कीर्णजाते रथकारस्य श्रुतावाधानस्य विहितत्वादाधानसिद्धाग्निमत्तया किं यागाधिकारः स्यादित्यत आह यद्यपीति । रथकारस्य माहिष्येण करण्यान्तु रथकारः प्रकीर्त्यते इत्युक्तसङ्कीर्णजातेः । ननु रथं करोतीति योगाद्रथनिर्म्माणकर्त्तृत्रैवर्णिकपरमेव श्रुतौ रथकारपदं न सङ्कीर्णजातिपरमित्यत आह योगाद्रूढ़ेर्बलवत्त्वादिति । अग्निमत्त्वेऽपि यागे नाधिकार इत्याह तथापीति । उत्तरकर्म्मसु अग्न्याधानोत्तरकर्त्तव्याग्निसाध्यकर्म्मसु । अग्निमत्त्वेऽपि उत्तरकर्म्मानधिकारे ज्ञानाभावं हेतुमाह अध्ययनेति ।

नन्वाधानस्यापि वैदिकविधिबोधितत्वादध्ययनं विना च तद्विध्यर्थज्ञानासम्भवादध्ययनविधिसिद्धज्ञानाभाववतो रथकारस्याधानेऽप्यधिकारो न स्यादित्यापत्तिं निराकरोति न चेति । आधानमात्रेति । आधानमात्रस्य आधानानुष्ठानमात्रस्य, औपयिकमुपकारकं यज्ज्ञानं तदाक्षेपणात् तद्बोधनादित्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यिकज्ञानाक्षेपणात्। अन्यथा तस्यैव विधानानुपपत्तेः। अतश्च रथकारस्याधानमात्रेऽधिकारेऽपि नोत्तरकर्म्मस्वधिकारो विद्याभावात्।

एवञ्च तदाधानं नाग्निसंस्कारार्थम्, उत्तरत्रोपयोगाभावात्। किन्तु तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलकञ्च स्वतन्त्रमेव प्रधानकर्म्म विधीयते। अग्नीनिति च द्वितीया सक्तून् जुहोतीतिवत् तृतीयार्था इति।

---

विधानानुपपत्तेरिति। तथाच तस्य तद्विधानं वाचनिकमिति भावः। तथाच षष्ठाध्याय प्रथमपादे सिद्धान्तसूत्रम्—

वचनाद्रथकारस्याधाने, तस्य सर्व्वशेषत्वादिति।

अत इति। तस्याधानस्य वाचनिकत्वादित्यर्थः। नोत्तरकर्म्मस्विति। यथा वचनं हि वाचनिकमिति न्यायादिति भावः।

एवञ्चेति। रथकारस्य अन्याधानोत्तरकर्त्तव्ययागाद्यनधिकारित्वे सतीत्यर्थः। उपयोगाभावादिति। तथाच संस्कृताग्निसाध्योत्तरकर्म्मार्थमेवाधानेनाग्निः संस्क्रियते। यस्य तूत्तरकर्मस्वनधिकारस्तस्योपयोगाभावादाधानमग्निसंस्कारार्थं नेति भावः तर्हि तदाधानं किमर्थमित्यत आह किन्त्विति।

लौकिकाग्नीति। विसृज्यनीयाग्नीत्यर्थः। तद्गुणकं तदङ्गकम्। तदाधानस्याग्निसंस्कारार्थत्वे संस्कारं प्रति संस्कार्य्यस्य प्राधान्यादग्नेः प्राधान्यं स्यादिति भावः। विश्वजिन्न्यायादिति। वर्षासु रथकारोऽग्नीनादधीतेति विधौ फलश्रवणाभावादिति भावः। प्रधानकर्म्मेति। न त्वङ्गमित्यर्थः। नन्वाधानस्याग्निसंस्कारार्थत्वेऽपि प्रधानकर्म्मतैव, दक्षिणाविशेषश्रुतेरित्यत उक्तं स्वतन्त्रमिति। साक्षात्फलजनकं न तु अग्निसंस्कारद्वारा संस्कृताग्निसाध्ययागफलप्रयोजकमिति भावः।

नन्वग्नीनिति द्वितीयाश्रुत्या आधानेनाग्नीन् संस्कुर्य्यादित्यग्नीनां संस्कार्य्यत्वावगमात् प्राधान्यमवगम्यते गुणत्वे तृतीयानिर्द्देशः स्यात् पशुना यजेतेतिवदित्यत आह अग्नीनिति। तृतीयार्थत्वेदृष्टान्तमाह सक्तूनिति।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रकृतमनुसरामः । तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञाना-भावादाधानसिद्धाग्न्यभावाच्च नोक्तरकर्मस्वधिकार इति ।

नन्वेवं स्त्रिया अधिकारो न स्यात् । तस्या अध्ययनप्रति-षेधेन तद्विधिसिद्धज्ञानाभावात् । न च नास्त्येवेति वाच्यम्, यजेत स्वर्गकाम इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्व-स्योद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अपि अधि-कारस्य साधितत्वादिति चेत्, सत्यम् ।

अधिकारः साधितो न तु स्वातन्त्र्येण । न स्त्री स्वातन्त्र्य-मर्हतीत्यादिना तस्य निषिद्धत्वात् । स्वातन्त्र्येण कर्तृत्वे प्रयोग-

---

उपसंहरति तत्सिद्धमिति ।

स्वाधिकाराभावे हेतुमाह तस्या इति । तत्रेष्टापत्तिं निराकरोति न चेति । उद्देश्येति । अयमाशयः । किञ्चिद्विधातुं प्रमाणान्तरप्राप्तस्य निर्देशत्वमुद्देश्यत्वम् । विधिवाक्यावगतः स्वर्गकाम उद्देश्य एव । सुखविशेषेच्छामन्तरेण बहुवित्तव्ययायाससाध्ये कर्मणि प्रवृत्त्यसम्भवेन स्वर्गसुखकामस्याधिकारितायाः प्रमाणान्तरलभ्यत्वात् । एवञ्च विधिवाक्यस्थस्वर्गकामपदस्य तथाविधकर्तृबोधकत्वमिति ।

ग्रहैकत्ववदिति । दशापवित्रेण ग्रहं सम्मार्ष्टीत्यत्र दशग्रहान् सम्मार्ष्टीति प्रमाणान्तरप्राप्ततया उद्देश्यस्य ग्रहस्य एकत्वविशेषणस्य यथा अविवक्षितत्वम् । तद्विवक्षणे एकत्वस्यापि प्रमाणान्तराप्राप्तत्वेन विधेयत्वापत्त्या एकत्वसम्मार्गयोर्द्वयोरेकेन वाक्येन विधानासम्भवात् ग्रहं सम्मार्ष्टि तच्चैकमिति वाक्यभेदापत्तेः । तथा स्वर्गकामस्यापि उद्देश्यस्य पुंस्त्वरूपविशेषणस्याविवक्षितत्वमेव । अन्यथा पुंस्त्वस्याप्यप्राप्तत्वेन विधेयत्वापत्त्या पुंस्त्वयागयोर्द्वयोरेकवाक्येन विधानासम्भवात् स्वर्गकामो यजेत स च पुमानिति वाक्यभेदापत्तिरिति भावः ।

साधितत्वात् सिद्धान्तितत्वात् षष्ठाध्यायप्रथमपादे

तस्मात् स्त्र्यपि प्रतीयेतेति

सूत्रांशेनेति शेषः । स्वातन्त्र्येण पृथग्भावेन । तत्र प्रमाणमाह न स्त्रीति । आदि-पदात् नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम् ।

पतिं शुश्रूषयेद्यत्तु तेन स्वर्गे महीयते ॥

इत्यादिस्मृतिपरिग्रहः । स्वातन्त्र्येणाधिकारे दोषमप्याह स्वातन्त्र्येणेति । प्रयोगद्वयवैगुण्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

द्वयस्यापि वैगुण्यापत्तेश्च। यजमानप्रयोगे पत्नीकर्त्तृकाज्यावेक्षणादिलोपप्रसङ्गात्। पत्नीप्रयोगे च यजमानकर्त्तृकाज्यावेक्षणादिलोपात्। अतो दम्पत्योः सहाधिकारः। सहाधिकारत्वे च यजमानविद्ययैव पत्न्या अपि कार्य्यसिद्धेर्न ज्ञानं विना तस्या अधिकारानुपपत्तिः।

पाणिग्रहणात्तु सहत्वं सर्व्वकर्म्मसु, तथा पुण्यफलेष्विति वचनेन स्त्रिया अधिकारनिर्णयाच्च। निषादस्थपतेरिवाध्ययन-

---

प्रतिपादयति यजमानेति। यजमानकर्त्तृकेति। तथाच यत्रापुरुषेण याजमानिकं कर्म्म क्रियते। पत्न्या तु आज्यावेक्षणादि कर्त्तव्यम्। एवञ्च यदि पत्न्या पृथक् यागारम्भः क्रियते तदा तस्या यजमानतया याजमानिककर्म्मण्येवाधिकारान्नाज्यावेक्षणाद्यधिकारसम्भव इति भावः।

अत इति। पृथग्भावेन निषेधादित्यर्थः। सहाधिकार इति। तथाच षष्ठाध्याय प्रथमपादे सिद्धान्तसूत्रम्–

स्ववतोस्तु वचनादैककर्म्यं स्यादिति।

स्ववतोर्धनवतोरपि दम्पत्यो ऐककर्म्यम् एककर्म्मकत्वं न तु पृथगनुष्ठायित्वं स्यात् वचनादित्यर्थः।

ननु वेदार्थज्ञानवत्त्वस्याधिकारिविशेषणत्वात् तदभावेन तस्या अधिकारानुपपत्तिरित्यत आह सहाधिकारत्वे चेति। यजमानविद्यया यजमानस्य पत्युर्वेदार्थज्ञानवत्तया। पत्न्यास्तत्पत्न्याः कार्य्यसिद्धेः फलसिद्धेः। तथाच वेदार्थज्ञानवतः पुरुषस्यैव यागानुष्ठानविधिविषयत्वम्। यागानुष्ठानञ्च तत्कर्त्तृकम्। तत्कर्तृततदनुष्ठानात् तत्पत्न्या अपि तत्कर्म्मफलवत्त्वम्। एवञ्चतस्यास्तत्कर्म्मजन्यफलभोक्तृत्वरूपोऽधिकारः सिध्यतीति भावः।

न केवलं याग एव सहभावेनानुष्ठानं किन्तु वैदिककर्म्ममात्रे इत्याह पाणिग्रहणात्विति। पाणिग्रहणात् पत्नीत्वसिद्धेः सपत्नीको धर्म्ममाचरेदित्यनेन सर्व्वकर्म्मसु सहभावेनाधिकारः पत्न्या इति भावः। सहत्वं सहभावेन धर्म्मानुष्ठानम्। तच्च भर्त्तुः क्रियायां तदानुकूल्यकारित्वम्। हेत्वन्तरमाह तथेति।

ज्ञानाभावेऽपि पत्न्या अधिकारानुपपत्त्यभावे दृष्टान्तमाह निषादेति। यथा ज्ञानविरहिणोऽपि निषादस्थपतेर्निषादेष्ट्यां नाधिकारानुपपत्तिस्तथा ज्ञानं विनापि न पत्न्या अधिकारानुपपत्तिः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधिसिद्धज्ञानविरहिणोऽपि एतया निषादस्थपतिं याजयेदिति वचनान्निषादेष्टयाम्।

निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्म्मधारयो न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः। षष्ठ्यर्थे लक्षणापत्तेः। एतावांस्तु विशेषः। निषादस्याध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्म्मौपयिकज्ञानाक्षेपकत्वम्, पत्न्यास्तु तादृशज्ञानाभावेऽपि यजमानेन सहाधिकारात् तस्य च तादृशज्ञानवत्त्वात् तेनैव च तस्याः कार्य्यसिद्धेर्नोत्तरकर्म्मक्रतुविधीनां ज्ञानाक्षेपकत्वम्।

ये तु पत्नीमात्रकर्त्तृकाः पदार्था आज्यावेक्षणादयस्ते ज्ञानं विनाशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियते।

---

रित्यर्थः। निषादशब्दः सङ्कीर्णजातिविशेषवाची। स्थपतिः कारुविशेषः। निषादजातीयः कारुविशेषो निषादस्थपतिः। तस्येष्टावधिकारे प्रमाणमाह एतयेति। रौद्रेष्ट्या इत्यर्थः। वास्तुमध्ये रौद्रं चरुं निर्व्वपेत यत्र रुद्रः प्रजाः शमयेदित्येतामिष्टिमुपक्रम्य एतयेत्याद्याम्नानात्।

ननु स्थपतिशब्दोऽत्र श्रेष्ठवाची। तेन निषादानां स्थपतिर्निषादेभ्य उत्कृष्ट इति त्रैवर्णिक पर एवाभिधीयत आह निषादस्थपतिशब्दे हीति। षष्ठ्यर्थे सम्बन्धिनि। लक्षणापत्तेरिति। तत्पुरुषे निषादस्थपतावीति प्रातिपदिकेन निषादसम्बन्धिस्थपतित्वेन बोधात् निषादपदं सम्बन्धि लाक्षणिकमिति भावः। तथाच षष्ठाध्यायप्रथमपादे सिद्धान्तसूत्रम्—

स्थपतिर्निषादः स्यात् शब्दसामर्थ्यादिति।

स्वयंज्ञानवत्त्वाभावसादृश्येन स्त्र्यधिकारे निषादस्थपत्यधिकारं दृष्टान्तमभिधायेदानीं दृष्टान्तदार्ष्टान्तिकयोर्विशेषमाह एतावांस्त्विति। एतस्यैव निषादस्थपतिं याजयेदित्येतस्यैव। तत्कर्म्मौपयिकेति। निषादेष्ट्युपयोगीत्यर्थः। ज्ञानाक्षेपकत्वं ज्ञानबोधकत्वम्। तस्य यजमानस्य भर्त्तुः। तादृशज्ञानवत्त्वात् क्रत्वनुष्ठानप्रतिपादकवेदार्थज्ञानवत्त्वात्। तेनैव भर्त्तृज्ञानवत्त्वेनैव। तत्सिद्धेः भर्त्तृकृतानुष्ठानेनानुष्ठानसिद्धेः। नोत्तरेति। तथाच निषादस्थपतेः स्वयं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इति। तस्सिद्ध मध्ययनविधिसिद्धज्ञानस्य, आधानसिद्धाग्निमत्तायाश्च उत्तरकर्म्मसु अधिकारिविशेषणत्वमिति।

एवं सामर्थ्यस्यापि अधिकारिविशेषणत्वम्, असमर्थं प्रति विध्यप्रवृत्तेः। आख्यातानामर्थं ब्रुवतां सहकारिणी शक्तिरिति न्यायात्।

तच्च सामर्थ्यं काम्येकर्म्मणि अङ्ग प्रधानविषयम्। न त्वङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्म्मण्यधिकारी। प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्म्मसमर्थं प्रत्येव प्रवृत्ते-

---

कर्त्तव्यताविधिना तद्विधानसुखेन तदुपयोगिज्ञानवत्त्वमाक्षिप्तम्। नार्य्यास्तु भर्त्तृकृतानुष्ठानेनानुष्ठानविधानान्न ज्ञानवत्त्व माक्षिप्तमिति विशेष इति तात्पर्य्यम्।

अतएव तस्याः स्वयंकर्त्तव्येकर्म्मणि तदुपयोगिज्ञानवत्त्वमाक्षिप्यत इत्याह ये त्विति। स्वीक्रियते इति। शास्त्रदीपिकाषष्ठाध्यायप्रथमपादे इति शेषः। उपसंहरति तस्सिद्धमिति।

अत्रेदं बोध्यम्। आत्रेय्यादीनामिव यासां स्त्रीणां ब्रह्मजिज्ञासा जायते तासामुपनयनवेदाध्ययनादावधिकारात् यागेऽपि स्वातन्त्र्येणाधिकारः। तथाचोक्तं हारीतेन। द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्षचर्य्येति। सद्योवधूनामुपनयनं कृत्वा विवाह इति। यमेनापि।

पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवचनन्तथा॥ इति॥

अधिकारिविशेषणान्तरमाह एवमिति। सामर्थ्यं शक्तिः। हेतुमाह असमर्थमिति। क्रियोत्पादने शक्तेः सहकारित्वे आप्तसंवादमाह आख्यातानामिति। अर्थं ब्रुवतां स्वार्थं प्रकाशयतामाख्यातानां शक्तिः सहकारिणी भवतीत्यर्थः। स्वार्थप्रकाशनसामर्थ्यमन्तरेण आख्यातकर्त्तृकस्वार्थप्रकाशनाख्यक्रियाया असम्भवादिति भावः। इति न्यायात् एतत्सादृश्यात्। यथा स्वार्थप्रकाशनाख्यक्रियायां तत्सामर्थ्यमाख्यातानामङ्गीक्रियते तथान्यत्रापि यागादिक्रियायां कर्त्तृसत्करणसामर्थ्यस्य सहकारित्वमवश्यमभ्युपगन्तव्यमिति भावः।

ननु किं प्रधानमात्रानुष्ठानसामर्थ्यमधिकारिविशेषणं साङ्गप्रधानानुष्ठान सामर्थ्यं वेत्यत्राह

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथाविनियोगमधिकारित्वात् । यदि हि समर्थं प्रत्येव प्रवृत्तौ कयाचित् श्रुत्या विरोधः स्यात् तदा असमर्थस्याप्यधिकारः स्यात् ।

न च विरोधोऽस्ति, स्वर्गकामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात् । प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरङ्ग-वाक्यैकवाक्यतया प्रतिपन्नस्याङ्गसाहित्यस्य बाधापत्तेः । नित्य-वत् श्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च । अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः ।

---

तत्रेति । अङ्गासमर्थस्यानधिकारित्वे हेतुमाह प्रधानविधेरिति । अङ्गेति । अङ्गविधिभिः सह मिलित्वा एकमहावाक्यतां प्राप्तस्येत्यर्थः । साङ्गेति । साङ्गयागविधायकमहावाक्यस्य अङ्गानुष्ठानासमर्थं प्रत्यप्रवृत्तेरित्यर्थः । यथाविनियोगमिति । विनियोगमनतिक्रम्येत्यर्थः । तथाच साङ्गयागविधिप्रवृत्त्या यो यो विनियुज्यते तस्यैवाधिकारित्वमिति भावः । ननु तर्हि पुरुषविशेषानधिकारे श्रुतिविरोधः स्यादित्यत्र श्रुतिविरोधे सत्यसमर्थस्याप्यधिकारी वाच्यः स्यात् परन्तु श्रुतिविरोध एव नास्तीत्याह यदि हीति ।

श्रुतिविरोधाभावे हेतुमाह स्वर्गकामश्रुतेरिति । समर्थमिति । असमर्थं प्रत्यप्रवृत्ता-वित्यर्थः । तथाच असमर्थं प्रति विधेः प्रवृत्त्यभावात् तस्यानधिकारे को विरोधः । विधि-विषयस्यानधिकारित्वाङ्गीकार एव विरोधसम्भव इति भावः ।

वैपरीत्ये पुनः श्रुतिविरोध इत्याह प्रत्युतेति । अङ्गवाक्येति । अङ्ग वाक्यैः सह मिलित्वा एकमहावाक्यतयेत्यर्थः । प्रतिपन्नस्य प्राप्तस्य । विरोधान्तरमप्याह नित्यवदिति । श्रुत्या तद्यागसाकल्ये कर्त्तव्यतया बोधितानामित्यर्थः । पाक्षिकत्वेति । क्वचित्प्रयोगे कर्त्तव्यत्वं क्वचिन्नेति पाक्षिकत्वप्रसङ्गादित्यर्थः । उपसंहरति अत इति ।

एतेन अप्रतिसमाधेयाङ्गवैकल्यवन्तः काम्ये कर्मणि व्यावर्त्तन्ते । तेषां साङ्गयागानुष्ठाना-सामर्थ्यात् । तथाहि अन्धो नाज्यमवेक्षितुं क्षमः । पङ्गुर्विष्णुक्रमेष्वशक्तः । बधिरो नाध्वर्युप्रोक्तं शृणोति । मूकोऽनुमन्त्रणादावसमर्थः । तानि च याजमानिकत्वेन श्रुतिविहितानि । अतएव सर्व्वशक्त्यधिकरणे सर्व्वाङ्गोपेतस्यैव काम्यस्य फलवत्त्वमिति सिद्धान्तितम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नित्यकर्म्मणामङ्गेषु यथाशक्तिन्यायः। तानि हि यावज्जीवश्रुत्या यावज्जीवकर्त्तव्यत्वेन चोदितानि। न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्त्तुं शक्यते। अतो नित्यकर्म्मसु प्रधानमात्रसमर्थोऽधिकारी। अङ्गानि तु यावन्ति कर्त्तुं शक्यन्ते तावन्ति कार्य्याणीत्यास्तां बहुक्त्या सूरिभिः पराक्रान्तत्वात्।

---

अत्रैवं वक्तव्यम्। यस्य पुरुषस्य यस्मिन्नङ्गे नित्यमेवासामर्थ्यं तस्यैव तदङ्गवति काम्ये नाधिकारः। यथा जन्मान्धादिः। यस्य तु यदा कदाचित् सम्भवति तस्य तदानीमसामर्थ्येऽपि न तत्रानधिकारः। यथा दरिद्रस्य प्रतिसमाधेयाङ्गवैकल्यवतश्च। अतएव षष्ठाद्यपादे—

वर्णानां द्रव्यसम्पन्नः कर्म्मणो द्रव्यसाध्यत्वात्।

इति सूत्रेण विप्रादीनां मध्ये द्रव्यसम्पन्नोऽधिकारी। यागादिकर्म्मणो द्रव्यसाध्यत्वादिति पूर्व्वपक्षयित्वा—

अनित्यत्वात्तु नैवं स्यात्।

इत्यादिसूत्रेण धनसम्बन्धस्य अनित्यत्वात् द्रव्यसम्पत्तिरहितस्यानधिकारो नेति सिद्धान्तितम्।

अङ्गहीनश्च तद्धर्मा।

इति सूत्रान्तरेण प्रतिसमाधेयाङ्गवैकल्यवतोऽप्यनधिकारो नास्तीति दर्शितश्च। तदनन्तरन्तु—

उत्पत्तौ नित्यसंयोगात्।

इति सूत्रेण अप्रतिसमाधेयाङ्गवैकल्यवतो जन्मान्धादेरेवानधिकार इति सिद्धान्तितम्।

यदकरणात् प्रत्यवायः श्रूयते तत्र साङ्गकर्म्मसमर्थासमर्थयोरधिकार इत्याह नित्येति। अङ्गेषु यथाशक्तिन्याय इति। षष्ठाध्यायतृतीयपादनिरूपितो नित्ये यथाशक्त्यङ्गानुष्ठानन्याय इत्यर्थः तदधिकरणनिरूपिते नित्यकर्म्माङ्गानां यथाशक्त्यनुष्ठाने युक्तिमाह तानि हीति। यावज्जीवेति। यावज्जीवमग्निहोत्रं जुहोतीत्यादिश्रुत्येत्यर्थः। न चेति। यावज्जीवानुष्ठेयकर्म्मसु कादाचित्कद्रव्याद्य समवधानस्यावश्यसम्भावनीयत्वादिति भावः। प्रधानमात्रे इति। तथाच तदधिकरणे सिद्धान्तसूत्रम्—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्मिदं फलस्वाम्यबोधको विधिरधिकारविधिरिति। तदेवं निरूपितं चतुर्धा भेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम्।

मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकतया अर्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थं दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात्।

न च दृष्टस्य प्रकारान्तरेणापि सम्भवात् मन्त्राम्नानमनर्थकम्। मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात्। साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः।

---

अपि वाप्येकदेशे स्यात्, प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत् तदर्थत्वादिति।

सूरिभिस्तन्त्ररत्नकारादिभिः। पराक्रान्तत्वात् पराक्रमेण बहुविस्तृतत्वात्।

अधिकारविधिनिरूपणमुपसंहरति तदेवमिति।

विधिमन्त्रनामधेयनिषेधार्थवादभेदेन पञ्चविधत्वेनोद्दिष्टेषु वेदभागेषु विधिनिरूपणेन तेषां धर्म्मप्रतिपादकत्वं प्रदर्श्य उद्देशक्रमप्राप्त मन्त्राणामपि अर्थवत्त्वप्रदर्शनेन धर्म्मप्रतिपादकं निरूपयति मन्त्राणाञ्चेति। प्रयोगेति। प्रयोगसमवेतः अनुष्ठानोपयोगी यः अर्थस्तत्स्मारकतया तदुपस्थापकतयेत्यर्थः। अर्थवत्त्वं प्रयोजनवत्त्वम्। मन्त्रलक्षणन्तु यत्राभियुक्तानां मन्त्रत्वेन प्रसिद्धिः स मन्त्र इति शास्त्रदीपिकोक्तम्। अदृष्टार्थमदृष्टमात्रार्थम्। तेन तदुच्चारणं दृष्टादृष्टार्थमिति सिध्यति। अतएवाग्रे नियमापूर्व्वस्वीकारः सङ्गच्छते। दृष्टे दृष्टफले। अदृष्टस्य अदृष्टमात्रस्य। प्रकारान्तरेण इदमेवं कुर्य्यादित्याद्युपदेशवाक्यादिना। मन्त्राम्नानं मन्त्रोच्चारणम्।

सार्थक्यमाह मन्त्रैरेवेति। एवकारेण प्रकारान्तरेण दृष्टफलोपपत्तिर्निराकृता। नियमेति तथाच नियमापूर्व्वार्थं मन्त्रोच्चारणमावश्यकं मन्त्रस्यार्थस्मरणादृष्टोभयफलकत्वादिति भावः। अतएव वार्त्तिककृद्भिः---

"ततश्चोपायान्तराद्यप्रमाणकत्वान्निवर्त्तन्ते नियमादृष्टसिद्धिश्च। मन्त्रैरेवस्मृत्वा कृतं कर्म्म अभ्युदयकारि भवतीत्यवधार्य्यते।"

इत्यभिहितम्।

मन्त्रैरेव स्मर्त्तव्यमित्यस्य नियमरूपत्वप्रदर्शनाय नियमविधेर्लक्षणमाह साधनद्वयस्येति। परस्परनिरपेक्षस्येति शेषः। पक्षप्राप्तौ एकतरस्य साधनस्याश्रयणीयत्वेनोपस्थितौ। अप्राप्ततेति। इतराभावादाश्रयणीयत्वेनानुपस्थिति दशायामित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथाहुः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।

तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ॥ इति ।

अस्यायमर्थः । यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन

---

यो विधिः आग्रयणीयत्वप्रतिपादकवाक्यम् । अन्यतरसाधनस्येत्यन्वितम् । एतेन नियमस्यापि विधित्वसामान्यधर्म्मवत्त्वमस्त्येवेति सिध्यति । पक्षतोऽप्राप्तस्यावश्यकभावेन प्रापकत्वेन अप्राप्त प्रापकत्वात् अतएव नियमविधिरित्यत्र विधिपदं प्रयुक्तम् ।

एवञ्च प्रयोगसमवेतार्थस्मरणक्रियायामुपदिष्टवाक्यस्य मन्त्रस्य च परस्परनिरपेक्षसाधनत्वात् रागवशादुपदिष्टवाक्यरूपसाधनस्य आग्रयणीयतयोपस्थितौ आग्रयणीयत्वेनानुपस्थितस्य मन्त्रस्य प्रापको मन्त्रेणैव स्मृत्वा कर्म्म कर्त्तव्यमिति विधिः स्वायोगव्यवच्छेदकनियमविधिरेवाहृष्टार्थो भवतीति सिद्धम् ।

नियमविधेस्तद्रूपत्वे प्राचीनसंवादमाह यथाहुरिति ।

विधिरत्यन्तमिति । अप्राप्तावित्यत्र पाक्षिके सतीत्यतः सत्पदं सत्यामिति लिङ्गविपरिणामेनानुषञ्जनीयम् । तेन अप्राप्तौ सत्यामित्यर्थः । अत्यन्तमिति तु सत्यामित्यत्र अस्धातूपस्थाप्य भवनक्रियाविशेषणत्वात् कर्म्म । अप्राप्तौ अत्यन्तं सत्यामित्यर्थः । अप्राप्तिभवनविशेषणं फलतोऽप्राप्तिविशेषणमेव । अप्राप्तिक्रियाविशेषणत्वे साधुः पाकः साधू पाकौ साधवः पाकाः इत्यादिवत् कर्म्मत्वानुपपत्त्या अत्यन्तायामप्राप्ताविति सामानाधिकरण्यापत्तेः । अतएव वैयाकरणाः कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायेन कृदभिहितभावस्य द्रव्यत्वातिदेशमङ्गीकृत्य द्रव्यविशेषणवत् तद्विशेषणस्य विशेष्यलिङ्गसङ्ख्याभाजित्वं मन्यन्ते न पुनः क्रियाविशेषणत्वात् कर्म्मत्वम् ।

अप्राप्तेरत्यन्तसत्ता तद्विधिमन्तरेण रागादितः कादाचित्कप्राप्तेरप्यसत्ता । नियमस्थले तु रागाभावात् तदानीमप्राप्तत्वेऽपि कालान्तरे विधिं विनापि रागवशादप्राप्तिर्नावतिष्ठत इति नात्यन्तिकी अप्राप्तिसत्तेति वैलक्षण्यम् । पाक्षिके अप्राप्ते इति शेषः । तत्र तद्विधिप्रतिपाद्ये । अन्यत्र तद्विधिप्रतिपाद्येतरत्र । चकारद्वयं समुच्चयावश्यम्भावार्थम् ।

एतत्सर्व्वं सोदाहरणं व्याचष्टे अस्यायमर्थ इति । यदार्थत्वं यदुपयोगित्वम् । प्रमाणान्तरेण प्रत्यक्षादिप्रमाणाधीनरागादिना, शास्त्रान्तरेण च । तदर्थत्वेन तदुपयोगित्वेन । यो



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यो विधिः सोऽपूर्व्वविधिः। यथा यजेत स्वर्गकाम इत्यादिः। यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते, किन्त्वनेनैव विधिनेति भवत्ययमपूर्व्वविधिः।

पक्षे प्राप्तस्य तु यो विधिः स नियमविधिः। यथा व्रीहीनवहन्यादित्यादिः। अनेन हि विधिना अवघातस्य न वैतुष्यार्थत्वं बोध्यते, अन्वयव्यतिरेकसिद्धत्वात्। किन्तु नियमः। स चाप्राप्तांशपूरणम्, वैतुष्यस्य हि नानोपायसाध्यत्वात्। यस्यां दशायामवघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन

---

विधिर्यन्नप्रतिपादकवाक्यम्। तथाच यागादेर्विधिज्ञानात् प्राक् प्रत्यक्षप्रमाणेन ज्ञानसम्भवेऽपि तस्य स्वर्गादिफलकत्वेन ज्ञानं विधिं विना न जायत एवेत्यत्यन्ताप्राप्तप्रापकत्वं विधेरिति भावः। अपूर्व्वविधिरिति। अपूर्व्वस्य प्राक् तदर्थत्वेनाननुभूतस्य विधिरित्यर्थः। उदाहरति यथेति। तत्र लक्षणं योजयति यागस्य हीति।

नियमः पाक्षिके सतीति व्याचष्टे पक्षे इति। रागाभावपक्षे इत्यर्थः। विधिः प्रापकवाक्यम्। नियमविध्युदाहरणमाह यथेति। अवहन्यादिति। अवपूर्व्वको हन्तिर्वैतुष्यानुकूलाघातविशेषार्थः। तत्र नियमविधिलक्षणं योजयति अनेन हीति। वैतुष्यार्थत्वं तुषापाकरणप्रयोजनकत्वम्। अन्वयेति। अवघातसत्त्वे वैतुष्यं तद्व्यतिरेके च सतुषत्वमित्यन्वयव्यतिरेकाभ्यामवघातस्य वैतुष्यं प्रति कारणतायाः प्रत्यक्षप्रमाणसिद्धत्वादित्यर्थः। नियमः अवघातस्यावश्यकत्वम्। एतदेवाह स चेति। अप्राप्तांशस्य पक्षतोऽप्राप्तस्य अवघातस्य पूरणम् सम्बन्धव्यवच्छेदरूपमवश्यमाचरणम्।

ननु वैतुष्यस्यान्वयव्यतिरेकाभ्यामवघातजन्यत्वावधारणात् कुतो वैतुष्यार्थिनः पक्षतोऽवघातस्याप्राप्तत्वसम्भव इत्यत आह वैतुष्यस्य हीति। नानोपायेति। अवघातेनेव नखदलनादिनापि वैतुष्यसम्भवेन परस्परनिरपेक्षनानाकारणजन्यत्वादित्यर्थः। अत एकशक्तिमत्त्वेन तेषां कारणत्वात् कार्य्यगतवैजात्याङ्गीकाराद्वा न परस्परव्यभिचार इति बोध्यम्। ग्रहीतुमाश्रयितुम्। आरभते उद्युङ्क्ते। तद्विधानात्मकं तद्विधानस्वरूपम्। तर्हि कीदृशो विधिवाक्यार्थ इत्यत आह

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । पक्षे अप्राप्तत्वादशायामवघातविधानमिति यावत् । न त्वपूर्व्वविधावित्यत्यन्ताप्राप्तयागविधानमिति ।

उभयस्य युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः । यथा पञ्च पञ्चनखा भक्ष्या इति । इदं हि वाक्यं न

---

अतश्चेति । विधेर्नियमार्थत्वादित्यर्थः । नियम एवेति । अवघातेनैव व्रीहीणां वैतुष्यं सम्पादयेदित्येवंरूप इत्यर्थः ।

यद्यपि नियमविधौ विधेयस्यावश्यम्भाव एव फलं न पुनरितरनिवृत्तिः, तथापि परस्परनिरपेक्षसाधनेष्वेकस्मिन् साधने अवश्याश्रयणीयत्वेन विहिते साधनान्तरस्य वैफल्यादेव निवृत्तिरर्थसिद्धेत्यवघातेनैवेत्यवघातान्वित एवकारः प्रयोज्यः । अतएव मन्त्रैरेवेति प्रागुक्तम् । अपूर्व्वव्यक्तमाह पक्षे इति । एवञ्च नियमस्य स्वायोगव्यवच्छेदस्य विधिर्नियमविधिपदार्थः । अपूर्व्वविधितोऽस्य वैलक्षण्यं दर्शयति न त्विति ।

तत्र चान्यत्रेति व्याचष्टे उभयस्येति । तद्वाक्यप्रतिपन्नस्य तदितरस्य चेत्यर्थः । युगपत्प्राप्तौ युगपदुपस्थितियोग्यत्वे । योग्यत्वञ्च अन्यतरोपस्थितावन्यतरस्याबाधितत्वम् । नियमस्थले तु एकस्याश्रयणे अन्यस्य प्रयोजनाभावेन बाधितत्वान्न युगपत्प्राप्तिः । परिसङ्ख्यायां पञ्चपञ्चनखभक्षणप्राप्तावपि तदितरपञ्चनखभक्षणस्य विजातीयतृप्त्यन्तरजनकतया तत्कामस्य तद्रूपप्रयोजनसम्भवादबाधितत्वमिति द्वयोरपि युगपत्प्राप्तिसम्भवः । इतरव्यावृत्तिपरः उपदिष्टसजातीयस्य उपदिष्टेतरस्य सम्बन्धव्यवच्छेदाशयोच्चरितः । एतेन पञ्चपञ्चनखेतरस्याज्ञाद्भक्षणेऽपि न प्रत्यवाय इति सिध्यति । अतएव भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदत इति मनुना पञ्चनखेष्विति निर्द्धारणं कृतम् । एवञ्चाप्राप्तायास्तदितरनिवृत्तेः प्रापकतया अस्या अपि अप्राप्तप्रापकत्वरूपसामान्यधर्म्मवत्त्वात् विधित्वमक्षुण्णम् । तदेव दर्शयति परिसङ्ख्या विधिरिति ।

उदाहरति यथेति । पञ्च पञ्चसङ्ख्यकाः । यद्यपि—

श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥

इति मनुना येषां पञ्चनखानां भक्ष्यत्वमुक्तं तथापि श्वाविच्छल्यकपदयोर्द्वयोरपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

भक्षणविधिपरम्, तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्। पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसङ्ख्याविधिः।

सा च परिसङ्ख्या द्विविधा। श्रौती लाक्षणिकी चेति। तत्र अत्र ह्येवावपन्तीत्यत्र श्रौती परिसङ्ख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्।

---

शल्लकीवाचकत्वादीषद्भेदमङ्गीकृत्य मनुना षट्सङ्ख्यात्वमभिहितं तद्भेदानादरे तु पञ्चत्वमेव घटते। अतएव स्मृत्यन्तरे शशकः शल्लकी गोधा खड्गी कूर्मस्तु पञ्चमः। भक्ष्यान् पञ्च नखेष्वाहुरित्यादिना पञ्चानामेव भक्ष्यत्वमुक्तम्।

भक्षणविधिपरं शशकादिपञ्चनखपञ्चकभक्षणविधायकम्। रागत इति। रागप्राप्तस्य प्राप्तत्वाभावेन विधानासम्भवादिति भावः। अपूर्व्वविधित्वं निराकृत्य नियमविधित्वमपि निराकरोति नापीति। नियमपरं पञ्चनखपञ्चकभक्षणावश्यम्भावविधायकम्। तथात्वे बाधकमाह पञ्चनखापञ्चनखेति। पञ्चविधपञ्चनखतदितरपञ्चनखेत्यर्थः। युगपत्प्राप्तेः युगपत्प्राप्तियोग्यत्वात्। पक्षे प्राप्त्यभावात् पाक्षिकप्राप्त्यभावात्। शशकादिपञ्चनखेतरपञ्चनखभक्षणप्राप्तौ शशकादिपञ्चनखपञ्चकभक्षणस्याबाधितत्वेनाप्राप्त्यभावादिति यावत्। अत इति। यतोऽस्य नापूर्व्वविधित्वं नापि नियमविधित्वं सम्भवति अत इत्यर्थः। प्रकारान्तराभावादिति भावः। इदं पञ्च पञ्चनखा भक्ष्या इति वाक्यम्। अपञ्चनखेति। शशकादिपञ्चविधपञ्चनखेतरपञ्चनखेत्यर्थः। परिसङ्ख्याविधिरिति। परिसङ्ख्याया निर्दिष्टेतर निवृत्तिर्विधिरित्यर्थः। अन्ययोगव्यवच्छेदको विधिरिति यावत्।

परिसङ्ख्यां विभजति सा चेति। द्वैविध्यं दर्शयति श्रौतीति। शब्दाभिधेयेत्यर्थः। लाक्षणिकी लक्षणया बोध्या। श्रौतीमुदाहरति तत्रेति। तयोः श्रौतीलाक्षणिक्योर्मध्ये इत्यर्थः। अत्र ह्येवेति।

अत्रायं विस्तरः। अस्ति कश्चित् प्रकृतिभूतो यागविशेषः। तत्र पवमानादिसंज्ञकनानास्तोत्रलक्षणानि सामानि नैयत्येन विहितानि। तस्यां प्रकृतौ स्तोमाख्यमन्त्राणां यावत्यः सङ्ख्या निर्द्दिष्टास्तद्विकृतिभूतक्रतुषु क्वचित्तदधिकामन्त्रसङ्ख्या विहिता। कुत्रचिच्च प्राकृतमन्त्रसङ्ख्यातो न्यूनसङ्ख्या विहिता। एकविंशेनातिरात्रेण प्रजाकामं याजयेत्। त्रिनवेनौजस्कामम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एकविंशेन प्रतिष्ठाकामम्। द्वाविंशाः पवमाना ब्रह्मवर्चसकामस्येत्यादि श्रुतिभिः। पवमानादयः स्तोमाख्यसामविशेषाः। तदुक्तं भाष्ये दशमाध्यायपञ्चमपादे—

दश सामसहस्राणि शतानि च चतुर्दश।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः॥
अशीतिशतमाग्नेयं पवमानं चतुःशतम्।
ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगाः॥ इति।

तत्र येषु विकृतिक्रतुषु प्राकृतमन्त्रसङ्ख्यातोऽधिका स्तोममन्त्रसङ्ख्या विहिता ते विवृद्धस्तोमकाः। येषु क्रतुषु पुनर्न्यूना स्तोममन्त्रसङ्ख्या विहिता ते अविवृद्धस्तोमका उच्यन्ते। तेषु सर्व्वेषु प्राकृतानां साम्नां निवृत्तिर्न वेति संशये उपदेशेनातिदेशबाधस्य न्याय्यतया विकृतौ सङ्ख्याविशेषोपदेशेन प्राकृतसाम्नां बाध एवेति पूर्व्वपक्षे दशमाध्यायचतुर्थपादे सिद्धान्तः। विवृद्धस्तोमकेषु प्राकृतसाम्नां न निवृत्तिः। तथाहि प्रकृतौ यावन्तो मन्त्रा गेयत्वेन विहितास्तावतो मन्त्रान् विवृद्धस्तोमकविकृतौ प्राप्य यावता गीतेनाधिकसङ्ख्या पूर्य्यते तावदप्यधिकं गेयं स्यादिति नाधिकसङ्ख्याविधानवैयर्थ्यम्।

विकृतौ हि सङ्ख्याविशेष एव विहितो न पुनर्मन्त्रविशेषोपदेशः कृतः। एवञ्च वैकृतसङ्ख्याविशेषोपदेशेन प्राकृतसङ्ख्याविशेष एव बाध्यताम्। मन्त्रविशेषोपदेशाभावेन कथं प्राकृतमन्त्रा बाध्यन्ते। तदबाधेनापि चरितार्थत्वात्।

अविवृद्धस्तोमकेषु तु विकृतिक्रतुषु प्राकृतस्तोमानां मध्ये कासाञ्चिदृचां बाध एव। तथाहि तत्र प्राकृतानां सर्व्वेषां साम्नामागमने तेषु विकृतिक्रतुषु न्यूनसङ्ख्याविधानवैयर्थ्यं स्यात्। अतो यावता निह्रासेन वैकृतसङ्ख्या सम्पद्यते तावदेव प्राकृतं मन्त्रजातं बाधितव्यम्। अन्यत्प्राकृतमेव स्यात्। तथाच दशमाध्यायचतुर्थपादे सिद्धान्तसूत्रम्—

स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वादिति। स्तोमविवृद्धौ विवृद्धस्तोमके। सङ्ख्यापूरणाय अधिकं गेयं स्यात्। अविवृद्धौ अविवृद्धस्तोमके। द्रव्यविकारः केषाञ्चिन्मन्त्राणां परित्यागस्तेषां श्रुत्यभावादित्यर्थः।

तदेतत् विवृद्धस्तोमके प्रकृतिसम्बन्धिनीरृचं च उपादाय विकृतिविहितसङ्ख्यापूरणाय गानान्तरोपादानमावापः। अविवृद्धस्तोमके प्राप्तानां प्रकृतिसम्बन्धिनीनामृचां मध्ये विकृत्युपदिष्टन्यूनसङ्ख्यानुरोधेन तावत्सङ्ख्यका ऋच उपादाय इतरासामृचां परित्याग उद्वाप उच्यते। एवञ्च वैकृतसङ्ख्यापूरणाय गानान्तरनिवेशनरूप आवापः किं यस्मिन् कस्मिंश्चित् स्तोमशब्दाभिधेयस्तोत्रे कर्त्तव्य उत पवमानाख्यस्तोत्र एव। तथा प्राप्तानां प्राकृतीनामृचां मध्ये वैकृतन्यूनसङ्ख्या-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पञ्च पञ्चनखा भक्ष्या इत्यत्र तु लाक्षणिकी। इतरनिवृत्तिवाचकस्य पदस्याभावात्। अतएवैषा त्रिदोषग्रस्ता। दोषत्रयञ्च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति।

---

नुरोधेन कासाञ्चिदृचां परित्यागरूप उद्वापोऽपि किं यस्मात्कस्माच्चित् स्तोत्रात् कर्त्तव्य उत पवमानाख्यस्तोत्रादेवेति संशये अविशेषादनियम इति पूर्व्वपक्षे प्राप्ते पवमान एवेति सिद्धान्तः। तथाच दशमाध्यायचतुर्थपादे पूर्व्वाधिकरणात् परमेव सिद्धान्तसूत्रम्—

पवमान एव स्यातां तत्रिन्नावापोद्वापदर्शनादिति।

स्यातामावापोद्वापाविति शेषः। दर्शनादिति। तथाच श्रुतिः। त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च। अत्र ह्येवावपन्ति अतएवोद्वपन्तीति। अत्र गायत्र्यादिशब्देन तत्तच्छन्दका ऋच उच्यन्ते। ताश्च पवमानस्तोत्रान्तर्गताः। उदराणि प्रधानस्थानानि। अत्र पवमाने। अतएव पवमानादेव।

तथाच यवावापेन वैकृतसङ्ख्या पूरणीया स्यात् तत्र पवमान एव प्रकृतिप्राप्तगायत्र्यादिच्छन्दस्कानां त्रिस्त्रिरभ्यासेन वैकृतसङ्ख्यापूरणं कार्य्यम्। न तु स्तोत्रान्तरे तथाविधाभ्यासः कर्त्तव्यो नापि पवमाने मन्त्रान्तरसन्निवेशनरूपः आवापः। एवं यत्रोद्वापेन वैकृतसङ्ख्या रक्षणीया स्यात् तत्रापि पवमानस्तोत्रादेव गायत्र्यादिच्छन्दस्कानां कासाञ्चिदृचां परित्यागः कर्त्तव्यो न तु स्तोत्रान्तरादिति भावः।

एवञ्च पवमानस्तोत्रे स्तोत्रान्तरे च आवापोद्वापसम्बन्धप्राप्तौ अत्र ह्येवेति अतएवेत्येवशब्दाभ्यां स्तोत्रान्तरे आवापोद्वापसम्बन्धौ व्यावर्त्त्येते इति शाब्दी परिसङ्ख्येति सिध्यति।

लाक्षणिकीं परिसङ्ख्यामाह पञ्चेति। लाक्षणिकीति। तथाच पञ्चनखपदं शशकादिपञ्चकेतरपञ्चनखलाक्षणिकम्। भक्षधातुश्च भक्षणनिवृत्तिलाक्षणिकः। ततश्च शशकादिपञ्चकेतर-पञ्चनखा अभक्ष्या इति प्रतीतेः शशकादिपञ्चकेतरपञ्चनखभक्षणनिवृत्तिर्लक्षणया बोध्येति लाक्षणिकी परिसङ्ख्या। इतरनिवृत्तेर्लक्षणाधीनत्वे हेतुमाह इतरेति। तथाच तद्वाचकपद-विरहेऽपि तदर्थप्रतीतिर्लक्षणाधीनैवेति भावः।

लाक्षणिक्या एव सदोषत्वमित्याह अतएवेति। यतो लाक्षणिकपरिसङ्ख्यायामन्यार्थतया श्रूयमाणस्य पदस्य मुख्यार्थपरित्यागेनान्यार्थकल्पनमतएवेत्यर्थः। एषा लाक्षणिकी परिसङ्ख्या।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रुतस्य पञ्चनखभक्षणस्य हानात् अश्रुतापञ्चनखभक्षणनिवृत्ति-कल्पनात् प्राप्तस्य चापञ्चनखभक्षणस्य बाधादिति ।

अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठं प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक् । तस्मिद्धं मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात् न मन्त्राम्नानमनर्थकमिति । अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतया अर्थवत्त्वम् ।

तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं सम्भवति तदा तत्रैव विनियोगः । येषान्तु न सम्भवति तेषां यत्र सम्भवति तत्रोत्कर्षः । यथा पूषानुमन्त्रणमन्त्राणामित्युक्तम् ।

---

विशेषयन्नेति । एतेन श्रौतपरिसङ्ख्यायां दोषत्रयं नास्तीति दर्शितम् । मुख्यार्थपरित्यागान्यार्थकल्पनयोरभावात् । रागप्राप्तबाधस्य च शब्दशक्तिमहिम्ना जनितत्वेन दोषपदवाच्यत्वाभावात् । अन्यथा नीलं घटमानयेत्यत्र नीलपदेन घटान्तरव्यावृत्तेस्तत्रापि घटान्तरानयनबाधस्य दोषत्वापत्तेः ।

दोषत्रयं विवृणोति दोषत्रयस्येति । श्रुतेति । श्रुतस्य शब्दप्रतिपन्नार्थस्य हानिः परित्याग इत्यर्थः । अश्रुतेति । अश्रुतस्य शब्दाप्रतीतार्थस्य कल्पना अङ्गीकार इत्यर्थः । प्राप्तेति । प्राप्तस्य प्रमाणविशेषेण कर्त्तव्यतया प्रतीतस्य बाधो व्यवहारव्यावर्त्तनमित्यर्थः ।

लाक्षणिकपरिसङ्ख्यायां दोषत्रयं योजयति श्रुतस्येति । पञ्चनखभक्षणस्य पञ्चपञ्चनखभक्षणस्य । हानात् परित्यागात् । अपञ्चनखेति । शशकादिपञ्चकेतरपञ्चनखेत्यर्थः ।

तेषां दोषाणां शब्दगतत्वमर्थगतत्वं विवेचयति अस्मिंश्चेति । दोषद्वयं श्रुतहान्यश्रुतकल्पने । सिद्धमिति । मन्त्राम्नानमनर्थकं नेति सिद्धमित्यन्वयः । अतश्चेति । मन्त्रद्वारा अर्थस्मरण नियमादित्यर्थः ।

मन्त्राणां क्व प्रयोगसमवेतार्थप्रकाशनरूपार्थवत्त्वेन विनियोग इत्यत आह तत्रेति । तेषु मन्त्रेषु मध्ये इत्यर्थः । यत्र यत्प्रकरणे । तत्प्रकरणपठितानामपि मन्त्राणां तत्रार्थप्रकाशनाख्यप्रयोजनाभावे कुत्रान्वय इत्यत आह येषान्त्विति । यत्र विकृतौ । सम्भवतीति । अर्थप्रकाशनरूपप्रयोजनमिति शेषः । तत्रोत्कर्षस्तत्रैव विकृतौ सम्बन्धः । उदाहरति यथेति । पूषेति पूषानुमन्त्रणमन्त्रा दर्शपौर्णमासप्रकरणपठिताः किन्तु मन्त्राणां पूषपदघटितत्वात् दर्शपौर्णमासयोश्च

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

षेषां क्वापि न सम्भवति तदुच्चारणस्य त्वगत्या अदृष्टार्थत्वम्। सर्व्वथापि तु तेषां नानर्थक्यमिति।

नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। तथाहि उद्भिदा यजेत पशुकाम इति। अत्र हि उद्भिच्छब्दो यागनामधेयम्। तेन च विधेयार्थपरिच्छेदः क्रियते। अनेन हि वाक्येन अप्राप्तत्वात् फलोद्देशेन यागो विधीयते। यागसामान्यस्याविधेयत्वात् यागविशेष एव विधीयते। तत्र कोऽसौ यागविशेष इत्यपेक्षायान्तु उद्भिच्छब्दात् उद्भिद्रूपो याग इति

---

पूषदेवतत्वाभावात् तत्रासमवेतार्थत्वेन तद्भिन्नतौ पूषयाग एवोत्कर्ष इत्यर्थः। इत्युक्तमिति। विनियोगविधिनिरूपणप्रकरणे लिङ्गप्रमाणनिरूपणावसरे इति शेषः।

अर्थप्रकाशनाख्यप्रयोजनासम्भवे त्वाइत्येषामिति। हुं फडादिमन्त्राणामित्यर्थः। अदृष्टार्थत्वम् अदृष्टमात्रार्थत्वम्। न त्वर्थप्रकाशनाख्यदृष्टार्थत्वमिति भावः। तथाचोक्तम्—

यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पनमिति।

सर्व्वथा दृष्टार्थत्वे अदृष्टार्थत्वे वा। तेषां निखिलमन्त्राणाम्। नानर्थक्यं न निष्प्रयोजनत्वम्।

क्रमप्राप्तं नामधेयाख्यवेदभागं सार्थक्यप्रतिपादनपुरःसरं निरूपयति नामधेयानामिति। विधेयेति। विधेयस्य अर्थस्य परिच्छेदकतया इतरेभ्यो व्यवच्छेदकतयेत्यर्थः। अर्थवत्त्वं सार्थकयम्। तदेव दर्शयति तथाहीति। तेन उद्भिच्छब्दरूपनामधेयेन। विधेयार्थेति। विधेयस्य अर्थस्य यागस्य परिच्छेदो विधेयस्य तन्नामकत्वप्रतिपादनमुखेन यागान्तराद्व्यवच्छेद इत्यर्थः।

अत्र हेतुमाह अनेन हीति। हि यस्मात्। यागो विधीयते यजेतेति विधिना। ननु यजेतेति सामान्यश्रुत्या किं यागसामान्यं विधीयते यागविशेषो वेत्यत्राह यागसामान्यस्येति। अविधेयत्वात् विधेयत्वासम्भवात्। न्यूनाधिकवित्तव्ययायाससाध्यानां सर्व्वेषां यागानां पशुफलजनकत्वाङ्गीकारे सम्भवति लघूपाये गुरूपायेष्वननुष्ठानलक्षणाप्रामाण्यापत्तेस्तत्र तत्र फलान्तरश्रवणाच्च पशु फलोद्देशेन यागमात्रस्य विधातुमशक्यत्वादिति भावः। उद्भिद्रूप उद्भिन्नामकः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञायते। उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात्।

तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत्। तत्र हि उत्पलशब्दस्यार्थादुत्पलादन्यो वाच्योऽर्थोऽस्ति नीलगुणः। लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम्। उद्भिच्छब्दस्य तु यज्यवगतयागविशेषादन्यो वाच्योऽर्थोऽस्ति, विशेषवाचित्वात्तस्य।

अतस्यार्थान्तरवाचित्वाभावेन नामधेयस्य नीलोत्पलशब्दवन्न सामानाधिकरण्यम्। किन्तर्हि वैश्वदेव्यामिक्षेत्यत्रामिक्षावत्। वैश्वदेवीशब्दस्य हि देवतातद्धितान्तत्वात्तद्धितस्य च सास्य देव-

---

ननूद्भिच्छब्दात् कुतस्तन्नामकत्वलाभ इति जिज्ञासायां हेतुमाह उद्भिदा यागेनेति। सामानाधिकरण्येन उद्भिद्यागपदयोरेकविभक्तिकत्वेन। नामधेयान्वयात् नामधेयत्वान्वयात्। नान्यः सामानाधिकरण्येनान्वयस्य ऐरावतेन गजेन यातीत्यादौ व्युत्पत्तिसिद्धत्वादिति भावः।

ननु नीलोत्पलमित्यादौ सामानाधिकरण्येऽपि नामधेयाप्रतीतेरत्रापि नामधेयत्वं न प्रतीयतामित्यत आह तस्य चेति। सामानाधिकरण्ये वैलक्षण्यं दर्शयति तत्राहीति। उत्पलेति। उत्पलशब्दस्यार्थो यदुत्पलं तस्मादन्यो नीलशब्दस्य वाच्योऽर्थोऽस्तीत्यन्वयः। कोऽसौ वाच्योऽर्थ इत्यत्राह नीलगुण इति। नीलशब्दस्य नीलगुण एव शक्तत्वादिति भावः। तर्हि कथं द्रव्यविशेषवाचकशब्देनास्य सामानाधिकरण्यं सम्भवतीत्यत आह लक्षणया त्विति। तथाच यत्र विशेषणस्य तदितरवाचित्वमपि सम्भवति तत्र सामानाधिकरण्यं न नामधेयप्रतिपादकम्। अतएव पाचको देवदत्त इत्यादावपि न नामधेयत्वापत्तिः। तत्रापि विशेषणस्य देवदत्तेतरवाचकत्वस्यापि सत्त्वादिति भावः। उद्भिदित्यत्र तद्वैलक्षण्यं दर्शयति उद्भिच्छब्दस्य त्विति। यज्यवगतेति। यजधातूपस्थितेत्यर्थः।

अत इति। विशेषवाचित्वादित्यर्थः। अर्थान्तरेति। सामान्यवाचित्वाभावेनेत्यर्थः। नामधेयस्य उद्भिदादिशब्दस्य। उद्भिच्छब्दस्य सामानाधिकरण्ये दृष्टान्तमाह किन्तर्हीति। किं किमिवेत्यर्थः। आमिक्षावत् आमिक्षाशब्दस्य सामानाधिकरण्यमिव। सौसादृश्यं प्रति



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तेति सर्व्वनामार्थे स्मरणात् सर्व्वनाम्नाञ्चोपस्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायामामिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

> आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
>
> आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति।
>
> तथा—श्रुत्यैवोपपदस्यार्थः सर्व्वनाम्ना प्रतीयते।
>
> तदर्थस्तद्धितेनैवं त्रयाणामेकवाक्यता॥ इति।

---

पादयति वैश्वदेवीति। देवतातद्धितेति। देवतार्थतद्धितेत्यर्थः। सर्व्वनामार्थे इति। अस्येतीद मृशब्दस्य सर्व्वनामत्वादिति भावः। स्मरणात् पाणिनिस्मरणात् उपस्थितविशेषेति। बुद्धिस्थ विशेषेत्यर्थः।

यद्यपि सर्व्वनाम्नोबुद्धिस्थवाचकत्वं तथापि इदमृशब्दस्य सन्निहितबुद्धिस्थवाचकतया विशेषे त्युक्तम्। आमिक्षापदसान्निध्यादिति। तथाच आमिक्षाया एव सन्निहितबुद्धिस्थत्वादिति भावः। उक्तार्थेवार्त्तिककारोक्तं प्रमाणयति यथाहुरिति।

आमिक्षामिति। एष विश्वदेवपदोत्तरं श्रूयमाणस्तद्धितः सास्य देवतेति सूत्रविहिताण्प्रत्ययः आमिक्षां देवतायुक्तां विश्वदेवदेवताकां वदति बोधयति। ननु विश्वदेवपदोत्तरश्रूयमाणतद्धित प्रत्ययेन विश्वदेवदेवताकत्वमेव प्रतिपाद्यते न त्वामिक्षायास्तथात्वम्। तत्कथं तद्धित आमिक्षां देवतायुक्तां वदतीत्युच्यत इत्यत आह आमिक्षापदेति। आमिक्षापदस्य सान्निध्यात सन्निहितत्वात् तस्यैव आमिक्षापदस्यैव विषयार्पणं विषयसमर्पकत्वम्। स्वार्थस्य आमिक्षारूपस्य विश्वदेवदेवता कत्वप्रतिपत्तिविषयताबोधकत्वमिति यावत्।

वार्त्तिककारधृतं कारिकान्तरमपि प्रमाणयति तथेति। श्रुत्यैवेति। सर्व्वनाम्ना अस्येतीदम्पदेन श्रुत्यैव षष्ठीविभक्त्यैव उपपदस्य सम्बन्धिपदस्य आमिक्षापदस्येति यावत्, अर्थः प्रतीयते। अस्येतीदम्पदेन सन्निहितामिक्षायाः सम्बन्धितयोपस्थापनादिति भावः। ननु वैश्वदेवीपदे इदम्पदरूपसर्व्वनामपदस्य षष्ठीविभक्तेश्चाश्रवणात् कथं तदर्थत्वेन आमिक्षारूपोपपदार्थः प्रत्येतव्य इत्यत आह तदर्थ इति। तयोरिदम्पदषष्ठीविभक्त्योरर्थस्तद्धितेन प्रतीयते। एवम् उक्तप्रकारेण त्रयाणां विश्वदेवपदतद्धितोपस्थाप्यसर्व्वनामपदषष्ठ्येकवचनानाम् एकवाक्यता मिलितार्थबोधकत्वे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यम् एवं सामान्यस्याविधेयत्वाद्यज्यन्तर्गतविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम्। तस्मिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। यथाहुः। तद्धीनत्वाद्यागविशेषसिद्धेरिति।

नामधेयत्वञ्च निमित्तचतुष्टयात्। मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति। तत्रोद्भिदा यजेत पशुकाम इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। तथाहि उद्भिच्छब्दस्य गुणसमर्पकत्वे

---

ख्यर्थः। अत सर्व्वनाम्ना आमिक्षापदार्थः प्रतीयत इत्युक्त्या वैश्वदेवीपदस्यानन्यपरत्वं किन्त्वामिक्षापरत्वमेव। आमिक्षापदन्तु तत्परिचायकमिति सिध्यति।

दृष्टान्तदार्ष्टान्तिकयोः सादृश्यं विशदयति तस्मादिति। सामान्यस्य यागसामान्यस्य। यज्योति। यजधातूपस्थितयागविशेषबोधकत्वेनेत्यर्थः। उपसंहरति तस्मिद्धमिति। नामधेयस्य विधेयार्थपरिच्छेदकत्वे वार्त्तिककारसम्मतिमाह यथाहुरिति। ननु नामधेयार्थोन विधीयत इति पूर्व्वपक्षे वार्त्तिककारैरुक्तम्। तद्धीनत्वादिति। यागविशेषसिद्धेर्यागविशेषज्ञानस्य नामधेयाधीनत्वादित्यर्थः। तथाच यजेतेति विधिना यागसामान्यस्य विधातुमशक्यतया यागविशेषविधानमेव निश्चेयम्। स च नियमो नामधेयमन्तरेण न सम्भवतीति तस्य विधेयार्थपरिच्छेदकत्वमिति भावः।

ननु सोमेन यजेतेत्यादीनामपि नामधेयत्वमस्त्वित्यतस्तत्कल्पनानिमित्तमुपदर्शयति नामधेयत्वञ्चेति। निमित्तचतुष्टयादिति। तथाच वक्ष्यमाणनिमित्तचतुष्टयान्यतमनिमित्तसद्भाव एव सामानाधिकरण्येनान्वयकल्पनया नामधेयत्वमङ्गीकार्यं नान्यथेति भावः।

निमित्तचतुष्टयमाह मत्वर्थेत्यादि। उदाहरणमाह तत्रेति। तेषु निमित्तेषु मध्ये। मत्वर्थलक्षणां विशदयति तथाहीति। गुणसमर्पकत्वे गुणमात्रविधायकत्वाङ्गीकारे। गुणविधानं व्रीहिभिर्यजेतेत्यत्र व्रीहिरूपगुणवत् उद्भिद्रूपगुणविधानम्। मयुगाकेः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यागानुवादेन तावन्न गुणविधानं युज्यते, फलपदानर्थक्यापत्तेः।

न चानेन वाक्येन फलं प्रति यागविधानं तस्मिंश्च गुणविधानं युज्यते, वाक्यभेदापत्तेः। नापि गुणफलविधानं सम्भवति, परपदार्थविधानेन विप्रकर्षार्थविधानापत्तेः। धात्वर्थस्य स्वरूपेणाविधानात् तदुद्देशेन वा अन्यस्य कस्यचिदविधानाद्धातोरत्यन्तपारार्थ्यापत्तेश्च यज्यानर्थक्यापत्तेश्च।

---

हेतुमाह फलपदेति। पशुरूपफलबोधकपदेत्यर्थः। तथाच फलश्रवणात् तत्साधन यागस्यैव विधातुमुचितत्वमिति भावः।

ननु फलोद्देशेन विधेयीभूते यागे उद्भिद्रूपगुणविधानमस्त्वित्येतन्निराकरोति न चेति। युज्यत इत्यनेनान्वितम्। तस्मिन् यागे। गुणविधानम् उद्भिद्गुणविधानम्। अयुक्तत्वे हेतुमाह वाक्येति। विधेयभेदेन यागेन पशुं भावयेत् यागश्चोद्भिदा भावयेदितिवाक्यभेदापत्तेरित्यर्थः। ननु दध्नेन्द्रियकामस्येत्यादाविव गुणफलविधानमस्त्वित्यपि निराकरोति नापीति। परपदार्थेति। उद्भिदा यजेत पशुकाम इत्यत्र विधीयमाने उद्भिद्रूपगुणे तदुत्तरवर्त्तिपशुपदार्थस्य फलत्वेन विधानेनेत्यर्थः। विप्रकर्षेति। मध्यपतितेनाविधेयेन यागेन व्यवधानात् गुणफलयोरसन्निहितत्वापत्तेरित्यर्थः। दध्नेन्द्रियकामस्य जुहुयादित्यत्र तु गुणफलयोः सन्निकृष्टतया न विप्रकर्षार्थविधानदोष इति भावः।

स्वरूपेण यागत्वेन। तथाच आश्रयत्वेन प्रतिपादनेऽपि नात्यन्तपारार्थ्यव्याघात इति भावः। ननु दध्ना जुहोति दध्ना होमं भावयेदित्यादावश्रयघटितस्यापि यागस्य उद्देश्यतया यथा नात्यन्तपारार्थ्यमङ्गीक्रियते तथात्रापीत्यत आह तदुद्देशेन वेति। अन्यस्य उद्भिद्भिन्नस्य। अविधानादिति। तथाच धात्वर्थोद्देशेन गुणविधाने धात्वर्थस्य भाव्यत्वेन नात्यन्तपारार्थ्यमिति भावः। पारार्थ्यं विध्यर्थभावनायां करणत्वेनानन्वयः। करणत्वेनान्वयस्यैव स्वातन्त्र्यात्। तथाचोक्तम्—

विधेये चानुवादे च यागः करणमिष्यते।
तत्समीपे हवीयान्तस्तद्यावित्वं न मुञ्चति॥ इति।

दध्ना होमं भावयेदित्यादौ तु दध्नेति करणनिर्द्देशेन करणाकाङ्क्षाविरहात् करणत्वेनान्वयमलभमानस्य होमस्य पारार्थ्येऽपि नात्यन्तपारार्थ्यम्। कर्मतयापि भावनायां साक्षादन्वयात्। प्रकृते तु दध्नेन्द्रियकामस्येत्यादाविव यागाश्रितेन उद्भिदः करणत्वेन पशुं भावयेदित्यर्थपर्य्यव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न हि तदनेन कारकं समर्प्यते, गुणस्य करणत्वेनान्वयात्। नापि फलम्, पशोर्भाव्यत्वेनान्वयात्। अथ गुणफलसम्बन्ध-विधाने यागस्याश्रयत्वेनान्वय इति चेन्न यजेतेत्यत्र आश्रयत्व-वाचकपदाभावात्। फलाय विधीयमानो गुणो यत्र कारकता-मापद्यते स आश्रयः तत्त्वञ्चाश्रयत्वम्। करणत्वञ्च निष्कृष्टा शक्तिरिति लाघवम्।

---

स्थाने धात्वर्थस्य यागस्य भावनायां साक्षादन्वयो न सम्भवति। किन्तु भावनान्वितकरणत्वाश्रय त्वेनेत्यत्यन्तपारार्थ्यमिति भावः। यज्यानर्थक्येति। यजधातुप्रयोगानर्थक्यापत्तेरित्यर्थः।

यज्यानर्थक्यं व्यञ्चयति न हीति। अनेन यजधातुना। समर्प्यते प्रतिपाद्यते। करणा काङ्क्षा न निवर्त्त्यत इति भावः। गुणस्येति। तृतीयान्ततयोपस्थितत्वादिति भावः। फलमिति। समर्प्यत इत्यन्वयः। तथाच भाव्याकाङ्क्षापि यजिना न निवर्त्त्यते। पशुमिति द्वितीयान्ततयोपस्थितस्य पशोर्भाव्यत्वप्राप्तेरिति भावः।

ननु दध्नेन्द्रियकामस्येत्यादिगुणफलविधौ यथा यागस्याश्रयत्वेनान्वयः सिद्धान्तितस्तथा प्रकृतेऽप्याश्रयत्वेनान्वयोऽस्तु तेनाप्यानर्थक्यपरिहारः स्यादित्याशङ्कते अथेति। निराकरोति नेति। आश्रयत्ववाचकेति। तथाच तद्वाचकपदाभावात् कथं तदुपस्थितिरिति भावः। नन्‌द्भिदा यजेत पशुकाम इत्यत्र उद्भिदा यागेन पशुं भावयेदिति नामधेयत्वसिद्धान्तेऽपि करणत्ववाचक पदविरहात् कथं करणत्वेनोपस्थितिरङ्गीक्रियते। अथोच्यते। लक्षणया करणत्वं लभ्यत इति। तर्हि आश्रयत्वमपि लक्षणया लभ्यतामित्याशङ्कते अथेति।

आश्रयत्वकरणत्वलक्षणयोर्गौरवलाघवं प्रदर्शयिष्यन् आश्रयत्वं निर्व्वक्ति फलायेति। फलाय इन्द्रियादिफलाय। गुणो दध्यादिः। यत्र होमादौ। कारकतां करणताम्। तत्त्वमाश्रयत्व मिति। तथाच फलजनकत्वेन विधीयमानगुणविशेषस्य करणभावापत्तिस्थानत्वमाश्रयत्वमिति तत्त्वेन लक्षणायां लक्ष्यतावच्छेदकगौरवमिति भावः। करणत्वेन लक्षणायां ततो लाघवमुप दर्शयति करण त्वञ्चेति। निष्कृष्टा शक्तिरिति। निष्कृष्टं कारकमित्यर्थः। तथाच साधकतमं करणमिति सूत्रेण करणस्य साधकतमकारकतया निरूपितत्वात् लक्ष्यतावच्छेदकलाघवमिति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च गुणफलसम्बन्धविधाने करणीभूतो गुणस्तन्निष्ठं करणत्वं वा फलोद्देशेन विधेयम्, तत्राद्ये पक्षे करणत्वस्य गुणोपसर्ज्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या। तस्य तृतीयार्थतया प्रत्ययार्थत्वात् प्राधान्येनोपस्थितेः।

यद्यपि गुणनिष्ठं करणत्वं फलोद्देशेन विधेयं तदापि फलभावनायां करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या, तृतीयाभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य

---

ननु तथापि कारणत्वमनियतं विवक्षातः कारकाणि भवन्तीति न्यायेन करणत्वस्यापि प्रयोक्तुरिच्छाधीनत्वात्। तथाचाहुः:

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदास्मृतम्॥
वस्तुतस्तदनिर्द्देश्यं नहि वस्तु व्यावस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति।

तस्मात् करणत्वमप्यनिष्टमेवेत्यतो दोषान्तरमाह किञ्चेति। गुण इत्यत्र विधेय इति लिङ्गव्यत्ययेनानुषङ्गः तन्निष्ठं गुणनिष्ठम्। तथाच यागाश्रितेन उद्भिदा पशुं भावयेदित्यत्र किं पशुफलोद्देशेन करणीभूतोद्भिद्गुणो गुणो विधीयते किंवा तत्फलोद्देशेन तद्गुणस्य करणत्वं विधीयते इत्यनयोः पक्षयोः कतरः पक्षोऽभिमत इति तात्पर्य्यम्।

तत्र क्रमेण दूषणमाह तत्राद्य इति। गुणोपसर्ज्जनत्वेन गुणेन सहाप्रधानभावेनान्वितत्वप्रकारेण। तस्य करणत्वस्य। प्राधान्येनेति। तथाच गुणे त्वन्याय्यकल्पनेति न्यायेन प्रधानीभूतपदार्थस्य लक्षणया अप्रधानभावेनोपस्थितिर्न न्याय्येति भावः।

द्वितीयपक्षेऽपि दूषणमाह यद्यपीति। तत्रापि लक्षणैव दूषणमित्याह तदापीति। करणत्वेनेति। तृतीयाश्रुत्या उद्भिदा करणेन पशुं भावयेदिति करणभावेनैव उद्भिदोऽन्वययोग्यतेति भावः। गुणफलसम्बन्धविधाने तु नोद्भिदः करणभावेनान्वयः। यजधात्वर्थस्यानन्वयापत्तेः। किन्तु उद्भिन्निष्ठकरणत्वस्य करणभावेनान्वयः यागाश्रितेन उद्भिन्निष्ठकरणत्वेन पशुं भावयेदित्येव मर्थस्याङ्गीकारावश्यकत्वात्। करणत्वस्य करणत्वन्तु तृतीयाश्रुत्यप्रत्ययमिति लाक्षणिकमेव, तृतीयया करणत्वस्यैव प्रतिपादनादिति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करणत्वेनैवान्वययोग्यत्वात्। करणशब्देनाभिहितं हि करण-कारकं तत्त्वेनान्वययोग्यं न तृतीयाभिहितम्। करणशब्दादिव तृतीयातस्तृतीयोत्पत्तिप्रसङ्गात्।

अतश्च करणत्वेनान्वययोगाद्गुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। लक्षणया चोपस्थितकरणत्वस्य करणीभूतस्य वा गुणस्य फलभावनायां यत्करणत्वं तदपि लक्षणयैव वाच्यम्। श्रूयमाणतृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात्।

---

एतमेवाभिप्रायं व्यञ्जयन् लाक्षणिकत्वं विशदयति तृतीयाभिहितस्येति। तृतीयया करण कारकत्वमेवाभिधीयते तस्यैव क्रियान्वययोग्यत्वं न तु तस्य करणकारकस्य करणत्वप्रकारेणान्वय योग्यता। अवश्यं तृतीयाभिहितकरणत्वस्य करणताङ्गीकारादिति भावः।

ननु यदि यागाश्रितेनोद्भिन्निष्ठकरणत्वेन पशुं भावयेदित्येव वाक्यं प्रयुज्येत तदा करणत्वेनेति तृतीयया करणत्वप्रतीतेरावश्यकतया करणत्वस्य करणताप्रकारेणान्वयधीरवश्यम्भाविनी। तत्कथं करणत्वस्य करणत्वोपस्थितिर्लक्षणयैवेत्युच्यत इत्यत आह करणशब्दाभिहितमिति। करणेति करणेति प्रातिपदिकाभिहितमित्यर्थः। करणकारकं करणत्वम्। तत्त्वेन करणत्वेन। अन्वय योग्यमिति। करणबोधकप्रातिपदिकोत्तरवर्त्तिना तृतीयया करणत्वप्रतीतेः करणत्वस्य करणता प्रतिपत्तिः सुघटैवेति भावः।

प्रकृते तु तन्न सम्भवतीत्याह नेति। तृतीयाभिहितमिति। करणकारकमित्यनुषङ्गः। तथाच तृतीयया यत्करणत्वं प्रत्याय्यते तस्य पुनः करणत्वं कथं प्रतीयेत, तत्प्रत्यायकतृतीयान्तर श्रवणादिति भावः। यदि तु तथाङ्गीक्रियते तदा तृतीयोत्तरं तृतीयान्तरोत्पत्तिप्रसङ्ग इत्याह करणशब्दादिति। अत इति। करणत्वकरणताया अप्रतीतेरित्यर्थः।

लक्षणान्तरमपि तदुभयपक्षयोरापततीत्याह लक्षणया चेति। उद्भित्पदोत्तरं श्रूयमाणाया स्तृतीयायाः करणत्वकरणताबोधकताऽऽपल्लक्षणया प्रधानीभूतार्थबोधिकायास्तस्या गुणीभूतार्थ बोधकताऽऽपल्लक्षणया चेत्यर्थः। करणत्वस्य करणतायाः करणत्वस्य। गुणमात्रस्येति। कारक विभक्तेः स्वप्रकृतिभूतपदवाच्यस्य तत्कारकताबोधकत्वनियमेन उद्भित्पदोत्तरं श्रूयमाणया तृतीयया

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतएव तन्त्ररत्ने चतुर्थे, करणीभूतगोदोहादेः पशर्थत्वं समभिव्याहारादित्युक्तम्। अतश्च गुणफलसम्बन्ध विधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्म्मविधानमेव स्वीकार्य्यम्।

तथा सति हि यजिना लघुभूतं करणत्वमात्रं लक्ष्यते। उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफलसम्बन्ध-

---

उद्भिद्रूपगुणस्यैव करणत्वमभिधीयते, न तूद्भिद्गुणनिष्ठकरणतायाः करणत्वम्। नापि करणीभूतस्योद्भिद्गुणस्य करणत्वमभिधीयते। तथात्वे तृतीयया असकृत्करणतावोधकतापत्तेः। करणीभूतत्वविशेषणस्यापि तृतीयाणश्रवणात्। एवञ्च करणत्वकरणताप्रत्यायकत्वाङ्गीकारः, करणीभूत स्योद्भिदः करणत्वाङ्गीकारो वा लक्षणामन्तरेण न सम्भवतीति भावः।

अतएवेति। विभक्त्यर्थवलेन गुणस्य फलार्थत्वाङ्गीकारे लक्षणापत्तेरेवेत्यर्थः। करणीभूत गोदोहेति। गोदोहेनापः प्रणयेत् पशुकामस्येत्यादाविव्यर्थः। समभिव्याहारात् सहोच्चारणात्। न तु विभक्तिवलादिति भावः। अतश्चेति। एतस्मात् प्रवन्धादित्यर्थः। यद्वा अत इति वहुदोषवत्त्वादिति सामानाधिकरण्यम्। एतस्मानद्दोषवत्त्वादित्यर्थः। गुणसमर्पकत्वे गुणविधित्वाङ्गीकारे। गुणविशिष्टेति। उद्भिद्विशिष्टयागविधानमित्यर्थः।

एवकारेण यागानुवादेनोद्भिद्गुणविधानं फलजनकत्वेन यागं विधाय तत्र तथोद्भिद्गुण विधानं, फलजनकत्वेन यागाश्रितोद्भिन्निष्ठकरणत्वविधानञ्च यत्प्राङ्निराकृतं तदेव स्मारितम्। आद्ये फलपदानर्थक्यात्, द्वितीये वाक्यभेदात्, अन्त्ये च धातोरत्यन्तपारार्थ्यादिवहुदोषवत्त्वाच्च। तथाच पूर्व्वोक्तप्रकारवितयासम्भवात् गुणविधित्वकल्पना मत्वर्थलक्षणामन्तरेण न सम्भवत्येवेति भावः।

नन्वत्रापि पक्षे लक्षणावश्यकत्वादेतत्पक्षाङ्गीकारे का विनिगमनेत्यतो लाघवमेव विनिगमकं प्रदर्शयति तथा सति हीति। ननु गुणफलसम्बन्धविधानपक्षेऽपि यागस्याश्रयत्वं लक्ष्यमिति को विशेष इत्यत उक्तं लघुभूतमिति। आश्रयत्वापेक्षया करणत्वस्य लघुतायाः प्राक् प्रदर्शितत्वादिति भावः। ननूद्भिदता यागेन पशुं भावयेदित्यर्थो न सम्भवति यजिनेति यच्चवगतयागस्य करणत्वाप्रतीतेरित्यत आह करणमात्रं लक्ष्यत इति। मात्रपदेन यथा गुणफलसम्बन्धविधानपक्षे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधानाल्लाघवं भवति। धातोरत्यन्तपारार्थ्यादिकन्तु न भवत्येव। धात्वर्थस्यैव फलोद्देशेन विधानात्।

अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्म्मविधानं स्वीकार्य्यम्। उद्भिद्वता यागेन पशुं भावयेदिति। कर्म्मनामधेयत्वेन उद्भिच्छब्दस्य न मत्वर्थलक्षणा। मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसम्भवात्। उद्भिदा यागेन पशुं भावयेदिति।

सम्भवति च मुख्ये अर्थे लक्षणा आश्रयितुं न युक्ता। सन्निकृष्टविधानन्तु समानमेव। न चैवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातः। गुणविधित्वे मत्वर्थलक्षणापत्तेरिति वाच्यम्। सोमपदस्य लतायां रूढत्वेनयागनामधेयत्वानुपपत्तेः अगत्या लक्षणाश्रयणात्। उद्भिच्छब्दस्यतु नैवं वाच्योऽर्थः कश्चित् प्रसिद्धः।

---

त्तरवर्त्तिन्यां तृतीयायां लक्षणाद्वयं तथा लक्षणाद्वयं नेति दर्शितम्। मत्वर्थमात्रं वैशिष्ट्यमात्रम्। लाघवमिति। गुणफलसम्बन्धविधाने लक्षणात्रयम्। गुणविधित्वे तु लक्षणाद्वयम्। तथा तत्पक्षे लक्ष्यतावच्छेदकस्य बहुपदार्थघटितत्वमेतत्पक्षे स्वल्पपदार्थघटितत्वमिति लाघवमित्यर्थः। तथा धातोरत्यन्तपारार्थ्यदोषाभावोऽपि विनिगमक इत्याह धातोरिति। विधानात् करणत्वेन प्रतिपादनात्।

गुणविधित्वे उपायान्तराभावान्मत्वर्थलक्षणैव स्वीकार्य्येत्याह अतश्चेति। नामधेयत्वकल्पने तु लक्षणा नास्त्येवेत्याह नामधेयत्वेनेति। मुख्यवृत्त्यायजिसामानाधिकरण्यं प्रकाशयति उद्भिदा यागेनेति।

मुख्ये अर्थे सम्भवति लक्षणाश्रयणमन्याय्यमित्याह सम्भवति चेति। गुणविधौ नामधेयविधौ च धात्वर्थस्य करणत्वेनान्वयात् सन्निकृष्टविधानमविशिष्टम्। न तु गुणफलसम्बन्धविधाविव विप्रकृष्टविधानमित्याह सन्निकृष्टविधानन्त्विति। नन्वेवं सोमेन यजेतेत्यत्रापि मत्वर्थलक्षणा भयात् नामधेयविधानमस्त्वित्यापादनं निराकरोति नचेति। लतायां लताविशेषे। एवं सोमशब्दस्येव। वाच्योमुख्यः।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

उद्भिद्यते अनेनेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारित्वमुपपत्तेः। तस्मिद्दसुद्भिच्छब्दस्य मत्वर्थलक्षणाभयात् यागनामधेयत्वमिति।

चित्रया यजेत पशुकाम इत्यत्र चित्राशब्दस्य वाक्यभेदभयात् कर्मनामधेयत्वम्। तथाहि न तावदत्र गुणविशिष्टयागविधानं सम्भवति। दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमित्यनेन विहितत्वात् यागस्य विशिष्टविधानानुपपत्तेः।

प्राप्तयागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः।

---

ननूद्भिद्यते भूमिरनेनेति व्युत्पत्त्या उद्भिच्छब्दः खनित्रपरोऽस्त्वित्यत आह उद्भिद्यत इति। गुण इव उद्भित्पदाभिमतखनित्र इव। फलोद्भेदनेति। उद्भिद्यते प्रकाश्यते फलमनेनेति व्युत्पत्त्यविशेषादिति भावः। मत्वर्थलक्षणाभयात् यागनामधेयत्वसिद्धान्तमुपसंहरति तस्मि इमिति।

वाक्यभेदभयान्नामधेयत्वमुदाहरति चित्रयेति। वाक्यभेदं विशदयति तथाहीति। गुणविशिष्टेति। चित्रद्रव्यविशिष्टयागविधानमित्यर्थः। असम्भवे हेतुमाह दधिमध्विति। पयो दुग्धम्। धाना भृष्टयवाः। तत्संसृष्टमिति। संसृष्टं मिश्रितं तदस्तु प्राजापत्यं प्रजापतिदेवतमित्यर्थः। अनेन उपक्रमगतवाक्येन। विहितत्वात् प्राजापत्ययागस्येति शेषः। यागस्य तद्यागस्य।

ननु द्रव्यदेवताप्रकाशकवाक्यान्तरस्योपक्रमे श्रवणाच्चित्रयेतिवाक्यस्योत्पत्तिविधित्वं मा भूत्। परन्तु प्रक्रान्तप्राजापत्ययागस्याश्रुतफलकस्य फलसम्बन्धो विचित्रद्रव्यरूपगुणसम्बन्धश्चानेन विधीयतामित्यत आह प्राप्तयागस्येति। वाक्यभेद इति। यागेन पशुं भावयेत् तच्च यागं चित्रयेत्येवंरूपः।

चित्रया यजेतेति न प्रक्रान्तप्राजापत्येष्टिगुणविधायकम्। तत्र गुणस्योत्पत्तिविशिष्टतया आकाङ्क्षाविरहेण गुणान्तरविधानासम्भवात्। किन्तु प्रकृतिभूताग्नीषोमीयपशोश्चित्रत्वस्त्रीत्वगुणविधायकम्। पशुकामपदञ्च न फलकामनापरम्। किन्तु अग्नीषोमीयं पशुमर्ज्जयितुकामपरम्। तथाच पशुकामः अग्नीषोमीयपश्वाहरणकामश्चित्रया चित्रत्वस्त्रीत्वविशिष्टेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अथ चित्राशब्दात् चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्म्मत्वात् प्रकृते दध्यादिद्रव्यके कर्म्मण्यविनियोगान्नानेन वाक्येन प्रकृते कर्म्मणि गुणविधानम्, किन्तु प्राणिद्रव्यके कर्म्मणि। तत्रास्य वाक्यस्यानारभ्याधीतत्वादनारभ्याधीतानाञ्च "प्रकृतौ वाऽद्विरुक्तत्वा" दिति न्यायेन प्रकृतिगामित्वात् प्राणिद्रव्यकानाञ्च यागानां "दैक्षस्य चेतरे" ष्विति न्यायेनाग्नीषोमीयप्रकृतिकत्वात् तदनुवादेनानेन वाक्येन गुणो विधीयते।

दैक्षस्य ज्योतिष्टोमाङ्गत्वेन स्वतन्त्रफलाकाङ्क्षाया अभावात्

---

पशुना यजेतेति वाक्यार्थं इत्याशङ्कते अथेति। स्वभावत इति। योन्यादिमत्त्वं स्त्रीत्वमित्येव स्वाभाविकम्। तच्च प्राणिनामेव भवति। शब्दादीनान्तु स्त्रीत्वमौपचारिकं शब्दसंस्कारकमेवेति भावः। तच्च प्रक्रान्तयागीयगुणो न भवितुमर्हतीत्याह प्रकृते इति। अविनियोगात् गुणत्वे नान्वयायोगात्। अनेन चित्रया यजेतेति वाक्येन।

तर्हि कुत्रास्य गुणस्य विनियोग इत्यत आह किन्त्विति। प्राणिद्रव्यके पशुद्रव्यके। पशुद्रव्यकयागानां बहुत्वात् कतमस्मिन् विनियोग इत्यत आह तत्रेति। तेषु पशुद्रव्यकयागेष्वित्यर्थः। अनारभ्याधीतत्वात् पशुयागविशेषाप्रकरणीयत्वात्। प्रकृतौ वेति। तृतीयाध्यायषष्ठपादे अनारभ्याधीतानां किं प्रकृतिमात्रविषयत्वं किंवा प्रकृतिविकृत्युभयविषयत्वमिति संशये "सर्व्वार्थमप्रकरणा" दिति सूत्रेण प्रकरणाभावात् सर्व्वविषयत्वमेवेति पूर्व्वपक्षयित्वा "प्रकृतौ वा अद्विरुक्तत्वा" दिति सूत्रेण द्विरुक्तत्वाप्रसक्त्या प्रकृतिविषयत्वमेव सिद्धान्तितम्।

इति न्यायेन एतत्सूत्रेण। का तत्र प्रकृतिरित्यत आह प्राणिद्रव्यकाणामिति। दैक्षस्येति। दैक्ष इति अग्नीषोमीय उच्यते, दीक्षासम्बन्धादिति भाष्यम्। इतरेषु पशुषु अग्नीषोमीयस्यातिदेश इत्यर्थः। अतएव भाष्यम्—तस्मादग्नीषोमीयः पशूनां प्रकृति रिति। इति न्यायेन अष्टमाध्यायप्रथमपादीये तत्सूत्रेण। तदनुवादेन यजेतेति यजिना अग्नीषोमीययागानुवादेन। वाक्येन चित्रया यजेतेति वाक्येन। गुणः अग्नीषोमीयपशोश्चित्रत्वस्त्रीत्वरूपो गुणः।

ननु चित्रया यजेत पशुकाम इत्यस्य पशुकामपदेन तदीयफलसम्बन्धविधायकत्वे वाक्यभेदापत्तिरित्यत आह दैक्षस्य ज्योतिष्टोमाङ्गतया फलाकाङ्क्षाविरहात् तत्र फलसम्बन्धविधानसम्भवेनैक

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पशुकामपदं न फलसमर्पकम्। किन्तु अग्नीषोमीयपश्वर्ज्जनाङ्गतया प्राप्तकामनानुवादः। तथाच न वाक्यभेद इति चेन्न। तथापि द्वैच्यानुवादेन चित्रत्वविधाने वाक्यभेदात्। विशिष्टकारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव। कारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च।

कामपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्वे आन-

---

नास्ति कुतस्तमादाय वाक्यभेद आपादनीय इत्याह द्वैचस्येति। तर्हि पशुकामपदं किमर्थकमित्याह किन्त्विति। अग्नीषोमीयेति। अग्नीषोमीयस्य पशोर्यदर्ज्जनं क्रयादिरूपं तदङ्गतया तज्जनकतया प्राप्ता या कामना अर्ज्जनेच्छा तदनुवाद इत्यर्थः।

तथाच पशुकामः पशुलिप्सुः चित्रया यजेत। यागार्थं विविधवर्णां स्त्रियं पशुमाहरेदिति तात्पर्य्यम्। एवं सति फलसम्बन्धमादाय न वाक्यभेद आपादनीयः। फलकामनाया अविधेयत्वादित्याह तथाचेति। आशङ्कां निराकरोति नेति। तथापीति। उक्तरीत्या फलसम्बन्धस्य विधेयत्वानङ्गीकारेऽपीत्यर्थः।

ननु चित्रत्वं स्त्रीत्वञ्च न पृथक् विधीयते येन वाक्यभेदः स्यात् किन्तु चित्रत्व स्त्रीत्वविशिष्टं यत्करणकारकं तदेव विधेयमिति न वाक्यभेद इत्यत आह विशिष्टेति। गौरवलक्षण इति। करणस्य धर्म्मद्वयवत्त्वादिति भावः। इदमापाततः। वस्तुतो वाक्यद्वयमेव स्यात् करणकारकस्याविधेयत्वादित्याह कारकस्यापीति। प्राप्तत्वेन पशुना यजेतेति प्रधानविधौ तृतीयान्तपशुपदेन पशोस्तत्करणत्वस्य च प्राप्तत्वेन। विशिष्टविधानेति। धर्म्मद्वयविशिष्टकरणकारकविधानस्यानुपपत्तिरित्यर्थः।

तथाच चित्रत्वं स्त्रीत्वञ्चेति गुणद्वयमेव भवता विधातव्यम्। तयोश्च गुणयोः "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति न्यायेन परस्परासम्बन्धान्निरपेक्ष्येण चित्रत्वं स्त्रीत्वञ्च विधेयमिति वाक्यभेद एव। विविधवर्णेन पशुना यजेत स्त्रीरूपेण च यजेतेत्येवंरूप इति भावः। अगत्या वाक्यभेदोऽपि श्रेयानित्यतो दोषान्तरमाह कामपदस्येति। स्वरसतस्तात्पर्य्यतः। फलपरस्य फल कामनेच्छया उच्चरितस्य। सर्व्वत्रैव श्रुतौ अमुकाकामपदस्य अमुककामनावति प्रयोगात् तत्रैव तात्पर्य्यानुमानादिति भावः।

कामनानुवादत्वे यागकरणीभूतपशुकामनानुवादत्वे। आनर्थक्यापत्तेरिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्थक्यापत्तेश्च । नियमतः पश्वञ्जनकामनापि न भवति । कामनातः प्रागेव केनचिद्दत्ते पशौ तदभावात् । तथाच पशुकामपदस्य नित्यवच्छ्रवणबाधः ।

देवस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च । आमिक्षायागानुवादेन वाजिनविधानवत् । कृष्ण-

---

पशुकामपदपरित्यागे चतिविरहान्निष्प्रयोजनत्वापत्तेरित्यर्थः । तथाच निष्प्रयोजनतया अनुवादः सदोष एव स्यादिति भावः । दोषान्तरमप्याह नियमत इति । अव्यभिचारेणेत्यर्थः । कदा न भवतीत्यत्राह कामनात इति । यद्युच्यते यदा कामना स्यात्तदेव गुणविधिरिति । तत्राह तथाचेति । नित्यवच्छ्रवणेति । यदातदादिपदरहितत्वादिति भावः । बाध इति । चित्रया यजेत यदा पशुकाम इत्यनभिधाय पशुकाम इत्यविशेषिताभिधानात्तद्बाध इत्यर्थः ।

दोषान्तरमाह देवस्येति । उत्पत्तिशिष्टेति । उत्पत्तिविधिबोधितेत्यर्थः । यो दीक्षितोऽग्नीषोमीयं पशुमालभेतेत्युत्पत्तिविधिबोधितस्य पशोः "छागस्य वपयानुब्रूही"ति मन्त्रलिङ्गेन पुंस्त्वावच्छिन्नच्छागत्वप्रतीतेः । तथाचोक्तं सप्तमाध्यायप्रथमपादे शास्त्रदीपिकायाम्—

मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते ।
क्लृप्तया रूढिशक्त्या च यश्छागस्यैव वाचकः ॥
तेन तं तादृशं गृह्णन् विधिरात्माविरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥

अतएव छागोऽनादेशे पशुरिति स्मृत्या सामान्यतः पुंस्त्वावच्छिन्नच्छागत्वेनैव पशुः परिभाषितः । शाखान्तरे अजोऽग्नीषोमीयः पशुरिति श्रुतेश्चेति भावः ।

गुणान्तरावरुद्धे गुणविधानासम्भवे दृष्टान्तमाह आमिक्षेति । वाजिनविधानवदिति । द्वितीयाध्यायद्वितीयपादे श्रूयते सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमिति । तत्र वाजमन्नमामिक्षारूपमस्त्येषामिति वाजिनो विश्वेदेवाः । तेभ्यो वाजिनमामिक्षावशिष्टं जलं दद्यादिति प्रतीयते । अत्र संशयः । किमामिक्षागुणके वैश्वदेवयागे वाजिनगुणोऽपि विधीयते, उत कर्मान्तरमिति । तत्रोभयगुणको वैश्वदेवयाग इति पूर्वपक्षे उत्पत्तिशिष्टामिक्षागुणावरुद्धे-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सारङ्गोऽग्नीषोमीय इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारङ्गवर्णनावरुद्धे चित्रत्वस्यानारभ्याधीतेन सामान्यशास्त्रेण विधानानुपपत्तेश्च । पाञ्चदश्यावरुद्ध इव साप्तदश्यविधानम् ॥

अथ माभूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम् । सारस्वती मेषीति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुण-विधानं स्यात् । चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्र-

---

वैश्वदेवयागेवाजिनगुणस्यानवकाशात् वाजिभ्योवाजिनमिति कर्म्मान्तरमेवेति सिद्धान्तितम् । यथोक्तं न्यायमालायाम् । "उत्पत्तिशिष्टेनामिक्षाद्रव्येणावरुद्धे विश्वदेवयागे वाजिनद्रव्यस्योत्पन्नशिष्टस्य प्रवेशाभावादिति" । शास्त्रदीपिकायाञ्चोक्तम्—

आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाश्रुतेः ।
उत्पन्ने वाजिनं वाक्यात् तेन तद्दूर्बलं मतम् ॥ इति

स्त्रीत्वस्येव चित्रत्वगुणस्यापि अग्नीषोमीयपशौ विधानासम्भवं प्रतिपादयति कृष्णसारङ्ग इति । अग्नीषोमीयः पशुः कृष्णसारङ्गः कृष्णवर्णबहुलनानावर्णयुक्तः । इति पतच्छ्रुत्या । विशेषविहितेन अग्नीषोमीयत्वोल्लेखविहितेन । ननु चित्रया यजेतेत्यस्य सामान्यमुखस्यापि अनारभ्याधीतत्वेन प्रकृतिविषयत्वावधारणादग्नीषोमीयविषयत्वमेवेति विशेषविहितत्वाविशेष इत्यत आह सन्निधिपठितेनेति । अग्नीषोमीयपशुसन्निधौ पठितत्वेनेत्यर्थः । तथाच सन्निधिपठितस्या-न्तरङ्गत्वेन झटिति तद्विषयत्वावगमादसन्निधिपठितस्य सामान्यस्य तदितरविषयत्वमेव वक्तव्यम् । न तद्विषयत्वं तस्य कृष्णसारङ्गत्वगुणावरुद्धत्वादिति भावः ।

अत्र दृष्टान्तमाह पाञ्चदश्येति । तथाच सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्यविधेः प्रकृतिविषयत्वसम्भवेऽपि प्रकृतौ पञ्चदशसामिधेनीविधानेन तदवरुद्धायां प्रकृतावप्राप्तावकाशत्वा विकृतिविषयत्वं सिद्धान्तितं तृतीयाध्यायषष्ठपादे । तथा प्रकृतेऽपीति भावः । अग्निसमिन्धनार्था ऋचः सामिधेन्य इति न्यायमाला ।

प्रकारान्तरेण गुणविधित्वं शङ्कते अथेति । सारस्वतीति । सारस्वती मेष्यतिरात्रे इति नवमाध्यायप्रथमपादस्थश्रुतिविहितेत्यर्थः । मेष्यनुवादेनेति । परिशात्राया मेष्याश्रितत्वगुण विधानमित्यर्थः । गुणभेदकृतवाक्यभेदपरिहारकं हेतुमाह स्त्रीकारकेति । तथाच स्त्रीत्वस्यापि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधानात् । न च प्राकृतेन कृष्णसारङ्गवर्णेन नैराकाङ्क्ष्यात्र चित्रत्वविधानं युक्तमिति वाच्यम् । उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेन्नैवम् ।

नहि चित्रयेत्येकेन पदेन स्त्रीकारकस्योद्देशश्चित्रत्वस्य च विधानं सम्भवति । एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः । उद्देश्य-विधेयभावस्यानेकपदसाध्यत्वात् । अतएव वषट्कर्त्तुः प्रथमभक्ष इत्यत्र विशिष्टभक्षणविधिर्नतु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये ।

मेष्यनुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च । उभय-

---

परिप्राप्ततया अविधेयत्वादिति भावः । प्राकृतेनेति । अग्नीषोमीयपशुसम्बन्धिनेत्यर्थः । अग्नीषोमीयपशोः पशुमात्रप्रकृतित्वादिति भावः । कृष्णसारङ्गेति । प्रकृतिवद्विकृतिरिति न्यायेन मेष्यामपि अग्नीषोमीयगुणस्य प्राप्तिसम्भवादिति भावः । नैराकाङ्क्ष्यात् वर्णविशेषविषय-काकाङ्क्षाविरहात् । उपदिष्टेनेति । चित्रया यजेतेति वाक्यस्यानारभ्यविधानस्य प्रकृतिभूता ग्नीषोमीयपशुविषयकत्वसम्भवेऽपि तत्रगुणविशेषस्य विशेषविधिविहितत्वेन पुंस्त्वविशिष्टत्वस्य बोधितत्वेन चावकाशमलभमानस्य विकृतिभूतस्त्रीपशुविषयकत्वावश्यकत्वे मेष्या एव तदुपदेश विषयत्वमिति भावः ।

एकप्रसरतेति । मिलितार्थविधायकतेत्यर्थः । तद्भङ्गलक्षणस्तद्बाधरूपो यो वाक्यभेदस्तदा-पत्तेरित्यर्थः । एकपदोपात्तयोः पदार्थयोरुद्देश्यविधेयभावासम्भवे हेतुमाह उद्देश्येति । अनेक-पदेति । विभिन्नपदबोध्यत्वादित्यर्थः । तत्र सिद्धान्तसम्मतिमाह अतएवेति । प्रथमभक्ष इति समस्तैकपदत्वेन तदुपस्थितयोः प्राथम्य भक्षणयोर्मध्ये भक्षणानुवादेन प्राथम्यविधानासम्भवं हेतूकृत्य प्राथम्यविशिष्टभक्षणस्य विधेयत्वं सिद्धान्तितमित्यर्थः । तृतीये तृतीयाध्यायतृतीय-पादे ।

ननु मेष्या यजेतेति विधिप्राप्तमेष्यनुवादेन चित्रत्वमेव विधेयं नतु तत्पदप्राप्त-स्त्रीकारकोद्देशेनेत्यत आह मेष्यनुवादेनेति । फलपदेति । पशुकाम इति फलकीर्त-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विधाने वाक्यभेदात् । प्रकृतस्य यागस्य फलाकाङ्क्षाया अनिवृत्तेः । विश्वजिन्न्यायेन फलकल्पने गौरवम् ।

दधिमध्वित्याद्युत्पत्तिवाक्ये नैतस्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च । चित्राशब्दस्य तु कर्म्मनामधेयत्वे प्रकृतस्य कर्म्मणः फलाकाङ्क्षस्य फलसम्बन्धमात्रकरणान्न वाक्यभेदः ।

प्रकृताया इष्टेरनेकद्रव्यकत्वेन चित्राशब्दस्य तत्रोपपत्तेः । तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्म्मनामधेयमिति ।

अग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रशब्दस्य कर्म्मनामधेयत्वं तत्प्रख्यशास्त्रात् । तस्य गुणस्य प्रख्यापकस्य शास्त्रस्य विद्य-

---

नानर्थक्यापत्तेरित्यर्थः । ननु परिप्राप्तमेषीयागे फलमपि विधातव्यमित्यत आह उभयेति । प्रकृतस्येति । यत्प्रकरणे चित्रया यजेतेत्याम्नातं तस्य प्राजापत्ययागस्येत्यर्थः । ननु फलाकाङ्क्षायां प्राजापत्येष्टेः स्वर्गफलकत्वं कल्पनीयं विश्वजिता यजेतेत्यत्रेवेत्यत आह विश्वजिन्न्यायेनेति । गौरवम् अध्याहारकल्पनागौरवम् ।

अपिच उत्पत्तिवाक्यस्य स्वप्रकरणीयवाक्यैः सहैकवाक्यतैव न्याय्या । एवञ्च यदि प्राजापत्येष्टिप्रकरणपठितस्यापि चित्रयेति वाक्यस्य यागान्तरीयगुणविधित्वं मन्यते तदा तेन वाक्येन सह प्राजापत्यीत्पत्तिवाक्यस्य एकमहावाक्यताविरहात् तदितरप्रकरणपठितवाक्यैरेव सह एकमहावाक्यत्वात् चित्रावाक्यस्य च तन्महावाक्यघटकत्वाभावाद्वाक्यभेदः स्यादित्याह दधिमध्विति । नामधेयत्वपक्षे वाक्यभेदाभावं प्रतिपादयति चित्राशब्दस्येति ।

ननु प्रजापत्येष्टेश्चित्रानामकत्वं कथमुपपन्नमित्यत आह प्रकृताया इति । चित्राशब्दस्येति । नानाद्रव्यार्थकत्वादिति भावः । वाक्यभेदभयनिबन्धनं नामधेयत्वमुपसंहरति तत्सिद्धमिति ।

तत्प्रख्यशास्त्रवशान्नामधेयत्वं दर्शयति अग्निहोत्रमिति । नन्वयमग्निरूपगुणविधायको न नामधेयमित्यत आह तत्प्रख्यशास्त्रादिति । तं विधित्सितगुणं प्रचष्टे वक्तीति तत्प्रख्यम् । तथाविधशास्त्रादित्यर्थः । तत्प्रख्यशास्त्रादित्यस्य स्वयमेवैतमर्थं

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत्। तथाहि विधिना तावत्तदेव विधेयं यत् प्रकारान्तरेणाप्राप्तम्। अप्राप्ते शास्त्रमर्थवदिति न्यायात्। अग्निहोत्रशब्दस्य गुणविधित्वे यो गुण स्तेन विधेयः स शास्त्रान्तरेण प्राप्तः।

कथमिति चेत् शृणु। यदि तावदग्नौ होत्रमस्मिन्निति सप्तमी समासमाश्रित्य होमाधारत्वेनाग्निर्विधेय इत्युच्यते तदा यदाहवनीये जुहोतीत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम्।

अथाग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्य अग्निरूप-देवता अनेन समर्प्यत इति तत्र शास्त्रान्तरेण प्राप्तत्वात्। किन्त-च्छास्त्रान्तरमिति चेत्। अत्र केचित्। यदग्नये च प्रजापतये च सायं जुहोतीति शास्त्रान्तरेण होमानुवादेनाग्निप्रजापत्यो र्विधाना न्नाग्निहोत्रपदं देवतासमर्पकम्।

---

व्यक्तं दर्शयति तथेत्यादि। यावदिति। व्यक्तोऽर्थ इत्यर्थः। तत्प्रख्यशास्त्रसद्भावे गुणविधित्वं कुतोनेत्यतस्तद्दर्शयति तथाहीति।

विधेः प्रमाणान्तरप्राप्तविधायकत्वे हेतुमाह अप्राप्त इति। अप्राप्ते प्रमाणान्तरेणानवगते पदार्थे शास्त्रं तद्विधायकवाक्यम् अर्थवत्सार्थकम्। तथाच प्राप्तांशविधायकशास्त्रमनर्थकमिति भावः। यो गुणोऽग्निरूपः। तेन अग्निहोत्रं जुहोतीति वाक्येन। शास्त्रान्तरेण प्राप्त इति। तथाच तद्विधायकत्वे विधेरानर्थक्यमिति भावः।

कथमिति। कथं प्राप्त इत्यर्थः। प्राप्तिं प्रतिपादयति शृण्विति। होमस्याधार भूतः अग्निर्देवता वा भवता विधीयताम् उभयथैव शास्त्रान्तरपरिप्राप्तत्वादानर्थक्यमिति प्रदर्शनाय आद्ये परिप्राप्तत्वं प्रतिपादयति यदि तावदिति। सप्तमीसमासं सप्तम्यन्तपदपूर्वकव्यधिकरणबहुव्रीहि समासम्। प्राप्तत्वात् होमाधारत्वेनाग्नेः प्राप्तत्वात्।

द्वितीयमाशङ्क्य निराकरोति अथेति। चतुर्थीसमासं चतुर्थ्यन्तपदपूर्वकव्यधिकरणबहुव्रीहि समासम्। निराकरोति तत्रेति। प्राप्तत्वात् अग्नेर्देवतात्वेनापि प्राप्तत्वात्। शास्त्रान्तरं पृच्छति किन्तावदिति। अत्र प्रश्ने उत्तरमाह अत्र केचिदिति। शास्त्रान्तरेण अग्निहोत्रयाग प्रकरणीयेन। विधानादिति। देवतात्वेनेति शेषः। चतुर्थ्या देवतात्वावगमात्।


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न चोभयविधाने वाक्यभेदः, परस्परनिरपेक्षविधाने हि वाक्यभेदः स्यात् अग्नये जुहोति प्रजापतये जुहोतीति । प्रत्येकं विधिव्यापारात् । चशब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्याख्यातान्वयान्न वाक्यभेदः ।

अतएव ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यविहितदक्षिणानुवादेन गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति वाक्येन गवादीनां विधानं दशमोक्तं सङ्गच्छते । परस्परसापेक्षाणां गवादीनां विधानेन वाक्यभेदाभावात् । अन्यथा दक्षिणानुवादेनानेकेषां गवादीनां विधानं नैवं सङ्गच्छते ।

अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयो न तु समु-

---

उभयविधाने अग्निप्रजापत्योरुभयोर्देवतात्वविधाने । वाक्यभेदप्रकारं निर्दिशति अग्नये जुहोतीति । तथाविधाने वाक्यभेदहेतुमाह प्रत्येकमिति । विधिव्यापारात् विधेयत्वप्रतिपादनात् । अत्र तु न निरपेक्षविधानं किन्तु चकारश्रुतेः सापेक्षविधानमेवेत्याह चकारश्रवणादिति । परस्परसापेक्षस्य समुच्चितस्य । आख्यातान्वयात् जुहोतीत्याख्यातस्य युगपदन्वयात् । तथाच अग्निप्रजापत्युद्देशकहोमेन भावयेदिति बोध इति भावः ।

साधकमाह अतएवेति । अनुवादेन विधीयमानानेकपदार्थस्य चकारश्रुतिबलात् परस्परसापेक्षतयैव विधेयत्वादेवेत्यर्थः । द्वादशशतं द्वादशाधिकशतमिति माधवाचार्य्याः । तच्च प्रथमोऽश्वितस्य गौर्द्रव्यस्येति सिद्धान्तितं दशमाध्यायतृतीयपादे ।

दक्षिणेति । ऋत्विग्भ्यो दक्षिणां ददातीत्यनेनैव दक्षिणायाः प्राप्तत्वात् दक्षिणापदं तदनुवादाय । परन्तु चकारसमुच्चितानां गवादीनामेव विधानमिति भावः । दशमोक्तं दशमाध्यायतृतीयपादोक्तम् । ननु गवादीनामनेकेषां विधानाद्वाक्यभेदः स्यादित्यत आह परस्परेति । अन्यथा परस्परनिरपेक्षाणां विधाने । एवम् अग्निप्रजापत्योर्निरपेक्षविधानवत् । न सङ्गच्छते इति । वाक्यभेदापत्तेरिति भावः ।

ननु चकारात् किमग्निप्रजापत्योः साहित्येनैकदेवतात्वं किंवा देवतयोस्तयोरेकयागसम्बन्धरूपः समुच्चय इत्यत आह अग्निप्रजापत्योश्चेति । समुच्चयः परस्परनिरपेक्षतया एकयागसम्बन्धः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

च्चितयोर्देवतात्वम्। पृथक्कारकविभक्तिश्रवणात्। चकारार्थस्य चकारार्थेनान्वयात्। तस्याप्राधान्यात्। अतश्च नाग्नीषोमादिवत् अग्निप्रजापत्योर्देवतात्वमिति।

अन्ये त्वाचार्य्या आहुः। अग्नये च प्रजापतये च सायं जुहोतीति वक्यं नाग्नेः प्रापकं होमानुवादेन प्रजापतिविधानात्। नच विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम्। विधिना हि तदेव विधीयते यत्प्रकारान्तरेणाप्राप्तम्।

तत्र यथानेन वाक्येन सायंकालो न विधीयते। सायं जुहोतीति वाक्यान्तरेण प्राप्तत्वात्। तथाग्निरपि न विधीयते

---

समुच्चितयोः साहित्यावच्छिन्नयोः। पृथगिति। अग्नये प्रजापतये इति चतुर्थीद्वयश्रवणादित्यर्थः। तथाच—तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन देवहि। देवताया विधिस्तत्र दुर्बलन्तु परं परमिति चतुर्थ्या देवतात्वावगमकतया चतुर्थीद्वयेन देवताद्वितयं प्रत्याय्यत इति भावः।

चकारार्थस्य समुच्चयस्य। चकारार्थेन चकारान्वितचतुर्थ्यर्थेन। अन्वयादिति। तथाच चकारद्वयेन चतुर्थ्यर्थोद्देश्यतायाः समुच्चयात् एकस्मिन् यागे उद्देश्यताद्वयं लभ्यते। अतो न साहित्यमिति भावः। तस्य चकारान्वितचतुर्थ्यर्थस्य। अप्राधान्या दिति। प्रकृत्यर्थस्यैव प्राधान्यादिति भावः। तथाच एकस्यामुद्देश्यक्रियायां यदिप्रधानयोः प्रकृत्यर्थयोरन्वयः स्यात् तदा एकक्रियान्वयित्वरूपं साहित्यं स्यात्। प्रकृते च अग्नये च प्रजापतये चेति विभक्त्यन्तोत्तरवर्त्तिचकारद्वयेन होमस्य अग्न्युद्देश्यकत्वं प्रजापत्युद्देश्यकत्वञ्च प्रतीयत इत्युद्देश्यताद्वितयस्य समुच्चयान्न साहित्यमिति सिध्यति। एतदेवाह अतयेति। देवतात्वमेकदेवतात्वम्। इतीति। एतदन्तं केषाञ्चिन्मतम्।

शास्त्रदीपिकामतमाह अन्ये त्विति। प्रजापतिविधानात् प्रजापतिमात्रविधानात्। विनिगमनाविरहात् प्रजापतिमात्रविधाने हेत्वभावात्। उभयविधानम् अग्नेः प्रजापतेश्च विधानम्। प्रकारान्तरेण प्रमाणान्तरेण।

प्रमाणान्तरप्राप्तस्याविधेयत्वे दृष्टान्तमाह तत्र यथेति। तत्र तद्विधिवाक्ये। सायंकालस्याविधेयत्वे हेतुमाह सायं जुहोतीति। सायं प्रातर्जुहोतीति श्रुताविति शेषः। अग्नेरविधेयत्वबीजं,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रवर्णादेव प्राप्तत्वात्। मन्त्रवर्णस्यापि देवतासम्पर्कत्वमस्त्येव। अतएवोपांशुयागे विष्ण्वादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम्।

नन्वेवं प्रजापतिदेवतया अग्नेर्बाधः स्यात्। चतुर्थ्यां हि प्रजापतेर्देवतात्वमवगम्यते अग्नेस्तु मान्त्रवर्णिकम्। तत्र साऽस्य देवतेति देवतात्वेन तद्धितस्मरणवत् यद्यपि देवतात्वे चतुर्थीस्मरणं नास्ति सम्प्रदाने चतुर्थीति सम्प्रदाने तस्याः स्मरणात्। तथापि त्यज्यमानद्रव्योद्देश्यत्वं तावद्देवतात्वं तच्च सम्प्रदानस्वरूपान्त

---

प्रमाणान्तरप्राप्तत्वं दर्शयति अग्निरिति। मन्त्रवर्णादिति। अग्निहोत्रहोमे "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति सायं जुहोति, "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति प्रातर्जुहोतीति श्रुतिभ्यां सायं प्रातर्होमयोर्यथाक्रमं यौ द्वौ मन्त्रौ विनियुक्तौ तयोः सायं होममन्त्रघटकाग्निशब्दादित्यर्थः। मन्त्रवर्णस्यापि देवताप्रतिपादकत्वमाह मन्त्रवर्णस्यापीति। तत्र सिद्धान्तं दर्शयति अतएवेति। मान्त्रवर्णिकं मन्त्रवर्णावगतम्।

प्रजापतये चेति विधिवाक्यावगतचतुर्थ्यन्तपदबोध्यप्रजापतेर्देवतात्वावगमात् तद्विरोधेनाग्नेर्देवतात्वेनोपस्थानं न सम्भवति। किन्तु इन्द्रपदाद्गार्हपत्योपस्थितिरिव लक्षणया मन्त्रस्थाग्निपदात् प्रजापत्युपस्थितिरस्तु। तत्कथमग्नेर्देवतात्वमङ्गीक्रियत इत्याशङ्कते नन्वेवमिति। प्रजापतिदेवतयेति। विधिवाक्यावगतयेति शेषः। अग्नेर्बाधो मन्त्रस्थाग्निपदादग्नेरनुपस्थानम्। किन्तु लक्षणया प्रजापत्युपस्थितिरेव स्यादित्याशयः।

ननु मन्त्रवर्णावगताग्निदेवतया प्रजापतिबाध एव कुतो न स्यादित्यत्र विनिगमकमाह चतुर्थ्यां हीति। देवतात्वस्य चतुर्थ्यवगतत्वे मन्त्रवर्णावगतत्वे वा को विशेष इत्यत्राह तत्रेति। तयो चतुर्थीमन्त्रवर्णयोर्मध्ये इत्यर्थः। चतुर्थीतो देवताप्रतीतिरस्त्येव मन्त्रवर्णात्तु न देवतात्वं प्रतीयत इति वक्ष्यमाणेनान्वयः। चतुर्थीतो देवताप्रतीतेर्बीजप्रदर्शनायाह साऽस्य देवतेति। देवतात्वे देवताप्रतिपादकत्वे। तद्धितस्मरणवत् तद्धितप्रत्ययानुशासनवत्। चतुर्थीस्मरणं चतुर्थ्यनुशासनम्।

चतुर्थ्या देवतात्वे अनुशासनाभावं प्रतिपादयति सम्प्रदाने चतुर्थीति। इति एतत् सूत्रेण। त्यज्यमानेति। अत्र उद्देश्यत्वं तदेदमित्याद्युपस्थानविषयत्वम्। तेन संप्रदाने विप्रादौ न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्गतम्। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्य सम्प्रदानत्वात्। अतश्चतुर्थीतः सम्प्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव। मन्त्रवर्णात्तु न देवतात्वं प्रतीयते, किन्त्वधिष्ठानमात्रम्। अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः। यथाहुः—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलन्तु परम्परम्॥ इति।

---

देवतालक्षणातिव्याप्तिः। तच्च त्यज्यमानद्रव्योद्देश्यत्वञ्च। सम्प्रदानस्वरूपान्तर्गतं सम्प्रदानलक्षणान्तर्गतम्, सम्प्रदानलक्षणैकदेश इति यावत्।

किं तावत् सम्प्रदानलक्षणमित्यत आह त्यज्यमानेति। प्रतिग्रहीतृत्वं प्रतिग्रहयोग्यतावत्त्वम्। एवञ्च इन्द्रादीनां प्रतिग्रहयोग्यत्वाभावेन न सम्प्रदानत्वम्। किन्तु त्यज्यमानद्रव्योद्देश्यत्वरूपसम्प्रदानलक्षणान्तर्गतधर्मविशेषवत्त्वमिति सिद्धम्। सम्प्रदानैकदेशतयेति। तथाच प्रजापतये जुहोतीत्यादौ चतुर्थी उद्देश्यतामात्रे निरूढलाक्षणिकीति प्रजापत्यादीनां न मुख्यसम्प्रदानत्वम्। किन्त्वनिराकर्तृत्वसम्प्रदानत्वम्। अतस्तेषां देवतात्वं कथञ्चिच्छब्दप्रतिपादितमेव। मान्त्रवर्णिकदेवतात्वस्य तु अनुमेयत्वमेव न शाब्दमित्याह मन्त्रवर्णात्त्विति। मन्त्रस्थशब्दात्त्वित्यर्थः। एतेनास्य शब्दोपात्तत्वं नास्तीति दर्शितम्।

तर्हि मन्त्रवर्णात् किं प्रतीयत इत्यत आह किन्त्विति। अधिष्ठानमात्रं तन्मन्त्रे अग्निबोधकपदस्य विद्यमानतामात्रम्। प्रतीयत इत्यन्वयः। तथाच तन्मन्त्रे अग्निपदस्य विद्यमानत्वात् यद्यसौ मन्त्रः अन्युद्देश्यकत्यागकरणं न स्यात्तदा अस्मिन् मन्त्रे अग्निपदसत्तानुपपन्ना अन्योद्देश्यकत्यागकाले अन्योद्देश्यताबोधकपदप्रयोगानौचित्यादित्यर्थापत्त्या अयं मन्त्रः अन्युद्देश्यकत्यागकरणम् अग्निप्रकाशकत्वात् भूः स्वाहेत्यादिमन्त्राणां भूराद्युद्देश्यकत्यागकरणत्ववदित्यनुमानेन वा तन्मन्त्रस्याग्निदेवताकत्वं प्रतीयत इति भावः। अत इति। शब्दप्रमाणादनुमानादेर्दुर्बलत्वादित्यर्थः। तत्र मीमांसकसम्मतिमाह यथाहुरिति।

तद्धितेनेति। विधिः प्रतिपादनम्। तत्र तेषु मध्ये। परं परमिति। तद्धिताच्चतुर्थी दुर्बला, तद्धितस्य मुख्यवृत्त्या देवताबोधकत्वात्। चतुर्थ्याश्च लाक्षणिकवृत्त्या। चतुर्थीतो मन्त्रवर्णो दुर्बलः। लाक्षणिकत्वेऽपि चतुर्थीबोधितस्य शब्दबोधितत्वात् मन्त्रवर्णस्य तत्कल्पकत्वादित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्ब्बलप्रमाणबोधिताग्नेर्बाधः स्यादिति चेत्, सत्यम्।

स्याद्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात्। विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमणूद्य तत्समुच्चितो होमोद्देशेन विधीयते। समुच्चितोभयविधानापेक्षया अन्यतः प्राप्तमग्निमणूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्।

अतश्च न बाधकत्वं निरपेक्षविधानाभावात्। यथा च तत्मते अग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वं समुच्चयविधानात्। एवंमन्त्रवर्ण-

---

चतुर्थीमन्त्रवर्णयोर्बलाबलसाधनफलमाह अत इति। मन्त्रवर्णस्य चतुर्थीतो दुर्ब्बलत्वादित्यर्थः। प्रबलप्रमाणेति। चतुर्थीरूपेत्यर्थः। दुर्ब्बलेति मन्त्रवर्णेत्यर्थः। तथाच प्रबलप्रमाणबाधितत्वाभावे मन्त्रवर्णादपि देवताविधानं स्यादित्याशयः। सिद्धान्ती पूर्व्वपक्षस्य दृढ़त्वसूचनायाह सत्यमिति ( वक्तुमहं सीत्यर्थः।

विधौ केवलप्रजापतेर्देवतात्वविधाने मन्त्रवर्णागताग्निदेवताबाधः सम्भाव्यते इत्याह स्याद्बाध इति। नेह पुनः केवलप्रजापतिविधानं परन्तु प्रमाणान्तरप्राप्ताग्निदेवतानुवादेन तत्समुच्चितप्रजापतिदेवताविधानम्। तत्कथमग्नेर्बाध इत्याह विधीयमानस्त्विति। ननु सायंहोमीयविधिवाक्यादग्निप्रजापत्युभयविधानमेवास्तु। तेन मन्त्रवर्णप्राप्तमग्निमात्रदेवतात्वं बाध्यतामित्यत आह समुच्चितेति। लाघवादिति। तथाच निरपेक्षोभयविधाने प्राप्ते कर्म्मणीति न्यायेन वाक्यद्वयरूपगौरवम्। अग्निसमुच्चितप्रजापतिविधाने च विधेयतावच्छेदकगौरवात् गौरवलक्षणो वाक्यभेद इति भावः।

अतश्चेति। अग्न्यनुवादेन तत्समुच्चितप्रजापतिविधानादित्यर्थः। निरपेक्षेति। अग्न्यसमुच्चितप्रजापतिमात्रविधानाभावादित्यर्थः। समुच्चयाङ्गीकारान्नाग्निबाधकत्वमिति भवतापि वाच्यम्। अन्यथा अग्निप्रजापत्योर्विकल्पप्रसक्तौ प्रजापतेः पाक्षिक बाधकत्वम् अग्नेश्च पाक्षिकप्रजापतिबाधकत्वं स्यात्। तच्च समुच्चयाङ्गीकारेणैव भवता परिहृियत इत्याह यथेति। तद्वत्त्वमते समुच्चयाङ्गीकारान्मन्त्रवर्णप्राप्ताग्नि बाधकत्वमितितु तुल्यमेवेत्याह एवमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेऽपि न बाधकत्वमिति तुल्यम् ।

यत्त्वग्नेर्मान्त्रवर्णिकत्वे अग्निर्ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति मिश्रलिङ्गमन्त्रवर्णबलात् सायंहोमस्य द्विदैवत्वापत्तिरिति. तन्न अग्निसमुच्चितप्रजापतिविधानवत् सूर्य्यसमुच्चितस्यापि विधानात् । प्रबलप्रमाणबोधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्य्यस्य बाधितत्वात् ।

---

अत्र केचित्, अग्निहोत्रीयसायंहोमे, अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रलिङ्गेन अग्नेर साधारणदेवतात्वमवगम्यते । तदीयप्रातर्होमे तु, सूर्य्योज्योतिर्ज्योतिः सूर्य्यः स्वाहेति मन्त्रलिङ्गेन सूर्य्यस्यासाधारणदेवतात्वम् । यदग्नये च प्रजापतये च सायं जुहोति, यत् सूर्य्याय च प्रजापतये च प्रातरिति विधिप्राप्तप्रजापतेस्तु सायं प्रातर्होमीयत्वेन साधारणदेवतात्वम् ।

तथा मन्त्रान्तरञ्च श्रूयते, अग्निर्ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति । अयञ्च मन्त्रो मिश्रलिङ्गकः । यस्मात् पूर्व्वोक्तमन्त्रयोर्मध्ये सायंहोममन्त्रस्य अग्निमात्रप्रकाशकत्वं प्रातर्होममन्त्रस्य सूर्य्यमात्रप्रकाशककत्वम् । अस्य पुनः सायंप्रातर्होमीयदेवतयोरग्निसूर्य्ययोः समुच्चयेन प्रकाशकत्वम् । अतो मिश्रदेवताप्रकाशकत्वेन मिश्रलिङ्गत्वम् ।

एवञ्च यदि मन्त्रलिङ्गविधिभ्यां सायंहोमे अग्निप्रजापत्योः समुच्चितदेवतात्वमङ्गीक्रियते तदा मिश्रलिङ्गमन्त्रवर्णादग्निसूर्य्ययोरपि समुच्चितदेवतात्वाङ्गीकारावश्यकतया अग्निप्रजापत्योरिवाग्निसूर्य्ययोरपि वैकल्पिकदेवतात्वं प्रसज्येत । तत्तु याज्ञिकसमाचारविरुद्धम् ।

देवताया मान्त्रवर्णिकत्वानङ्गीकारे तु चतुर्थीश्रुत्या अग्निप्रजापत्योः सूर्य्यप्रजापत्योश्च यथाक्रमं सायंप्रातर्होमदेवतात्वमवधारणीयम् । मन्त्रवर्णस्य तु दुर्व्बलप्रमाणतया तद्गताग्न्यादिपदानां लक्षणया अग्निप्रजापतिपरत्वं सूर्य्यप्रजापतिपरत्वञ्चावधारणीयमिति न याज्ञिकाचारविरोध इत्याहु स्तदपाकर्त्तुमाह यत्त्विति ।

द्विदेवतत्वापत्तिर्द्विविधदेवताकत्वापत्तिः । निराकरोति तन्नेति । अग्निसमुच्चितेति । अयं भावः । मन्त्रलिङ्गेनाग्निसूर्य्ययोर्देवतात्वप्रतीतावपि प्रबलप्रमाणेन श्रुत्या प्रजापतिसमुच्चितस्याग्नेस्तत् समुच्चितसूर्य्यस्य च देवतात्वप्राप्त्या दुर्व्बलप्रमाण मन्त्रलिङ्गावगताग्निसमुच्चितसूर्य्यस्य देवतात्वं बाध्यते इति ।

अपरे तु यदि मन्त्रवर्णात् सायं होमे अग्निर्लभ्यते तदा प्रातर्होमेऽपि मन्त्रवर्णलभ्यत्वेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत्त्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धे-रग्नये च प्रजापतये च सायं जुहोति यत्सूर्य्याय प्रजापतये च प्रातर्जुहोतीति वाक्यद्वयं व्यर्थमेवेति। तन्न भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात्। सायंहोमे अग्निसमुच्चित प्रजापतिविधानम्। प्रातर्होमे सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति मन्त्रवर्णं प्राप्तसूर्य्यसमुच्चितप्रजापतिविधानञ्च विवक्षितम्। न चैतदेकेन वाक्येन सिध्यति। अतोऽर्थवद्वाक्यद्वयम्।

यत्त्वग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्य अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्येन सायंहोमे विनियुक्तत्वात् तत्-

---

प्रजापतये सायं प्रातर्जुहोतीत्येकेनैव वाक्येन प्रजापतिमात्रविधानात् विवक्षितार्थसिद्धौ सायं प्रातर्भेदेन वाक्यद्वयमनर्थकमित्यापादयन्ति तदपि निराकर्त्तुमाह यत्त्विति। प्रजापतिविधेः प्रजापतिविधानस्य। निराकरोति तन्नेति। भवेद्व्यर्थमिति। यदग्नये च प्रजापतये चेति वाक्ये यदि निरपेक्षप्रजापतिविधानं विवक्षितं स्यात् तदा वाक्यद्वयं व्यर्थं भवेत्। एकेनैव प्रजापतये जुहोतीति वाक्येनोभयत्र प्रजापतेर्देवतात्वलाभादिति भावः।

तर्हि किं विवक्षितमित्यत्राह सायंहोमे इति। देवतान्तरसमुच्चितप्रजापति विधानस्य विवक्षितत्वे वैयर्थ्याभावं दर्शयति न चेति। एतदिति। सायं होमे प्रातर्होमे च मन्त्रवर्णप्राप्तदेवतान्तरसमुच्चितप्रजापतिविधानमित्यर्थः। अर्थवत् सार्थकम्। अन्ये तु यदि सायंहोमे अग्नेर्मान्त्रवर्णिकत्वं प्रातर्होमे च सूर्य्यस्य तथात्वं मन्यते तदा विधौ सायंप्रातः पदमनर्थकम्। अग्नये च प्रजापतये च जुहोति सूर्य्याय च प्रजापतये च जुहोतीत्येतावतैव विध्योः सायंप्रातर्विषयकत्वलाभात्। यस्मादग्निप्रकाशकमन्त्रस्य सायं विनियुक्ततया तदवगताग्निसमुच्चितप्रजापतेः सायंहोमदेवतात्वं सुगमम्। तथा सूर्य्यप्रकाशकमन्त्रस्य प्रातर्विनियुक्तत्वेन तदवगतसूर्य्यसमुच्चित प्रजापतेः प्रातर्होमदेवतात्वमपि सुग्रहमेव।

तथा मन्त्रलिङ्गेन ज्योतिर्गुणविशिष्टयोरग्निसूर्य्ययोर्देवतात्वावगमात् तत्समुच्चितप्रजापति विधाने अङ्गीक्रियमाणे अग्निसूर्य्ययोर्ज्योतिष्ट्वविशिष्टयोर्देवतात्वमापद्यते। न च तत् सम्मत मित्यापादयन्ति तदपि खण्डयितुमाह यत्त्विति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेर्यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति। एवं यत्सूर्याय च प्रजापतये च प्रातर्जुहोतीति वाक्ये प्रातःशब्दो व्यर्थ इति। किञ्च मन्त्रवर्णेन ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनाद्विशिष्टस्यैव देवतात्वापात इति।

तदपि न, होमानुवादेन देवताद्वयविधानेऽपि मन्त्रवर्णयोर्लिङ्गादेव प्राप्तिसम्भवात्तद्विध्यानर्थक्यात्। मिश्रलिङ्गमन्त्रविधि-

निराकारीति तदपि नेति। अग्निसूर्ययोर्मान्त्रवर्णिकत्वमनभिमन्यमानस्य नवतत्तयोर्देवतात्वं विधिबोधितमित्येवेष्टम्। भवतु तत्रापि अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातर्जुहोतीति वाक्ययोः सायं जुहोति प्रातर्जुहोतीति विधिरूपांशद्वयमनर्थकम्। तयोर्मन्त्रयोर्लिङ्गादेव सायंप्रातर्होमे विनियोगसम्भवात्।

तथाहि यथा बर्हिर्देवसदनं दामीति कुशच्छेदनप्रकाशकमन्त्रस्य लिङ्गादेव कुशच्छेदने विनियोगस्तथाग्निप्रकाशकमन्त्रस्य अग्निदैवतसायंहोमे विनियोगस्य सूर्यप्रकाशकमन्त्रस्य च सूर्यदैवतप्रातर्होमे विनियोगस्य विधिं विनापि लिङ्गादेवावधारणं स्यादित्याह होमानुवादेनेति। देवताद्वयेति। अग्निसूर्ययोर्विधानेऽपीत्यर्थः। मन्त्रवर्णयोः अग्निर्ज्योतिरित्यादि सूर्यो ज्योतिरित्यादिमन्त्रयोः। लिङ्गादेव अग्निसूर्यप्रकाशनादेव। एवकारेण विधिं विनापीति द्योत्यते। प्राप्तिसम्भवात् सायंप्रातर्होमयोर्विनियोगसम्भवात्। विध्यानर्थक्यात् सायं जुहोति प्रातर्जुहोतीति विधिद्वयानर्थक्यात।

ननु अग्निर्ज्योतिर्ज्योतिः सूर्य इति सायम्प्रातर्जुहोतीति मिश्रलिङ्गमन्त्रविनियोगविधिना तन्मन्त्रस्यैव विनियोगो लभ्यते। न पुनर्लिङ्गावगतविनियोगयोरपि अग्निर्ज्योतिरिति सूर्यो ज्योतिरित्येतयोर्विनियोगः। लिङ्गस्य विधितो दुर्ब्बलत्वात्। अतः पर्युदस्तयोस्तयोर्मन्त्रयोर्विनियोगप्रापणाय सायं जुहोति प्रातर्जुहोतीति विनियोजकविधिद्वयमावश्यकमेव। येन सर्व्वेषामेव मन्त्राणां विनियोजकविधिसद्भावात् विनियोगो निष्प्रत्यूहः स्यादित्यत आह मिश्रलिङ्गेति।

मिश्रलिङ्गविधिः अग्निसूर्यप्रकाशकमन्त्रविनियोजकविधिः। अग्निर्ज्योतिर्ज्योतिः सूर्य


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पर्य्युदस्तयोः प्रतिप्रसवार्थंविधानेऽपि तद्विधिगतयोः सायम्प्रातः-शब्दयोरानर्थक्यम्। विधीयमानयोर्मन्त्रयोर्व्यवस्थयैव प्राप्तिसम्भवात्। तत्प्रकाश्ययोर्दैवतयोर्व्यवस्थितत्वात्। अनुवादत्वोक्तिस्तूभयत्र तुल्येति।

मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य। यदग्नये चेति वाक्ये अग्नेः पूर्व्वाहुतिरित्यत्र केवलस्यैवाग्नेः सङ्कीर्त्तनात् केवलस्यैव देवतात्वावगतेः।

---

इति सायम्प्रातर्जुहोतीतिवाक्यरूपः। तेन पर्य्युदस्तयोर्निराकृतयोः। लिङ्गावगतविनियोगयोः प्रागुक्तमन्त्रयोरिति शेषः। प्रतिप्रसवाय पुनः प्रापणाय। विधानेऽपीति। सायं जुहोति प्रातर्जुहोतीति विनियोगविधानस्य सार्थकत्वेऽपीत्यर्थः। यदि विध्यानर्थक्यं न स्यात्तदा को दोष इत्यत्र जुहोतीति पदसार्थक्येऽपि सायम्प्रातः पदमनर्थकमेवेत्याह तद्विधीति। तन्मन्त्रविनियोजको यो विधिः अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति प्रातर्जुहोतीत्येवंरूपः। तद्गतयोस्तद्घटकयोरित्यर्थः।

ननु सायम्प्रातः पदविरहे एकैकहोमे उभयोर्मन्त्रयोर्विनियोगः स्यादित्यत आह विधीयमानयोरिति। व्यवस्थया एकस्य सायंहोमविषयतया अपरस्य तु प्रातर्होमविषयतया। किं तत्रापकमित्यत्राह तत्प्रकाश्ययोरिति। व्यवस्थितत्वात् एकैकहोमसम्बन्धित्वात्। तथाच अग्निप्रकाशकमन्त्रस्य अग्निदैवतसायंहोम एव विनियोगः। प्रातर्होमस्याग्निदैवतत्वाभावात्। एवं सूर्य्यप्रकाशकमन्त्रस्य च सूर्य्यदैवतप्रातर्होम एव विनियोगः। सायंहोमस्य सूर्य्यदैवतत्वाभावादिति भावः।

यदि तु भवता मन्त्रविनियोजकविधिघटकसायम्प्रातःपदयोरनुवादत्वमुच्यते तदा मयापि यदग्नये च प्रजापतये च सायं जुहोतीत्यादिवाक्यघटकसायम्प्रातःपदयोरनुवादत्वं वक्तव्यमित्यनुवादत्वोक्तिरुभयमतेऽपि सम्भवतीत्याह अनुवादत्वेति।

इदानीं ज्योतिष्ट्वगुणविशिष्टस्य देवतात्वापत्तिं निराकरोति मान्त्रवर्णिकत्वेऽपीति। वाक्य इति। केवलस्यैव देवतात्वावगतेरित्यन्वयः। अत्र हेतुः अग्नेःपूर्व्वाहुतिरित्यादि। तथाच अग्नेः पूर्व्वाहुतिरित्यर्थवादे ज्योतिष्ट्वगुणरहितस्याग्नेः कीर्त्तनात् विधिवाक्येऽपि केवलस्यैवाग्नेर्देवतात्वं प्रत्येतव्यं न तु मन्त्रलिङ्गाज्ज्योतिष्ट्वगुणविशिष्टस्येति भावः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथोपांशुयाजे विष्ण्वादेर्मान्त्रवर्णिकत्वेऽपि न गुणविशिष्टस्य देवतात्वम्। विष्णुरुपांशु यष्टव्य इत्यर्थवादे केवलस्यैव सङ्कीर्त्तनात्। तद्वदिति।

अतश्च मान्त्रवर्णिकत्वे दोषाभावात् देवताद्वयविधाने च गौरवापत्तेः अन्यतः प्राप्तमनूद्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते। होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च।

न च चकारश्रवणान्न वाक्यभेद इति वाच्यम्। चकारार्थो हि समुच्चयः। तञ्च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात्तदा

---

अत्र दृष्टान्तमाह यथेति। विष्ण्वादेरिति। आदिपदात् प्रजापत्यग्नीषोमपरिग्रहः। उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति द्वितीयाध्यायद्वितीयपादभाष्यधृतश्रुतेः। तेषाञ्च विष्ण्वादीनां विकल्पेन देवतात्वं दशमाध्यायाष्टमपादे सिद्धान्तितम्। तथाचोक्तं शास्त्रदीपिकायाम्—

विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्प्यते। इति।

गुणविशिष्टस्य मन्त्रलिङ्गावगतगुणविशिष्टस्य। निर्गुणस्य देवतात्वे हेतुमाह विष्णुरिति। अर्थवादे प्रागुक्ते। केवलस्य विष्ण्वादेरिति शेषः। यद्यपि यष्टव्य इत्यनेन विधित्वमस्यापाततः प्रतीयते तथापि अस्यार्थवादत्वं द्वितीयाध्यायद्वितीयपादे सिद्धान्तितमित्यर्थवाद इत्युक्तम्। तथाचोक्तं शास्त्रदीपिकायाम्—

जामित्वोपक्रमादेव मजामित्वोपसंहृतेः।

वाक्यतन्मध्यपाताच्च विष्ण्वादेरर्थवादता॥ इति।

उपसंहरति अतश्चेति। देवताद्वयेति। अग्निसमुच्चितप्रजापतिविधाने इत्यर्थः। गौरवात् विधेयतावच्छेदकगौरवात्। अन्यतः मन्त्रवर्णात्। निरपेक्षोभयविधाने दोषमाह अनुवादेनेति।

ननु यथाग्नीषोमयोर्देवतात्वविधाने न वाक्यभेदो द्वन्द्वश्रवणात्। तथा चार्थे द्वन्द्व इति व्याकरणस्मृत्या चकारस्य द्वन्द्वसमानार्थताप्रतीतेश्चकारश्रवणादपि न वाक्यभेद इति समाधानं निराकरोति न चेति। हेतुमाह चकारार्थो हीति। प्राधान्येन, विशेष्यभावेन।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रधानस्यानेकविशेषण-सङ्ग्राहकत्वादारुण्यादिविशिष्ट-क्रयविधान इव कारकद्वयसमुच्चयविधाने वाक्यभेदो न भवेत्। न च चकारः समुच्चयं प्राधान्येन ब्रूते। परोपसर्जनत्वेनैवाभिधानात्।

अतएव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितम्। समुच्चयशब्दो हि तं प्राधान्येन ब्रूते, न चकारः।

---

प्रधानस्य विशेष्यस्य अनेकेति। अनेकेषां विशेषणानां संग्राहकत्वात् सम्बन्धजनकत्वादित्यर्थः। चकारस्येति शेषः। कारकद्वयसमुच्चयविधाने इत्यत्रायं हेतुः। दृष्टान्तमाह आरुण्येति। अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति श्रुतौ यथा आरुण्यादिविशेषणानामेकस्यां गवि समुच्चयविधाने न वाक्यभेदस्तथेत्यर्थः। कारकद्वयेति। सम्प्रदानकारकद्वयेत्यर्थः। वाक्यभेदो न भवेदिति। तथाच यदि समुच्चयश्चकारवाच्यः स्यात्तदा होमोद्देशेन अग्निप्रजापतिरूपसम्प्रदान-द्वितयसमुच्चयविधानान्न वाक्यभेदसम्भवः। नानाविशेषणविशिष्टस्य विशेष्यीभूतसमुच्चयस्यैकस्यैव विधेयत्वादिति भावः।

परन्तु चकारो विशेष्यभावेन न समुच्चयबोधकः। इतरविशेषणभावेनैव तद्बोधकत्वादित्याह न चेति। परोपसर्जनत्वेन अन्यदीयगुणत्वेन। अप्राधान्येनेति यावत्। समुच्चयं ब्रूते इत्यन्वयः। तथाच चकारेण अग्निप्रजापतिरूपसम्प्रदानद्वयसम्बन्धिसमुच्चयो न बोध्यते। किन्तु समुच्चितोऽग्निः प्रजापतिरिति बोध्यत इति भावः।

एतत्साधकतया दशमाध्यायतृतीयपादोक्तं भाष्यकारवाक्यमुद्धरति अतएवेति। वैलक्षण्यं विलक्षणार्थत्वम्। समुच्चयशब्दो हि तमित्यादि। एतच्च भाष्यकारवाक्याभिप्रायमूलकं स्व-वाक्यम्। न त्वविकलमेव भाष्यकारवाक्यम्। भाष्यकारास्त्वेवमाहुः:—

चशब्दः समुच्चयार्थो भवति न तु समुच्चयस्य निर्देशकः। परपदविशेषणार्थन्तु समुच्चय-मुपादत्ते। यदि हि निर्दिशेत् क्रियागुणैः समुच्चयः सम्बध्यते। समुच्चयः शोभनः, समुच्चयो द्रष्टव्य इति यथा भवति एवं च शोभनः, च द्रष्टव्य इति वा भविष्यति। तथा यथेह समुच्चययोः षष्ठी भवति धवखदिरयोः समुच्चय इति। एवं धवः खदिरयेत्यत्रापि अभविष्यत्। न तु भवति। तस्मान्न चशब्दः समुच्चयं निर्दिशतीति।

एतद्वाक्यतात्पर्यमादायाह समुच्चयशब्दो हीति। तं समुच्चयम्। प्राधान्येन विशेष्यरूपेण।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यदि हि प्राधान्येन ब्रूयात् तदा तत्प्रतिपन्नः समुच्चयः क्रियागुणैः सम्बध्येत। समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् च शोभनः, च द्रष्टव्य इति प्रयोगः स्यात्। समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इतिवत् धवखदिरयोश्च इत्यपि प्रयोगः स्यादिति।

अतश्चकारः समुच्चयं प्राधान्येन न ब्रूते। येन प्रधानस्यैकस्य विधानान्न वाक्यभेदो भवेत्। किन्तु कारकद्वयोपसर्ज्जनत्वेनैव स तं ब्रूते। समुच्चितोऽग्निः प्रजापतिरिति प्रधानद्वयविधाने वाक्यभेदः स्यादेव। यथा ग्रहोद्देशेन सम्मार्गैकत्वविधाने।

---

ब्रूते बोधयति। यदि हि निर्द्दिशेदित्यस्य भाष्यांशस्यार्थकथनं यदि हि प्राधान्येन ब्रूयादिति। तत्प्रतिपन्नश्चकारवाच्यः। समुच्चयस्य गुणसम्बन्धं दर्शयति समुच्चयः शोभन इति। हरिहरयोः समुच्चयः शोभन इत्यादावित्यर्थः। क्रियासम्बन्धं दर्शयति समुच्चयो द्रष्टव्य इति। भाष्ये यथैवंशब्दाभ्यां सादृश्यं दर्शितम्। ग्रन्थकृता तु इतिवदित्युक्तम्। भाष्ये एवं धवः खदिरश्चेत्यत्रापि षष्ठी भविष्यतीत्युक्त्या षष्ठीप्रयोगसम्भावना दर्शिता, ग्रन्थकृता पुनर्धवखदिरयोश्चेति षष्ठीप्रयोग एव कृतः। इति एवम्प्रकारेण वैलक्षण्यं प्रतिपादितमित्यन्वयः।

अतः एतद्भाष्यकारवाक्यात्। प्रधानस्य प्रधानीभूतचकारार्थस्य समुच्चयस्येति यावत्। कारकद्वयेति। कारकद्वयस्य सम्प्रदानकारकद्वयस्य उपसर्ज्जनत्वेन गुणभावेनेत्यर्थः। स चकारः। तं समुच्चयम्। समुच्चयस्य गुणभूतत्वं प्रतिपादयति समुच्चित इति। प्रधानद्वयेति। प्रधानीभूतदेवताद्वयविधाने इत्यर्थः। वाक्यभेद इति। विधेयभेदादिति भावः। विधेयभेदेन वाक्यभेदे दृष्टान्तमुपन्यस्यति यथेति। सम्मार्गैकत्वविधाने इति। ग्रहं सम्मार्ष्टीत्यत्र एकत्वविवक्षणे सम्मार्गस्येव एकत्वस्यापि प्रमाणान्तराप्राप्तत्वेन विधेयत्वावश्यकत्वादिति भावः।

ननु चकारस्य समुच्चयार्थत्वमप्राधान्येन समुच्चयबोधकत्वमित्यत्र प्रमाणं नास्ति। भाष्यकारैस्तु चशब्दः समुच्चयार्थो न तु समुच्चयस्य निर्द्देशः इत्यनेन चकारः समुच्चयद्योतको न तु समुच्चयवाचक इत्येवोक्तम्। अतएवाहुः—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात् तथापि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नम् । विभक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्ज्जनत्वेन समुच्चयोपसर्ज्जनत्वाभावात् । कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रियातोऽन्येन सम्बध्यते कारकसमुच्चयः ।

---

निपातायादयो ज्ञेया उपसर्गास्तु प्रादयः ।

द्योतकत्वात् क्रियायोगे लोकादवगता इमे ॥ इति ।

वाचकत्वे यथा समुच्चयशब्दप्रयोगे समुच्चयः शोभन इत्यादिक्रियादिसम्बन्धः स्यात्तथा चकारप्रयोगेऽपि भवितुमर्हतीति दूषणमपि दर्शितम् । तथाच चकारः प्राधान्येन समुच्चयं न ब्रूते इति भाष्याभिप्रायवर्णनमनुचितम् । समुच्चयद्योतनञ्च गुणभावेन प्रधानभावेन च सम्भवतीत्यत आह यद्यपीति । चकारस्य प्राधान्येन समुच्चयबोधकत्वाभ्युपगमेऽपि न भवदभिमतार्थसिद्धिरिति भावः ।

कारकद्वयं सम्प्रदानकारकद्वयम् । प्राधान्यमनुपपन्नमिति । तथाच यदि सम्प्रदानद्वयं प्रति चकारस्य प्राधान्येन समुच्चयबोधकत्वं स्यात् तदा होमानुवादेन सम्प्रदानद्वितयसमुच्चयस्य विधेयतया वाक्यभेदो न स्यादिति भवदभिमतम् । परन्तु चकारस्यात्र विशेष्यभावेन समुच्चयबोधकत्वमेवानुपपन्नमित्यप्रधानभावेनैवावागत्या समुच्चयबोधकत्वं वक्तव्यमिति वाक्यभेदो दुर्व्वार एवेति भावः ।

विशेष्यभावेन समुच्चयबोधकत्वानुपपत्तौ हेतुमाह विभक्त्येति । चतुर्थीविभक्त्येत्यर्थः । क्रियोपसर्ज्जनत्वेन क्रियां प्रति गुणीभूतत्वेन । कारकमात्रस्य क्रियां प्रति गुणीभूतत्वादिति भावः । समुच्चयोपसर्ज्जनत्वेति । तथाच कारकस्य समुच्चयांशे विशेषणत्वसम्भव एव समुच्चयस्य विशेष्यत्वसम्भवः । कारकस्य समुच्चयांशे विशेषणत्वमेव न सम्भवेत् । अन्यविशेषणत्वेन प्रतीयमानस्यान्यविशेषणत्वेन भानानभ्युपगमात् । अतः समुच्चयस्यैव कारकांशे विशेषणत्वप्राप्त्या न प्राधान्यमुपपद्यत इति भावः ।

ननु होमे सम्प्रदानद्वयसमुच्चय इत्युक्तौ यथा सम्प्रदानद्वयोपसर्ज्जनत्वं तथा विभक्त्युपनीतसम्प्रदानद्वयस्यापि समुच्चयोपसर्ज्जनत्वं सुघटमित्यत आह कृदन्तादिशब्दैरिति । क्रियातोऽन्येन क्रियेतरेण । कृदन्तशब्दोपस्थितकारकस्य क्रियासम्बन्धाभावेन समुच्चयोपसर्ज्जनत्वमुदाहरति कारकसमुच्चय इति । विभक्त्युपनीतकारकस्य तु क्रियोप-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करणसमुच्चय इति। विभक्त्याभिहितन्तु क्रिययैव। कारकाणां तयैवान्वयात्।

अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनैवोच्येत। कारकद्वयञ्च प्रधानम् एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव। यथाहुः—

अनेकपदसम्बद्धं यद्येकमपि कारकम्।
तथापि तदनावृत्तेः प्रत्ययैर्न विधीयते॥ इति।

---

सर्ज्जनत्वनियमादन्योपसर्ज्जनत्वं न स्यादित्याह विभक्तेति। क्रिययैवेति। सम्बध्यत इति पूर्व्वेणान्वयः। कारकाणां विभक्त्युपनीतानामिति शेषः। तयैव क्रिययैव। एवकारेण अन्येन सह गुणभावेनान्वयाभाव इति दर्शितम्।

अत इति। यतो विभक्त्य भिहितकारकस्य क्रियायामेव गुणभावेनान्वयात् समुच्चय-गुणभावानुपपत्त्या चकारस्य विशेष्यतया समुच्चयबोधकत्वं बाधितमत इत्यर्थः। स समुच्चयः। कारकोपसर्ज्जनत्वेन सम्प्रदानकारकद्वयं प्रत्यप्रधानभावेन तद्गुणभावेनेति यावत्। प्रधानं विशेष्यम्। तथाच समुच्चितोऽग्निः प्रजापतिरिति बोध इति भावः। एकहोमोद्देशेन तथा विधप्रधानद्वयविधाने वाक्यभेदो दुष्परिहर इत्याह एकोद्देशेनेति। अत्रैव भट्टपादसंवादमाह यथाहुरिति।

अनेकेति। यदि एकमपि कारकं सम्प्रदानकारकम् अनेकपदसम्बद्धम् अग्निपदसम्बद्धं प्रजापतिपदसम्बद्धञ्च भवेत् तथापि अनावृत्तेः सकृदुच्चरितैः प्रत्ययैस्तद्वस्तु न विधीयते इत्यर्थः। तथाच अग्नये च प्रजापतये च जुहोतीत्यत्र अग्नीषोमाविव प्रत्ययानावृत्त्या अग्निप्रजापती न विधेयौ सम्प्रदानकारकस्य अनेकपदगतत्वात्। किन्तु अग्नये जुहोति प्रजापतये जुहोतीति प्रत्यया वृत्त्या विधेयाविति भावः।

ज्योतिष्टोमदक्षिणायां श्रूयते गौश्चाश्वश्चाश्वतरश्च गर्द्दभश्च अजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति। तत्र ऋत्विग्भ्यो दक्षिणां ददातीति श्रुतिप्राप्तां दक्षिणामनूद्य गवादिद्रव्यमात्रविधानम्। तत्र यथा परस्परनिरपेक्षाणां विधित्वेऽभ्युपगमे वाक्यभेदापत्तिः। चकारश्रुतिबलात् परस्परसापेक्षाणां विधानात्तु नास्त्येव वाक्यभेदः। तथा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधाने न वाक्यभेदस्तथा कारकद्वयविधानेऽपीति । तन्न नहि गोश्वाश्व-श्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवादयो विधीयन्ते, उक्तरीत्या वाक्यभेदापत्तेश्चकारश्रुत्या कथञ्चित्परिहारेऽपि गवादीनामने-केषां द्वादशशतसङ्ख्यायाश्च विधाने वाक्यभेद एव । आध्वर्यव-शाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यन्तस्य सहश्रुतत्वेन च अस्यैकवाक्यत्वमित्युक्तं दशमे ।

अतोऽनेन वाक्येनोभयविशिष्टदक्षिणैव विधीयते । विशिष्ट-

---

अग्नये च प्रजापतये चेति चकारश्रुतेर्न वाक्यभेद इति तत्प्रख्यशास्त्रं विधिरेव न मन्त्र इति केषाञ्चिद्वादिनां प्रागुपन्यस्तमतमपाकर्तुमाह यच्चेति ।

अनेकेषां परस्परसापेक्षाणां गवादीनाम् । तथा कारकद्वयेति । तत्रापि चकारश्रुतेः सापेक्षत्वसाम्यप्रतीतेरिति भावः । तन्मतापाकरणे दृष्टान्तासिद्धिं हेतुमाह नहीति । ननु तन्मते चकारश्रुतेः समुच्चयावगमात् समुच्चयस्यैकस्यैव विधानात् कथं वाक्यभेद इत्यत आह चकारेति । कथञ्चिदिति । क्रियोपसर्ज्जनस्य कारकस्य समुच्चयोपसर्ज्जनत्वानौचित्य-दोषाङ्गीकारेणेत्यर्थः । परिहारेऽपीति । वाक्यद्वयापत्तेरित्यन्वितम् । गवादिद्रव्यभेदकृत-वाक्यभेदापत्तेः परिहारेऽपीत्यर्थः । गवादीनामिति । गवादीनां समुच्चयस्य गोगतद्वादशशत-सङ्ख्यायाश्चेति पदार्थद्वयविधानात् वाक्यभेदो दुष्परिहर इति भावः ।

ननु तस्य द्वादशशतमिति वाक्यान्तरमेव । वाक्यान्तरेण पदार्थान्तरविधाने कुतो वाक्यभेदा पादनम् । एकस्माद्वाक्यादेकपदार्थविधानसम्भवे यदि वाक्यद्वयं परिकल्प्य पदार्थद्वयं विधीयेत तदेव वाक्यभेदो दोषायेत्यतस्तस्यापृथक् वाक्यत्वं प्रतिपादयति आध्वर्य्यवेति । सहश्रुतत्वेन अपृथक्श्रुतत्वेन । अस्य द्वादशशतमित्यन्तस्य । दशमे दशमाध्यायतृतीयपादे ।

ननु भवत्वेकमेवेदं वाक्यं तथापि तस्मादेकपदार्थविधानासम्भवादगत्या तत्तद्द्रव्याणां सङ्ख्या याश्च विधानाय वाक्यभेदो न दोषाय स्यादित्यत एकपदार्थविधानसम्भवं दर्शयति अत इति । दक्षिणैवेति । तथाच दक्षिणाया अनुवाद्यत्वाभ्युपगमे वाक्य भेदआपद्यते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विज्ञानाच्च न वाक्यभेदः । अतएव पार्थसारथिमिश्रैर्दशमे, तत्र तत्र सोभयविशिष्टा विधीयत इति अनेकगवाद्यात्मिकैका दक्षिणापि विधीयत इति चोक्तम् ।

न चैवम् ऋत्विग्भ्यो दक्षिणां ददातीत्यस्यानर्थक्यम् । तस्यानुवादत्वात्, ऋत्विक्सम्बन्धपरत्वात् । दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां प्रकाशाध्वर्य्वादीनाञ्च तत्सम्बन्धः स्यात् । एतद्वाक्य-

---

तस्याविधेयत्वाङ्गीकारे तु एकस्या दक्षिणाया एव विधेयतया न वाक्यभेदप्रसक्तिरिति भावः । उभयविशिष्टदक्षिणाया विधेयत्वे मीमांसकसम्मतिं दर्शयति अतएवेति । दशमे दशमाध्याय तृतीयपादे । तत्र तत्रेति । कुत्रचित् सोभयविशिष्टेत्यादिवाक्यम् । कुत्रचिच्च अनेकेत्यादि वाक्यमुक्तमित्यर्थः । सोभयविशिष्टेति । सा दक्षिणा । इदं हि मिश्राणां सम्पूर्णं वाक्यम् । तस्माद्गवादीनि द्रव्याणि सङ्ख्या च दक्षिणया सम्बध्यते । सोभयविशिष्टा विधीयत इति ।

ननु विशिष्टदक्षिणाविधाने ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यान्तरेण पुनर्दक्षिणाविधानानुपपत्तिरित्याशङ्कां निरस्यति न चेति । इत्यस्य एतद्वाक्येन दक्षिणाविधानस्य । आशङ्कानिरसने हेतुमाह तस्येति । दक्षिणादानप्रतिपादनस्येत्यर्थः । अनुवादत्वादिति । तथाच नैतेन दक्षिणाविधानं किन्तु तस्य द्वादशशतं दक्षिणेत्यनेन विहिताया दक्षिणाया अनुवाद्यत्वमिति भावः । तर्हि तदनुवादेन किं विधायकत्वं तद्वाक्यस्येत्यत्राह ऋत्विगिति । परिप्राप्तदक्षिणाया ऋत्विक्सम्प्रदानकत्वमात्रविधायकत्वादित्यर्थः । तथाच ऋत्विक्सम्बन्ध विधानाय दक्षिणानुवादस्य सप्रयोजनतया नानर्थक्यमिति भावः ।

ननु दक्षिणायाः कर्म्मवेतनत्वेन कर्म्मनियुक्तब्राह्मणसम्प्रदानकत्वावश्यकत्वे ऋत्विक्सम्प्रदानकत्वस्य सुतरां सिद्धत्वात् ऋत्विग्भ्य इति वाक्यस्यानर्थक्यं तदवस्थं तस्य द्वादशशतं दक्षिणेति दक्षिणाशब्दसामर्थ्यादेव ऋत्विक्सम्बन्धलाभादित्यत आह दक्षिणाशब्दसामर्थ्याद्धीति । हि यस्मात् । तथाच एतद्वाक्याभावे दक्षिणाशब्दसामर्थ्यात् ऋत्विजां प्रकाशाध्वर्य्युप्रभृतीनामपि दक्षिणासम्बन्धः स्यात् । ऋत्विजामिव प्रकाशाध्वर्य्युप्रभृतीनामपि कर्म्मे विशेषनियुक्तत्वात् । तथा शतं ब्राह्मणाः सोमं भक्षयन्तीति श्रुत्युक्तसोमपानार्थोपनिमन्त्रितब्राह्मणवर्गस्य प्रकाशाध्वर्य्युरूपत्वात् ।

एतद्वाक्यात्तु दक्षिणाया ऋत्विक्सम्प्रदानकत्वमेव प्रतीयते न तु ज्योतिष्टोमाङ्गकर्म्म-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सत्त्वे च न भवति। ऋत्विक्शब्दो ब्रह्मादिगतः, ऋतुयजननिमित्तत्वेन। प्रकाशाध्वर्य्यूणामृत्विक्त्वाभावस्य तृतीये उक्तत्वात्।

अतश्च गौश्चाश्वश्चेत्यस्मिन्वाक्ये विशिष्टविधानान्न वाक्यभेदः। यदग्नये च प्रजापतये च सायं जुहोतीति तु न विशिष्टविधानं होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात्। अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदात् गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते। किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमोद्देशेन विधीयते।

अतश्च नेदमग्नेः प्रापकम्, किन्तु मन्त्रवर्ण एव। अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकम्, किन्तर्हि नामधेयमेव। तत्सिद्धमेतत्तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्म्मनामधेयत्वमिति।

एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधोऽग्न आज्यस्य व्यन्त्वित्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् समिधो यज-

---

विशेषनियुक्तब्राह्मणभावसम्प्रदानत्वम्। ततत्कर्म्मवैतनरूपतया दानान्तरमेव कार्य्यम्। अतएव तृतीयाध्यायतृतीयपादे शास्त्रदीपिकायाम्—प्रकाशाध्वर्य्यवे ददातीति दानान्तरमेव प्राकृतकार्य्यं विधीयत इत्यभिहितम्।

ननु प्रकाशाध्वर्य्यादीनामपि कर्म्मविशेषसंयुक्तत्वेन ऋत्विक्पदवाच्यत्वावश्यकत्वात् कथमृत्विक्पदेन ते व्यावर्त्त्यन्ते इत्यत आह ऋत्विक्शब्द इति। ब्रह्मादिगतो ब्रह्मादिषु प्रवृत्तः। ऋतौ यजन्ते इति ऋत्विज इति व्युत्पत्त्या प्रधानीभूतयाग निष्पादकत्वमेव तस्य ब्रह्मादिषु प्रवृत्तौ निमित्तमित्याह ऋतुयजनेति। प्रकाशाध्वर्य्युप्रभृतीनान्तु यागनिष्पादकत्वाभावादृत्विक्त्वाभाव इत्याह प्रकाशेति। तृतीये तृतीयाध्यायतृतीयपादे। तेन मन्त्रवर्णेन। उपसंहरति तत्सिद्धमिति।

अन्यदपि तत्प्रख्यशास्त्रात् कर्म्मनामधेयत्वं दर्शयति एवमिति। समिध इति। हे अग्ने समिधो देवताः आज्यस्य समिध आहुती व्यन्तु प्राप्नुवन्तु इत्यर्थः। मन्त्रवर्णेभ्य इति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तीत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात् कर्म्मनामधेयम्। यथाहुः—

विधित्सितगुणप्राप्ति शास्त्रमन्यद्यतस्त्विह।

तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते॥

इति दिक्।

श्येनेनाभिचरन् यजेतेत्यत्र श्येनशब्दस्य कर्म्मनामधेयत्वं

---

तथाच मन्त्रवर्णेन समिधा साज्याहुतिभागित्वावगमात् तासामेव वेदमेयत्यागोद्देश्यत्वरूपदेवतात्वस्य प्राप्तत्वमिति भावः।

समिदादिशब्दा इति। अत्रायमाशयः। समिधो यजतीत्यादिषु समिदादिशब्दाः किं विष्णुं यजतीतिवत् देवतासमर्पकाः कर्म्मनामधेयानि वेति संशये देवताया मन्त्रवर्णप्राप्ततया तद्विधानस्यानर्थक्यात् यागस्य समिदादिदेवतासम्बन्धित्वेन समिदादिनामकत्वमेव समिधो यजतीत्यादिषु समिदादिशब्दा बोधयन्तीति नवमाध्यायद्वितीयपादे सिद्धान्तितम्। तत्रापि तत्प्रख्यशास्त्रनिमित्तत्वमेवमन्यत्राप्युह्यम्। प्रथमाध्यायचतुर्थपादे सिद्धान्तसूत्रम्—

तत्प्रख्यञ्चान्यशास्त्रमिति।

यतस्तत्प्रख्यं तस्य देवतारूपगुणस्य प्रकाशकं शास्त्रान्तरमस्ति अतस्तत्र तस्य पुनर्विधाने अनुवादत्वापत्तेरग्निहोत्रादिपदं तत्तद्यागनामधेयमेवेत्यर्थः। अत्र भट्टपादसम्मतिमप्याह यथाहुरिति।

विधित्सितेति। यतो यस्मादिह कर्म्मणि विधित्सितो भवता विधातुमिष्टो यो देवतारूपो गुणस्तस्य प्राप्ति प्रापकम् अन्यत् शास्त्रमस्ति तस्मात् तत्प्रापणम् अग्निहोत्रादिशब्देन तद्विधानं व्यर्थमिति हेतोरग्निहोत्रादिशब्दस्य कर्म्मनामत्वमिष्यत इत्यर्थः।

तद्व्यपदेशस्य नामधेयनिमित्ततामुदाहरति श्येनेति। अभिचरन् वैरिवधं कुर्व्वन्। तत्काम इत्यर्थः। प्रथमाध्यायचतुर्थपादे श्येनेनाभिचरन् यजेतेत्यादिश्रुतिषु मत्वर्थलक्षणया गुणविधित्वं कर्म्मनामधेयत्वं वेति संशय्य द्रव्यवाचकशब्दानां कर्म्मनामत्वानुपपत्त्या गुणविधित्वमेवेति पूर्व्वपक्षे, तद्व्यपदेशश्चेति सूत्रेण श्येनादिशब्दानां कर्म्मनामधेयत्वमेव सिद्धान्तितम्। सूत्रार्थस्तु तेन श्येनादिना व्यपदेशः सादृश्यं यस्य कर्म्मणस्तत् तद्व्यपदेशम्। यतः कर्म्म तद्व्यपदेशं श्येनादिसदृशमतः श्येनादिशब्दाः कर्म्मनामधेयानीति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तद्व्यपदेशात्। तेन व्यपदेश उपमानम्। तदन्यथानुपपत्तेरिति यावत्। तथाहि यद्विधेयं तस्य स्तुतिर्भवति।

तद्यद्यत्र श्येनो विधेयः स्यात्तदार्थवादैस्तस्यैव स्तुतिः कार्य्या। न च यथा वै श्येनो निपत्यादत्त इत्यनेन अवत्येनार्थवादेन श्येनः स्तोतुं शक्यः। श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात्। न च श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यते। उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्।

---

एवञ्च तद्व्यपदेशशब्दप्रयोगस्य तत्सूत्रमूलकत्वात् स्वयं प्रयुक्तमपि तं शब्दं स्वयमेव व्याचष्टे तेनेति। अतएव तत्प्रख्यशब्दस्यापि सौकर्येण स्वयमेव व्याख्यानं प्राक्कृतम्। उपमानं सादृश्याभिधानम्। ननु सादृश्याभिधानेऽपि कथं यागस्य तन्नामकत्वकल्पनमित्यत आह तदन्यथानुपपत्त्येति। एतेन तद्व्यपदेशादित्यस्य सादृश्याभिधानानुपपत्तेरित्येव पर्य्यवसितोऽयं इति विधाति। तत्सादृश्याभिधानस्यान्यथानुपपत्तिं व्यञ्जयति तथाहीति। स्तुतिः प्रशंसा। भवति अर्थवादैः करणीया भवति।

श्येनो विधेयः श्येननामा पक्षी गुणत्वेन विधेयः। तस्यैव श्येनरूपगुणस्यैव। ननु स्तुत्यर्थवादैः श्येनरूपगुण एव स्तूयतामित्याशङ्कां निराकरोति न चेति। यथेति। श्येनः पक्षिविशेषो यथा निपत्य पतित्वा आदत्ते अन्यं पक्षिविशेषं गृह्णाति एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्युत्तरप्रतीकेनान्वयः। अवत्येन श्येनयागविषयकेण। एवमयमित्युत्तरप्रतीकस्थेनायमित्यनेन प्रक्रान्तश्येनयागपरामर्शात्। उत्तरप्रतीकार्थस्तु एवं श्येनपक्षिणः पक्ष्यन्तरग्रहणवत् अयं प्रक्रान्तो यागः निपत्य अदृष्टद्वारा सम्बध्य द्विषन्तमारब्धविरोधं भ्रातृव्यं वैरिणम् आदत्ते घातयतीति।

श्येनः पक्षिविशेषः। शक्य इति। न चेति पूर्व्वेणान्वयः। अर्थवादेन श्येनपक्षिरूपगुणस्तुतेरशक्यत्वे हेतुमाह श्येनोपमानेनेति। श्येनसादृश्येनेत्यर्थः। अर्थान्तरेति श्येनेतरपदार्थेत्यर्थः। तदेवोपपादयति न चेति। तस्य गुणत्वेनाभिमतश्येनपक्षिणः भिन्ननिष्ठत्वादिति। तथाच उपमा सादृश्यं तच्च तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्। एवञ्च सादृश्यस्य परस्परभेदसापेक्षतया येनोपमीयते यो वा उपमीयते तत्त्वं विभिन्नवस्तुनिष्ठमेव भवति। न पुनः श्येनेनैवोपमानेन स्वमेवोपमेयं स्यादिति भावः। तथाचोक्तं भट्टपादैः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यते इति श्येनशब्दस्य तद्व्यपदेशान्नामधेयत्वम्। तत्सिद्धं निमित्तचतुष्टयान्नामधेयम्।

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं केचिन्नामधेयत्वे निमित्तमाहुः। वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयमुत्पत्तिशिष्टगुणबलीयस्त्वात्। उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासम्भवात्।

तथाहि न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं वक्तुं शक्यम्। वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य यागस्योक्तत्वात्। सास्य देवतेत्यस्मिन्नर्थे हि तद्धितस्मरणम्। तत्रास्यशब्दस्य तद्धितान्तर्गतस्य

---

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा।
नहि तेनैव तस्यैव स्तुतिस्सङ्गदितीष्यते॥

श्येनशब्दस्य यागनामत्वे तु श्येनोपमानेन स्तुतिः सुघटैवेत्याह यदा त्विति। तथाच यागस्य श्येनसंज्ञकत्वाङ्गीकारे पक्षिश्येनयागयोः परस्परभेदसत्त्वात् द्वयोरेव झटिति घातकत्वेन समाननामकत्वेन च उपमानोपमेयभावः सङ्गच्छतेतराम्। अतएव झटितिघातकान्तरेण व्याघ्रादिना नोपमितमिति भावः। उपसंहरति श्येनशब्द इति। निमित्तचतुष्टयस्य नामधेयबोधकत्वविचारमुपसंहरति तत्सिद्धमिति।

केषाञ्चिदभिमतं नामधेयस्य पञ्चमं निमित्तमुपदर्शयति उत्पत्तिशिष्टेति। उत्पत्तिविधिविहितगुणविशेषस्य बलवत्त्वमित्यर्थः। तदुदाहरति वैश्वदेवेनेति। अत्र निमित्तान्तरासम्भवमाह उक्तेति।

असम्भवप्रकारं दर्शयति तथाहीति। अत्रादौ मत्वर्थलक्षणापातासम्भवं प्रतिपादयति न तावदिति। मत्वर्थस्य विश्वदेवदेवतावैशिष्ट्यस्य। तद्धितस्मरणम् अण्प्रत्ययविधानम्। अस्यशब्दस्य अस्येतिपदस्य। तद्धितान्तर्गतस्य तद्धितप्रत्ययविधायकसूत्रान्तर्गतस्य। मुख्यत्वमवगतमित्यनेनास्यान्वयः। यद्यपि त्यज्यमानद्रव्यस्वामित्वे नोद्देश्यस्य देवतापदमुख्यार्थतया इन्द्रो देवता स्वामित्वेनोद्देश्योऽस्येति व्युत्पत्त्या ऐन्द्रपदस्य हविष्येव मुख्यत्वं स्यात्। तथापि देवतापदस्य मन्त्रस्तुतेऽप्युपचारादैन्द्रं हविरितिवत् इन्द्रः स्तुतोऽस्य सूक्तस्येति ऐन्द्रं सूक्तमित्यपि व्यवह्रियते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि सूक्तहविषोरिति स्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतम्। तथापि सर्व्वनाम्नासुपस्थितवाचित्वात् सूक्तहविषोश्चानुपस्थितत्वात् यजेतेत्युपस्थितं यागमेवास्यशब्दोऽभिधत्त इति न यागे मत्वर्थलक्षणा। विश्वदेवरूपैकदेवताविधानाच्च न वाक्यभेदः।

नापि तत्प्रख्यशास्त्रान्नामधेयत्वम्। यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम्। यथा अग्निहोत्रशब्देन। अत्र चाग्नेयादयो अष्टौ यागाः प्रकृताः। तत्रामिक्षायागे यद्यपि विश्वे देवाः प्राप्ता वैश्वदेव्यामिक्षेति, तथापि

---

तस्य चानादिप्रयोगयोगित्वेन निरूढ़तया मुख्यार्थतुल्यत्वादाह सूक्तहविषोरिति। अतएव वार्त्तिकायामुक्तम्—

यागसम्प्रदानं देवता, देयस्य पुरोडाशादेः स्वामिनी। तस्मिन्नभिधेये प्रत्ययः।
इन्द्रो देवतास्य ऐन्द्रं हविः। मन्त्रस्तुत्यमपि देवतेत्युपचरन्तीति।

ननु देवतापदनिर्द्देशात् अस्येति सर्व्वनाम्नो यः कश्चिदुपस्थितो न ग्राह्यः। किन्तु सूक्तहविषो एवेत्यत आह सूक्तहविषोश्चेति। अनुपस्थितत्वात् तदर्थपरत्वासम्भवात्। यागमेवेति। तथाच शिष्टप्रयोगदर्शनाद्देवतापदस्य मन्त्रस्तुत्योपचारवत् यागप्रीणनीयेऽप्युपचरणीयः। तेन विश्वे देवा देवता प्रीणनीया यस्य यागस्येति व्युत्पत्त्या वैश्वदेवपदं यागबोधकमपि भवितुमर्हति। अतएव प्रयोगदृष्ट्या उपास्येऽप्युपचारात् शिवो देवता उपास्यो यस्येति शैव इत्यादिप्रयोगाः प्रसिद्धा इति भावः।

मत्वर्थलक्षणाया अप्रसक्तिं प्रदर्श्य वाक्यभेदप्रसक्तिञ्च परिहरति विश्वदेवरूपेति। एकदेवतेति अग्नये च प्रजापतये चेत्यादाविव न देवताद्वयविधानप्रसङ्ग इति भावः।

तत्प्रख्यशास्त्राविषयत्वमपि प्रतिपादयति नापीति। अत्र चाग्नेयादय इति। अस्यार्थं विस्तरः। चातुर्मास्ययागस्य चत्वारि पर्व्वाणि। वैश्वदेवो वरुणप्राघासः शाकमेधः सुनासीरीयश्चेति। तेषु प्रथमपर्व्वणि अष्टौ यागा विहिताः। आग्नेयमष्टाकपालं निर्व्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालञ्चेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्राप्तेषु तेषामप्राप्तत्वात् वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधानेन तत्प्रख्यशास्त्रमन्यत्, येन तद्वशान्नामत्वं स्यात्।

न चामिक्षायागस्यैवैतन्नामेति वाच्यम्। वैश्वदेवेन यजेतेति

---

तेषामष्टानां यागानां सन्निधाविदमाम्नायते वैश्वदेवेन यजेतेति। अत्र यजेतेत्यनेनाग्नेयादीन् यागाननूद्य किं वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते किंवा तेषां नामधेयमिति संशये नामधेयत्वपक्षे नाम्नो विधेयत्वासम्भवात् यजेतेत्यस्यानुवादतया अङ्गीकृतत्वाच्च समस्तवाक्यस्यैवानुवादता स्यादतो देवतारूपगुणविधिरेव। यद्यपि वैश्वदेव्यामामिक्षायां विश्वे देवा देवताः प्राप्तास्तथापि आग्नेयादिषु प्राप्तेषु अप्राप्तत्वाद्विधीयन्ते। तेष्वग्न्यादयो देवताः सन्तीति चेत्, गत्यभावाद्विश्वैर्देवैः सह विकल्पेन सन्तु।

नन्वेकः शब्दः प्राप्तेषु विधिरामिक्षायान्त्वनुवाद इत्यनुचितमेवेति चेन्न। यावदप्राप्तं तावद्विधीयत इति यत्राप्राप्तिस्तत्रैव विधानस्यादुष्टत्वात्। अत्र प्रथमाध्यायचतुर्थपादे सिद्धान्तः।

अग्न्यादीनां देवतात्वं प्रत्यक्षश्रुतिबोधितम्। विश्वेषां देवानान्तु वाक्येन बोधितमपि न साक्षात्। नहि अग्न्यादियागे विश्वेषां देवानां देवतात्वप्रतिपादकं वाक्यघटकपदमस्ति। वाक्येन विश्वेषां देवानां यागदेवतात्वमात्रं बोध्यते। प्रकरणात्तु आग्नेयादिष्विति प्रतिपाद्यते। एवञ्च श्रुतिप्राप्तप्रकरणप्राप्तयोरतुल्यशिष्टतया न विकल्पः सम्भवति। विकल्पपक्षे एकेनापरस्य पाक्षिकबाधोऽवश्यमभ्युपेयः। स चान्याय्यः प्रकरणेन श्रुत्युक्तपदार्थबाधासम्भवादित्युत्पत्तिशिष्टगुणबलीयस्तया वैश्वदेवपदस्य देवतारूपगुणविधायकत्वासम्भवात् कर्मनामत्वमेवेति।

न तत्प्रख्यशास्त्रमन्यदिति। तथाच यदि वैश्वदेवेन यजेतेति वाक्येन आमिक्षायागे विश्वदेवदेवताकत्वं विधीयते तदैव तत्प्रख्यं विधित्सितदेवतारूपगुणप्रापकं वैश्वदेव्यामिक्षेति शास्त्रान्तरमस्तीति वक्तव्यम्। यदि तु आमिक्षायागं विहाय आग्नेयादियागे वैकल्पिक विश्वदेव देवताकत्वं विधीयते तदा तद्यागे विश्वदेवताप्रकाशकमन्यत् शास्त्रं न लभ्यं येन तत्प्रख्यान्यायात् नामधेयत्वं स्यादित्याशयः।

भवतु उत्पत्तिशिष्टगुणबलीयस्त्वेन गुणविधित्वासम्भवात् वैश्वदेवशब्दस्य यागनामधेयत्वम्। तत्तु आमिक्षायागस्यैव भवतु तस्यैव विश्वदेवदेवताकत्वेन तन्नामकत्वौचित्यात्। न पुनराग्नेयादियागाष्टकस्येति शङ्कामपाकरोति न चेति। वाक्यवैयर्थ्यमेवोपपादयति वैश्वदेवशब्दस्येति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वाक्यवैयर्थ्यापत्तेः। वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽनेनानूद्यत इति वाच्यम्। न च तदनुवादे नास्ति किञ्चित् कृत्यम्। प्राचीनप्रवणे वैश्वदेवेन यजेतेति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाप्येतद्वाक्यमामिक्षायागसम्बन्धोपपत्तेः, विश्वदेवसम्बन्धात्तस्य।

---

स एव आमिक्षायाग एव। अनेन वैश्वदेवेन यजेतेत्यनेन। वाच्यं भवतीति शेषः। तदनुवादेन आमिक्षायागमनूद्य तस्य वैश्वदेवनामकत्वविधानेन। कृत्यं प्रयोजनम्।

ननु प्राचीनप्रवणे वैश्वदेवेन यजेतेति श्रुत्यन्तरमस्ति। तेन वैश्वदेवयागमनूद्य यजमानस्य प्राक्प्रवणदेशवर्त्तित्वं विधीयते न तु वैश्वदेवयागो विधीयते। तत्र वैश्वदेवपदेन आमिक्षायागोपस्थानमेव आमिक्षायागस्य वैश्वदेवनामकत्वविधानप्रयोजनमस्तीत्यत आह—प्राचीनेति। एतद्वाक्यम् आग्नेयादिविश्वयागाष्टकोपक्रमे श्रूयमाणं वैश्वदेवेन यजेतेति वाक्यम्। यस्य भवता आमिक्षायागनामधेयत्वमभ्युपगम्यते। तद्वाक्यं विनापीत्यर्थः। आमिक्षायागसम्बन्धेति। प्राचीनप्रवणदेशविधायकवाक्ये वैश्वदेवपदेनामिक्षायागोपस्थानोपपत्तेरित्यर्थः।

ननु वैश्वदेवेन यजेतेति संज्ञाविधायकश्रुतिमन्तरेण आमिक्षायागस्य वैश्वदेवसंज्ञकत्वानवगमात् कथं तत्र प्राचीनप्रवणे वैश्वदेवेन यजेतेति श्रुतिविहितप्राचीनप्रवणदेशसम्बन्ध उपपद्यत इत्यत आह विश्वदेवेति। तस्य आमिक्षायागस्य वैश्वदेव्यामिक्षामिति श्रुत्या विश्वदेवदेवतासम्बन्धादित्यर्थः।

तथाच यागविशेषस्य नामविशेषकरणस्यैतदेव प्रयोजनं यत् तन्नामधेयोल्लेखेन श्रुत्यन्तरविहितस्य धर्मस्य तद्यागविशेष एव सम्बन्धः स्यादिति। एवञ्च वैश्वदेवयागोल्लेखेन श्रुत्यन्तरविहितस्य प्राचीनप्रवणदेशस्य आमिक्षायागसम्बन्धो यदि आमिक्षायागस्य वैश्वदेवनामकत्वप्रतिपादनमन्तरेण न स्यात्तदा तस्य वैश्वदेवनामकत्वप्रतिपादकं वैश्वदेवेन यजेतेति वाक्यमर्थवत् स्यात्। यदि तु तस्य तन्नामकत्वविधानं विनापि वैश्वदेवपदोल्लेखेन विहितस्य प्राचीनप्रवणदेशस्य सम्बन्धः सुघटः स्यात्तदा सुतरां तस्य तन्नामकत्वप्रतिपादकवाक्यं व्यर्थं स्यादिति मन्तव्यम्। एवञ्च आमिक्षायागस्य वैश्वदेव्यामिक्षामिति श्रुतिबोधितविश्वदेवदेवताकत्वेन वैश्वदेवपदोपस्थाप्यत्वं नामधेयबोधकवाक्याभावेऽपि सम्भवतीति तद्वाक्यं व्यर्थं स्यादिति सुध्यक्तोऽभिप्रायः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आग्नेयाद्यशेषप्रकृतयागनामत्वे तु न वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यम् । तदा त्वनेनाष्टौ यागा अनूद्यन्ते अनुवादेन चैकप्रतीत्यारूढत्वात् समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति । एवं प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति । तद्वाक्यस्यासत्वे अनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसम्बन्धः स्यात् । अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसम्बन्ध एवैतद्वाक्यप्रयोजनम् । एवञ्च वैश्वदेवशब्दोऽष्टानां नामधेयम् ।

न च तत्र तत्प्रख्यशास्त्रं निमित्तं भवति । सप्तसु विश्वदेवाप्राप्तेः । अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति ।

---

वैश्वदेवपदस्य आग्नेयादियागाष्टकनामधेयत्वे तु न वाक्यवैयर्थ्यमित्याह आग्नेयादीति । प्रकृतेति प्रक्रान्तेत्यर्थः । सार्थक्यप्रकारं प्रतिपादयति तदा त्विति । अनेन नामधेयबोधकवाक्येन । अनूद्यन्ते यजेतेति पदेनेति शेषः । एकप्रतीतीति । यागाष्टकस्य एकयागत्वेन बुद्धिविषयत्वादित्यर्थः । समुदितानां मिलितानाम् । एवञ्चेति । वैश्वदेवपदस्य यागसमुदायनामत्वे सतीत्यर्थः । तत्र आग्नेयादियागसमुदाये । तद्वाक्यस्य वैश्वदेवेन यजेतेति वाक्यस्य । अनेन वाक्येन । आमिक्षायाग एवेति । तस्य विश्वदेवदेवताकत्वस्य प्रत्यक्षप्रत्यभिज्ञानादिति भावः । अतश्चेति । नामधेयबोधकवाक्यसत्वाच्चेत्यर्थः । उपसंहरति एवञ्चेति ।

नन्वत्र तत्प्रख्यशास्त्रस्यैव नामधेयनिमित्तत्वं न तूत्पत्तिशिष्टगुणबलीयस्त्वमित्याशङ्कां परिहरति न चेति । सप्तसु आमिक्षायागेतराग्नेयादियागसप्तके । तथाच यत्र यद्विधीयते तत्र तद्यदि शास्त्रान्तरलभ्यं स्यात् तदैव तत्प्रख्यन्यायावसरः । प्रकृते तु आग्नेयादियागसप्तके विश्वेषां देवानां देवतात्वस्य शास्त्रान्तरलभ्यत्वाभावात् कथं तन्न्यायावसर इति भावः ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नापि तद्व्यपदेशात्। तादृशस्य व्यपदेशस्यानुपलम्भात्। अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम्। तथाहि वैश्वदेवेन यजेतेत्यत्र न तावदप्रकृतकर्म्मानुवादेन देवताविधानं सम्भवति, तेषामत्रानुपस्थितेः। नापि देवताविशिष्टकर्म्मान्तरविधानं सम्भवति, गौरवापत्तेः। अष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधात्।

अतोऽनेन वाक्येन प्रकृतकर्म्मानुवादेन देवता विधीयत इति वक्तव्यम्। तत्रापि चायारी विश्वदेवप्राप्तेः समस्त यागेष्वनेन वाक्येन विश्वे देवा विधीयन्त इति वक्तव्यम्। न च तत्सम्भवति, तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात्। आकाङ्क्षया हि सम्बन्धो भवति आग्नेयादियागानां हि देवताकाङ्क्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वदेवविधानं युक्तम्। अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्म्मनामधेयत्वमिति। यथाहुः—

---

तद्व्यपदेशस्य नामधेयनिमित्ततामप्यत्र परिहरति नापीति। तादृशेति। यागाष्टकस्य वैश्वदेवेन सह उपमानोपमेयभावानुपलम्भेरित्यर्थः। अतश्चेति। वाक्यभेदापत्तिमत्वर्थलक्षणाप्रसङ्गयोर्निमित्तयोः पूर्व्वं निराकृतत्वात् तत्प्रख्यशास्त्रतद्व्यपदेशयोरिदानीं निरासाच्चेत्यर्थः। अप्रकृतकर्म्मेति। अविहितदेवताकयागान्तरेत्यर्थः। प्रधानविधित्वं निराकरोति नापीति। गौरवेति। प्रधानविधित्वकल्पनागौरवापत्तेरित्यर्थः। मन्त्रलिङ्गविरोधमपि हेतुतया निर्दिशति अष्टाविति। मन्त्रे अष्टौ,हवींषीत्युक्तेरनन्यगतिकत्वादित्यर्थः।

विश्वदेवप्राप्तेरिति। प्राप्तांशे विधित्वासम्भवादिति भावः। उत्पत्तीति। उत्पत्तिशिष्टै रुत्पत्तिविधिबोधितैरग्न्यादिभिरवरोधात् देवतान्तरविधानानवकाशीकृतत्वादित्यर्थः। अवरोधे हेतुमाह आकाङ्क्षया हीति। उत्पत्तिशिष्टेति। उत्पत्तिविधिबोधितस्य अग्न्यादिदेवतारूपगुणस्य बलवत्त्वादित्यर्थः। अत्र भट्टपादसम्मतिमाह यथाहुरिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

गुणान्तरावरुद्धत्वान्नावकाशो गुणोऽपरः।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते॥ इति।

अन्ये त्वाचार्य्या आहुः। यः शब्दो यत्र कर्म्मणि यद्गुणसम्बन्धं बोधयति स चेत् सम्बन्धः शास्त्रान्तरप्रतिपन्नस्तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात्। तच्च शास्त्रान्तरं विधिरर्थवादो वेत्यत्र नादरः। तत्राग्निहोत्रशब्दे अग्निसम्बन्धबोधकं शास्त्रान्तरं विधिरेव। वैश्वदेवशब्दस्य विश्वदेवसम्बन्धं कर्म्मणि बोधयति। विश्वदेवसम्बन्धश्चाष्टसु यागेषु यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादादवगतः।

---

गुणान्तरेति। गुणान्तरेण अग्न्यादिना अवरुद्धत्वान्निरवकाशीकृतत्वान्निराकाङ्क्षत्वादि ति यावत्। अपरो गुणो विश्वदेवरूपो गुणो अवकाशो अवकाशार्हो न स्यात्। तथा अग्न्यादिभिः सह विश्वदेवदेवताया विकल्पोऽपि न सम्भवतीति शेषः। कुत इत्यवाह वैषम्यात् श्रुतिलब्धप्रकरणलब्धयोरतुल्यत्वात्। तस्माद्वैश्वदेवशब्दो नामैव युज्यत इत्यर्थः।

आचार्य्यान्तरमतमाह अन्ये त्विति। यद्गुणसम्बन्धमिति। तच्छब्दवाच्यस्वरूपगुण सम्बन्धमित्यर्थः। गुणस्य विधिरूपशास्त्रान्तरप्राप्तत्वं दर्शयति तत्रेति। विध्यर्थवादयोर्मध्ये इत्यर्थः। अर्थवादरूपशास्त्रान्तरप्राप्तत्वं दर्शयति विश्वदेवशब्दस्येति। अष्टसु यागेषु आग्नेयाद्य ष्टयागसमुदाये। यद्विश्वे देवा इति। आग्नेयादियागप्रकरणीयोऽयमर्थवादः। समयजन्त एतं यागं कृतवन्तः। वैश्वदेवत्वं वैश्वदेवपदव्यपदेशबीजम्।

अत्रेदमालोचनीयम्—विधित्सितगुणप्रापिशास्त्रमन्यद्यतस्तिष्ठ।

तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते॥

इत्युक्तो य एव गुणो विधातुमिष्टस्तस्यैव गुणस्य प्रापकशास्त्रान्तरसद्भावे तत्प्रख्यशास्त्रानवसरः। प्रकृते तु विश्वदेवदेवताकत्वरूपो गुणो विधातुमिष्टस्तत्प्रापकोऽयं नार्थवादः, किन्तु विश्वदेव-कर्तृकत्वगुणप्रापकः। तत्वाथं तस्य विवित्सितगुणप्रापकत्वरूपं तत्प्रख्यशास्त्रत्वमभ्युपगन्तव्यम्।

तस्मात् यथा अग्निहोत्रपदस्य सूर्य्यप्रजापत्यवरुद्धे प्रातर्होमे अग्निदेवताविधायकत्वानुपपत्त्या सायं होम एव तद्विधायकत्वस्य परिशेषादङ्गीकार्य्यत्वे अग्नये च प्रजापतये च सायं जुहोतीति शास्त्रस्य अग्निदेवताप्रापकस्य सत्त्वात् तत्प्रख्यशास्त्रान्नामधेयत्वम्। तथा वैश्व-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किञ्चित्प्रमाण-मस्ति । अतएव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोम-शब्दस्तानि वा एतानि ज्योतींषि य एतस्य स्तोमा इत्यर्थवादाव-गतं ज्योतिःसम्बन्धं निमित्तीकृत्य सोमयागे प्रवर्त्तमानस्तत्प्रख्य-शास्त्रान्नामधेयं भवति । एवं प्रकृतेऽपि द्रष्टव्यम् । पञ्चम प्रकार कल्पने प्रमाणाभावात् ।

अतएव वैश्वदेवाधिकरणे वार्त्तिककारैरेवमुपसंहृतं "तत्प्रख्य-तयैव सर्व्वेषां नामधेयत्वमिति" । यच्चोत्पत्तिशिष्ट गुणबलीयस्त्व-मुक्तं तन्नु गुणविध्यभावे युक्तप्रत्युच्चयमात्रम् । तत्सिद्धं तत्प्रख्यशास्त्रा-द्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति ।

---

देवेन यजेतेति वैश्वदेवशब्दस्य उत्पत्तिशिष्टाग्न्यादिदेवतावरुद्धाग्नेययागादौ विश्वदेवदेवताविधायकत्वानुपपत्त्या परिशेषादामिक्षायाग एव तद्देवताविधायकत्वाङ्गीकारे वैश्वदेव्यामिक्षेत्यस्य तद्गुणप्रापकशास्त्रान्तरस्य सत्त्वात् तत्प्रख्यन्यायेन नामधेयत्वम् ।

इत्यच वैश्वदेव्यामिक्षेत्यस्यैव प्रकृते तत्प्रख्यशास्त्रत्वं न तु विश्वे देवाः समयजन्ते त्यर्थवादस्य । तदर्थवादेन यद्विश्वदेवकृतत्वं प्रत्याय्यते तदाग्नेयादियागषट्कस्य वैश्वदेवनामकत्वे निमित्तमिति । एवमेव शास्त्रदीपिकाकारादीनामभिप्रायः ।

अर्थवादस्य तत्प्रख्यशास्त्रतानभ्युपगमवादं निराकरोति न चेति । विधेरिवार्थवादस्यापि शास्त्रत्वाविशेषादिति भावः । अर्थवादस्यापि तत्प्रख्यशास्त्रतां दर्शयति अतएवेति । तानि वेति । एतस्य यागस्य ये स्तोमाः स्तोमाख्यसामविशेषास्तान्येतानि ज्योतींषीत्यर्थः । तत्प्रख्यशास्त्रा दिति । तथाच ज्योतिष्टोमशब्दस्य ज्योतींषि स्तोमा यस्येति व्युत्पत्त्या न ज्योतिःसम्बन्धविधायकत्वं ज्योतिःसम्बन्धविधायकस्य तानि वा एतानीति शास्त्रान्तरस्य सत्त्वात् । तस्मान्नामधेयत्वमेवेति भावः । पञ्चमेति । नामधेयनिमित्तानामिति शेषः ।

अत्र वार्त्तिककारस्वरसमाह अतएवेति । सर्व्वेषाम् आग्नेयादीनामष्टानां यागानाम् । ननु तर्हि वैश्वदेवाधिकरणे सूत्रभाष्यकाराभ्यामुत्पत्तिशिष्टगुणबलीयस्त्वमुक्तं किमर्थमित्यत आह यच्चेति । उक्तं विचारितम् । सूत्रभाष्यकाराभ्यामिति शेषः । गुणविध्यभाव इति । तथाच आग्नेयादियागषट्के अग्न्यादिभिः सह विश्वेषां देवानां वैकल्पिकदेवतागुणविधान-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ननु पशुसोमाधिकरणे ऐन्द्रवायवं गृह्णातीत्यादौ न यजिकल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तम्। तेन तेन न्यायेन वैश्वदेव्यामिक्षेत्यत्रापि यजिकल्पनं मास्तु। वैश्वदेवेन यजेतेत्यत्र प्रत्यक्षयजिश्रुतेः। एवञ्चानेन वाक्येन देवताविशिष्टकर्म्मविधानमस्तु। तस्य च द्रव्याकाङ्क्षायां वैश्वदेव्यामिक्षेति द्रव्य विधानमस्तु। एवञ्च न वाक्यद्वयस्याप्यनुवादत्वम्। नाप्यष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधो भवेदिति चेन्नैवम्।

वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पने आमिक्षा किमनुवादेन विधीयत इति वक्तव्यम्। विश्वदेवानुवादेन विधाने द्रव्यस्य देवताङ्गत्वमेव स्यात्, न यागाङ्गत्वम्। किञ्च वैश्वदेवोशब्दो

---

पक्षनिरासार्थं मतु नामधेयत्वार्थम्। नामधेयत्वनिमित्तन्तु तत्प्रख्यशास्त्रमेवेति भावः। वैश्वदेवेन यजेतेत्यस्य गुणविधायकत्वनिरासेन तत्प्रख्यशास्त्रमूलकनामधेयप्रतिपादकत्वसिद्धान्तमुपसंहरति तत्सिद्धमिति।

इदानीं वैश्वदेवेन यजेतेत्यस्य प्रधानविधित्वमाशङ्कते नन्विति। पशुसोमेति। द्वितीयाध्यायद्वितीयपादस्थे पशुसोमापूर्व्वताधिकरणे इत्यर्थः। ऐन्द्रवायवमिति। अवायमाशङ्कार्थः। ज्योतिष्टोमे सोमेन यजेतेति श्रूयते। तत्प्रकरणे ऐन्द्रवायवं गृह्णातीति श्रुतिरस्ति। तत्र यजिश्रुतिविरहात् यजिकल्पनं स्यान्न वेति संशये सोमेन यजेतेति प्रत्यक्षश्रुतिबोधितयागप्राप्तेर्न यजेतेति कल्पनं किन्तु सोमेन यजेतेति प्राप्तसोमस्यैव ऐन्द्रवायवग्रहणेन संस्कारविधायकमैन्द्रवायववाक्यम्। तथाचोक्तं न्यायमालायाम्—

"ग्रहणवाक्ये तु देवताविशिष्टः सोमसंस्कारो विधीयत इति।"

तद्वद्वैश्वदेव्यामिक्षेत्यत्रापि न यागविधानं यजिश्रवणाभावात्। किन्तु वैश्वदेवेन यजेतेत्युक्तयागस्यैव वैश्वदेव्यामिक्षेति द्रव्यविधायकम्। एवञ्च वैश्वदेवेन यजेतेति वाक्यमेव विश्वदेवोद्देश्यकयागविधायकः प्रधानविधिः। वैश्वदेव्यामिक्षेति वाक्यन्तु प्रधानविधौ द्रव्याकाङ्क्षायामामिक्षारूपद्रव्यविधायकमस्तु। तथा सति न वाक्ययोर्वैयर्थ्यं नाप्यष्टौ हवींषीति सन्नलिङ्गविरोध इति। आशङ्कां निरस्यति नैवमिति।

देवताङ्गत्वमिति। यद्धि यदनुवादेन विधीयते तस्य तदङ्गत्वमिति नियमादिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

देवतादद्धितत्वादामिक्षान्तर्गतार्थः । तत्र विश्वदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्त्तव्यं पदश्रुतेः । यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः, न तूपपदेनेत्युक्तम्, भावार्थाधिकरणे तद्वत् । तत्र च वषट्कर्त्तुः प्रथमभक्ष इतिवदेकप्रसरताविरोधः । अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम् ।

---

भावः । ननु विश्वदेवानुवादेनामिक्षाविधाने आमिक्षाया विश्वदेवाङ्गत्वं सम्भवतु । प्रकृते तु न विश्वदेवानुवादेनामिक्षा विधीयते किन्तु वैश्वदेवेन यजेतेत्युक्तवैश्वदेवानुवादेन । वैश्वदेवपदं हि विश्वेदेवा देवता अस्येति योगात् विश्वदेवदेवताकहविर्वाचकम् । तच्च हविः किमित्याकाङ्क्षायां हविषः आमिक्षारूपत्वविधानात् । एवञ्च हविषो यागाङ्गत्वेनामिक्षाया अपि यागाङ्गता सम्भवत्येवेत्यत आह किञ्चेति । देवतातद्धितत्वात् देवतार्थतद्धितप्रत्ययान्तत्वात् । आमिक्षेति । आमिक्षा अन्तर्गता यस्मिन्नर्थे तादृशार्थक इत्यर्थः । देवता अस्येति व्युत्पत्तौ सम्बन्धित्वेन आमिक्षाया अपि वैश्वदेवीपदेनोपस्थितेरिति भावः । तत्र तथा सतीत्यर्थः । विश्वदेवानुवादेन विश्वदेवपदोल्लेखेन । वैश्वदेवीपदेनैवेत्येवकारेण ननु वैश्वदेवेन यजेतेत्युक्तवैश्वदेवपदेनेति द्योतितम् ।

तथाच वाक्यान्तरोपस्थितवैश्वदेवपदप्राप्तविश्वदेवदेवताकहविष आमिक्षात्वविधानमनुचितं तद्वाक्यघटकवैश्वदेवीत्येकपदेनैव विश्वदेवदेवताकामिक्षारूपहविर्विधानस्य सुघटत्वादिति भावः । अत्र हेतुमाह पदश्रुतेरिति । एकसुबन्तपदरूपश्रुतेरित्यर्थः । अत्र दृष्टान्तमाह यथेति । भावनायामिति । यजेतेत्याख्यातार्थरूपायामित्यर्थः । करणसमर्पणं केनेति करणाकाङ्क्षानिवर्तनम् । धातुना यजधातुना । पदश्रुतेः एकतिङन्तरूपपदश्रुतेः । उपपदेन पदान्तरेण । तद्वदिति । तथा प्रकृतेऽपि वैश्वदेवीत्येकपदेनैव विश्वदेवदेवतासमर्पणं युक्तमित्यर्थः ।

पदान्तरप्राप्तविश्वदेवदेवताकत्वानुवादेनामिक्षामात्रविधाने दोषान्तरमाह तत्र चेति । प्रथमभक्ष इति । अत्र समस्तपदोपात्तयोः प्राथम्यभक्षणयोर्भक्षणानुवादेन प्राथम्यविधाने यथैकप्रसरताभङ्गविरोध आपादितस्तथा प्रकृतेऽपि एकपदोपात्तयोर्विश्वदेवदेवताकत्वामिक्षयोर्विश्वदेवदेवताकत्वानुवादेनामिक्षाविधानेऽपि एकप्रसरताभङ्गरूपो विरोधः स्यादिति

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्च पशुसोमाधिकरणन्यायवैषम्यम्। ऐन्द्रवायवं गृह्णातीत्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात्। यजिकल्पने वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्म्मविधानं युक्तम्, रूपद्वयश्रवणात्। एवञ्चाग्नेयोऽष्टाकपालः सौम्यश्चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्य वाक्यस्य प्रायपाठो रक्षितो भवति। अन्यथा हि तेषु सर्व्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानम्। अत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत।

किञ्च वैश्वदेवेन यजेतेत्यत्र वैश्वदेवस्य देवतासमर्पकत्वे यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति तस्यार्थवादस्यात्यन्तमेव निरालम्बनत्वं स्यात्। यत एतदर्थवादाद्वि

---

भावः। यजिकल्पनं यजेतेतिपदकल्पनम्। अन्यथा यागानुवादेन द्रव्यविधानं न स्यात्। तदन्यथात्वे तु एकप्रसरताभङ्गः स्यादिति भावः।

वैषम्यं प्रतिपादयति ऐन्द्रवायवमिति। ग्रहणविधानेनेति। तथाच गृह्णातीति ग्रहणविधानात् न क्रियान्तरापेक्षेति भावः। वैश्वदेव्यामिक्षेत्यत्र यजिकल्पने विधानस्य युक्तत्वमपि स्यादित्याह यजिकल्पने इति। इत्यत्रैवेत्येवकारेण वाक्यान्तरे देवतायागयोर्विधानम्, एतद्वाक्ये तु द्रव्यमात्रविधानमित्यस्यायुक्तत्वं दर्शितम्। एकत्रोभयविधानस्य युक्तत्वे हेतुमाह रूपद्वयेति। यागस्य द्वे रूपे द्रव्यं देवता च तयोरेकत्रैव वाक्ये उपलम्भादित्यर्थः।

चातुर्मास्ययागप्रथमपर्व्वणि आग्नेयाष्टाकपाल-सौम्यचरु-सावित्रद्वादशकपाल-सारस्वतचरु-पौष्णचरु-मारुतसप्तकपाल-वैश्वदेव्यामिक्षा-द्यावापृथिव्यैककपालानामेकस्यामेव श्रुतौ ये अष्टौ विधयस्तुल्यतया सह पठितास्तेषु सप्तानां यागविधायकत्वमामिक्षाविधेस्तु द्रव्यमात्रविधायकत्वमिति भवन्मते तुल्यपाठता न स्यात्। यजिकल्पने तु सर्व्वेषामेव यागविधायकानां तुल्यपाठता रक्षिता स्यादित्येवं युक्त्यन्तरमाह एवमिति। प्रायपाठस्तुल्यरूपेण पाठः।

दोषान्तरमाह किञ्चेति। निरालम्बनत्वमिति। अयमाशयः। यद्विश्वे देवाः समयजन्तेत्यर्थवादेन वैश्वदेवनाम्नः कस्यचिद्यागस्य वैश्वदेवपदव्यपदेश्यताबीजं प्रदर्शितम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वैश्वदेवशब्दो विश्वदेवकर्तृकत्वेन कर्म्मणि प्रज्ञात इति ज्ञायते। तत् देवतासमर्पकत्वेन विरुध्यते।

किञ्च वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम्। तथाच तया न वाजिनं बाधितुं शक्यत इति उभयोरप्यामिक्षावाजिनयोर्यागाङ्गत्वं स्यात्। तथाच विकल्पः। स चाष्टदोष इति।

---

तच्च वैश्वदेवेन यजेतेत्यस्य नामधेयविधायकत्वाङ्गीकारे तद्‌यागस्य वैश्वदेवनामकत्वप्रसिद्धेः सविषयं स्यात्। वैश्वदेवेनेत्यस्य देवतासमर्पकत्वे तु तस्य तन्नामकत्वानङ्गीकारादर्थवादः कमपि यागविशेषं नालम्बितुं शक्नोति। वैश्वदेवनामकयागान्तरानुपलब्धेरिति।

प्रज्ञातः प्रसिद्धः। तत्, वैश्वदेवशब्दस्य कर्म्मविशेषे प्रसिद्धत्वेन ज्ञानम्। देवतासमर्पकत्वेन वैश्वदेवेन यजेतेत्यस्य आमिक्षायागदेवताबोधकत्वेन। विरुध्यते प्रतिबध्यते। तथाच वैश्वदेवशब्दस्यार्थवादबोधितकर्म्मविशेषप्रसिद्धतया ज्ञानं निर्विषयतया उच्छिद्यत इति भावः।

दोषान्तरमप्याह किञ्चेति। यागविधित्वे यागस्योत्पत्तिविधित्वे। उत्पत्तिशिष्टत्वमुत्पत्तिविधिबोधितत्वम्। तथात्वाभावे दोषमाह तथाचेति। तया आमिक्षया। अबाधने हेतुमाह उभयोरेवेति। यागाङ्गत्वमिति। वाजिभ्यो वाजिनमित्यनेन वाजिनस्यापि वाजिपदाभिधेयविश्वदेवसम्प्रदानकत्वाभिधानादिति भावः। अबाधे को दोष इत्यत आह तथाचेति। विकल्पे दोषमाह स चेति।

अत्र द्वितीयाध्यायद्वितीयपादे देवताभेदकृतकर्म्मभेदाधिकरणे सिद्धान्तो यथा। चातुर्मास्ययागप्रथमपर्व्वणि तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते। अत्रामिक्षावशिष्टं जलं वाजिनम्। वाजिपदेनापि प्रकृता विश्वे देवा उच्यन्ते। वाजेनान्नेनामिक्षारूपेण सम्बद्धा वाजिन इति व्युत्पत्तेः। तदुक्तं भट्टपादैः—

अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः।
विश्वेदेवाः प्रतीयन्ते तच्च कर्म्मेह वाजिनम्॥

अत्र संशयः। किमामिक्षाद्रव्यके विश्वदेवयागे वाजिनगुणो विधीयते, वाजिनद्रव्यकं विश्वदेवयागान्तरं वेति। तत्र वाजिनपदेन विश्वान् देवान् अनूद्य आमिक्षायाग एव वाजिनद्रव्यं विधीयताम्। तच्च द्रव्यमामिक्षया समुच्चीयतां विकल्प्यतां वेति पूर्व्वपक्षे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तस्माद्वैश्वदेव्यामिचेत्यत्रैव यागविधानम्, इतरस्त्वनुवादत्वम्। अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत्। तत्सिद्धं वैश्वदेवशब्दस्य कर्म्मनामधेयत्वम्। तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम्।

अनर्थहेतुकर्म्मणः सकाशात् पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषार्थानुबन्धित्वम्। तथाहि यथा विधयः प्रेरणामभि-

---

सिद्धान्तः। उत्पत्तिशिष्टेनामिक्षाद्रव्येणावरुद्धे विश्वदेवयागे वाजिनद्रव्यस्योत्पन्नशिष्टस्य प्रवेशाभावात् विकल्पस्याष्टदोषदुष्टत्वाच्च वाजिनयागः कर्म्मान्तरमेव। वाजिशब्देन विश्वदेवशब्देन च देवताभेदावगमादिति।

इतरस्य वैश्वदेवेन यजेतेत्यस्य। अनुवादत्वं संज्ञाविधानाय यागानुवादत्वम्। नानर्थक्यमिति। नामधेयविधानार्थकत्वादिति भावः। आस्तां तावदिति। चातुर्मास्ययागप्रथमपर्व्वणि, आग्नेयमष्टाकपालं निर्व्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालञ्चेति समाम्नानात् तत्र च द्वितीयान्तपाठस्य भाष्यवार्त्तिकशास्त्रदीपिकान्यायमालाकारसम्मतत्वात् निर्व्वपतीति क्रियानुषङ्गस्यावश्यकतया यजिश्रुतेः सुग्रहत्वेन तदेकवाक्यतया तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति श्रुत्यन्तरेऽपि यजिकल्पनावश्यकत्वेन तत्कल्पनायै नैतावानपि विस्तरोऽनावश्यक इति ध्येयम्। वैश्वदेवपदस्य कर्म्मनामधेयत्वमुपसंहरति तत्सिद्धमिति। नामधेयस्यार्थवत्त्वमुपसंहरति तदेवमिति।

उद्दिष्टेषु वेदभागेषु क्रमप्राप्तस्य निषेधस्यार्थवत्त्वं प्रदर्शयति अनर्थहेत्विति। अनिष्टजनककर्म्मण इत्यर्थः। निवृत्तिकरत्वेन निवृत्त्युत्पादकत्वेन। पुरुषेति। पुरुषार्थप्रयोजकत्व मित्यर्थः। तथाच सुखं मे भूयात् दुःखं मे माभूदित्युभयोरपि स्वारसिकत्वेन तद्विषययोः सुखप्राप्तिदुःखपरिहारयोरिष्टत्वाविशेषात् यथा यजेत स्वर्गकाम इति विधेः सुखात्मकस्वर्गरूपेष्टप्रयोजकत्वेन पुरुषार्थप्रयोजकत्वं तथा न कलञ्जं भक्षयेदिति निषेधस्यापि नरकादिदुःखपरिहाररूपेष्टप्रयोजकत्वेन पुरुषार्थप्रयोजकत्वमिति भावः।

एतदेवोपपादयति तथाहीति। प्रेरणां स्वकर्तृकप्रवर्त्तनाम्। अभिदधतः बोधयन्तः।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दधतः स्वप्रवर्त्तकत्वनिर्व्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्त्तयन्ति। एवं न कलञ्जं भक्षयेदित्यादयो निषेधा अपि निवर्त्तनामभिदधतः स्वनिवर्त्तकत्वनिर्व्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्तयन्ति।

ननु कथं निषेधानां निवर्त्तनांप्रतिपादकत्वं -यावता न भक्ष

---

विधिवाक्यश्रवणानन्तरमेव इदं वाक्यं स्वप्रतिपाद्ये कर्म्मणि प्रवृत्तिमुत्पादयतीत्यव्यभिचारेणाव गमादिति भावः। विधेः प्रवर्त्तकत्वावधारणेऽपि यावद्विधेयस्येष्टसाधनतानवगमस्तावत्तत्र प्रवृत्त्युत्पत्तेरसम्भवात् विधेः प्रवृत्त्युत्पादकत्वं न निर्वहति, प्राणवियोगफलकव्यापारं कुर्व्वतोऽपि पुरुषस्य प्राणवियोगाभावे घातकत्वानिर्व्वाहवदिति तन्निर्व्वाहार्थमर्थापत्त्या विधेयस्येष्टसाधनत्वमपि ज्ञापयतीत्याह स्वप्रवर्त्तकत्वेति। निर्व्वाहार्थं निष्पत्त्यर्थम्। आक्षिपन्तः विधेयस्येष्टसाधनत्वाभावे विधेः प्रवर्त्तकत्वानुपपत्तिरित्यर्थापत्त्या बोधयन्तः। तत्र विधेये। दार्ष्टान्तिकेऽपि तत्सादृश्यं प्रतिपादयति एवमिति। कलञ्जं ताम्रकूटम्। न कलञ्जं भक्षयेन्न लशुनं न गृञ्जनमिति न्यायमालाधृत श्रुतौ लशुनादि साहचर्य्यादिति केचित्। अन्ये तु—

विषाक्तेनैव बाणेन हतौ यौ मृगपक्षिणौ।
तयोर्मांसं कलञ्जं स्यात्कुष्कमांसमथापि वा॥

इत्युक्तमांसं कलञ्जपदवाच्यमित्याहुः। निवर्त्तनां स्वकर्त्तृकप्रवृत्तिप्रतियन्धीत्पादनाम्। अभिदधतः बोधयन्तः। निषेधवाक्यश्रवणानन्तरमेव इदं निवर्त्तयतीत्यव्यभिचारेण प्रतीतेरिति भावः। निवर्त्तनाप्रतिपादकस्यापि निषेधवाक्यस्य निषेध्यनिष्ठानिष्टजनकत्वज्ञानाभावदशायां पुरुषस्य निवृत्त्यसम्भवात् निवर्त्तकत्वं न निष्पद्यत इति तन्निर्व्वाहार्थमर्थापत्त्या निषेध्यस्यानिष्टजनकत्वमपि निषेधो ज्ञापयतीत्याह स्वनिवर्त्तकत्वेति। अनर्थहेतुत्वम् अनिष्टजनकत्वम्। आक्षिपन्तः निषेध्यस्यानिष्टविशेषजनकत्वाभावे निषेधस्य निवर्त्तकत्वानुपपत्तिरित्यर्थापत्त्या बोधयन्तः। ततो निषिध्यमानात्। निवर्त्तयति प्रवृत्तिप्रतिबन्धमुत्पादयति।

ननु प्रवर्त्तनापरपर्य्याये विधौ लिङोऽनुशासनात् तद्घटितवाक्यस्य प्रवर्त्तनाज्ञानजनकत्वमस्तु। निषेधस्य तु न निवर्त्तनाज्ञानजनकत्वम्, अनुशासनाभावादित्याशङ्कते नन्विति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

येन हन्तव्य इत्येवमादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्ज्जनस्य कर्त्तव्यतैव सर्व्वत्र वाक्यार्थः प्रतीयते। ततश्च यथा यजेतेत्यादौ यागकर्त्तव्यता वाक्यार्थः, एवं निषेधेषु तत्तद्धात्वर्थवर्ज्जनकर्त्तव्यता वाक्यार्थो न निवर्त्तनेति चेन्नैवम्।

अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्ज्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। न ह्यन्योपसर्ज्जनमन्येनान्वेति। माभूद्राजपुरुषमानयेत्यत्र राज्ञ आनयनक्रियान्वयित्वम्। ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः। आरुण्यस्यैकहा-

---

निषेधस्य 'निवर्त्तनाप्रतिपादकत्वाभावे कीदृशो वाक्यार्थोऽङ्गीकरणीय इत्यत आह यावतेति यत इत्यर्थः। अव्यवधानेन न भक्षयेन्न हन्तव्य इत्यादौ नञर्थधात्वर्थयोर्व्यवधानाभावेन। धात्वर्थवर्ज्जनस्येति। धात्वर्थाभावस्येत्यर्थः। नञोऽभावार्थकत्वादिति भावः। सर्व्वत्र विधौ निषेधे च।

एतदेव व्यञ्जयति ततश्चेति। यागकर्त्तव्यतेति। यागस्य लिङर्थभावनायां करणत्वात् तस्य च कर्त्तृव्यापारविशेषत्वेन कर्त्तृकृतिसाध्यत्वावश्यकत्वादिति भावः। धात्वर्थवर्ज्जनकर्त्तव्यतेति। तथाच निषेधस्थलेऽपि भावनाया लिङर्थत्वात् धात्वर्थवर्ज्जनेन भावयेदित्येवं बोधावश्यकत्वेन तत्र करणीभूतस्य धात्वर्थवर्ज्जनस्य कर्त्तृकृतिसाध्यत्वावगमः सुघटः इति भावः। निराकरोति नैवमिति।

प्रत्ययार्थेति। प्रत्ययार्थस्य लिङर्थस्य भावनाया उपसर्ज्जनत्वेन विशेषणत्वेनेत्यर्थः। नञर्थेनेति। नञर्थेन अभावेन अन्वयस्य प्रतियोगितयान्वयस्य अयोगादयुक्तत्वादित्यर्थः। भावनोपसर्ज्जनत्वेनोपस्थितस्य नञर्थेनान्वये बाधकमाह नहीति। यतो विशेषणभावेनेतरान्वितत्वेनोपस्थितस्यान्येनान्वयो न सम्भवतीति व्युत्पत्तिसिद्धमत इत्यर्थः। एतद्व्युत्पत्तिबलादन्यत्रापि तथान्वयो मा भूदित्याह मा भूदिति। आनयनक्रियान्वयित्वमित्यन्वयः। तथाच यथा राज्ञः पुरुषविशेषणत्वेनान्वितस्याकाङ्क्षाविरहादानयनक्रियान्वयो न स्यात् तथा लिङर्थभावनायां करणत्वेनान्वितस्य भक्षणस्य नञर्थाभावेन प्रतियोगितयान्वयो न सम्भवतीति भावः।

आरुण्यस्यैवेति। अरुणयैकहायन्या पिङ्गाक्ष्या क्रीणातीत्यत्र आरुण्यस्य सन्निहितयापि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

च्छायन्या। नापि कलञ्जादिपदार्थैरन्वयः। तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञोऽर्थेनान्वयायोगात्। एकहायन्या इवारुण्येन।

अतश्चान्यत्रान्वयायोगान्नञर्थः प्रत्ययार्थेन सम्बध्यते, तस्य प्राधान्यात्। क्रयभावनयैवारुण्यादीनि। तत्रापि नाख्यातत्वांशवाच्यया अर्थभावनया। तस्या अपि लिङ्त्वांशवाच्यप्रवर्त्तनोपसर्ज्जनत्वेनोपस्थितत्वात्। अतो लिङ्त्वांशेन नञ् सम्बध्यते। तस्य सर्व्वापेक्षया प्राधान्यात्।

नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। नास्तीत्यत्र ह्यस्तीति सत्त्वशब्देन सम्बध्यमानो नञ् सत्त्वप्रतिपक्षत्व-

---

एकहायन्या यथा नान्वयस्तस्या गवान्वितत्वेन निराकाङ्क्षत्वात्तथा प्रकृतेऽपीत्यर्थः। नञर्थस्य कलञ्जादिपदार्थेनान्वयं प्रतिषेधति नापीति। कारकेति। द्वितीयार्थकर्म्मकारकगुणीभूततयेत्यर्थः। भिन्नपदस्येति। यदि तु अकलञ्जं भक्षयेदित्येकपदीभावोऽभविष्यत् तदान्वयोऽप्यभविष्यदिति भावः। एकहायन्या इति। करणकारकगुणभावेनान्वितया एकहायन्या यथा भिन्नपदोपस्थितेनारुण्येन नान्वयस्तथेत्यर्थः।

अतः प्रागुक्तदोषात्। प्रत्ययार्थेन भावनया। ननु प्रत्ययार्थस्याप्यन्योपसर्ज्जनत्वान्नान्वययोग्यतेत्यत आह तस्येति। प्राधान्यात् पदार्थान्तरगुणत्वाभावात्। दृष्टान्तमाह क्रयेति। आरुण्यादीनि यथा क्रयभावनया सम्बध्यन्ते प्राधान्यात् तथेत्यर्थः। ननु प्रत्ययार्थो द्विविधः अर्थभावना शब्दभावना चेति। तत्र कतरेणार्थेन नञर्थान्वय इत्यत आह तत्रेति। अर्थभावनायां बाधकमाह तस्या अपीति। लिङ्त्वेति लिङ्त्वांशस्य वाच्या या प्रवर्त्तना शब्दभावना तदुपसर्ज्जनत्वेन तया तद्गुणभूतत्वेनेत्यर्थः। लिङ्त्वांशेन तद्वाच्यार्थेन शब्दभावनयेति यावत्। नञ् नञर्थः। तस्येतरोपसर्ज्जनत्वेनोपस्थितत्वाभावादबाधितान्वयत्वमाह तस्येति।

ननु तथापि निषेधस्य निवर्त्तनाबोधकत्वं कथं सिद्धमित्यत आह नञश्चेति। स्वसम्बन्धीति। नञन्वितं यत्पदं तदर्थविरोधिबोधकत्वमित्यर्थः। एतदेव साधयति नास्तीति। अस्तीतिसत्त्वशब्देन अस्तीतिसत्तावाचकशब्देन। सम्बध्यमानोऽन्वीयमानः। सत्त्वप्रति-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मसत्त्वं गमयति। तदिह लिङर्थस्तावत्प्रवर्त्तना। अतस्तेन सम्बध्यमानो नञ् प्रवर्त्तनाप्रतिपक्षां निवर्त्तनां गमयति। विधिवाक्यश्रवणे अयं मां प्रवर्त्तयतीति प्रवर्त्तनाप्रतीतिवन्निषेधवाक्यश्रवणे अयं मां निवर्त्तयतीति निवृत्त्यनुकूलव्यापाररूपनिवर्त्तनायाः प्रतीतेः।

---

पक्षं स्वत्वविरोधि। असत्त्वमिवि। सत्त्वासत्त्वयोर्युगपदेकत्रानवस्थानादसत्त्वस्य सत्त्वविरोधित्वमिति भावः। तत् तस्मात्। इह न कलञ्जं भक्षयेदित्यादिनिषेधप्रदेशे। तेन लिङर्थेन। नञ् नञर्थः। प्रवर्त्तनाप्रतिपक्षां प्रवर्त्तनाविरोधिनीम्। का सा प्रवर्त्तनाप्रतिपक्षेत्यवाह निवर्त्तनामिति। निवृत्त्युत्पादनामित्यर्थः। प्रवर्त्तनानिवर्त्तनयोरेकत्रानवस्थानान्निवर्त्तनाया एव प्रवर्त्तनाविरोधित्वादिति भावः।

एतदेव दृष्टान्तेन साधयति विधिवाक्येति। अयं विधिः। मां प्रवर्त्तयति मदीयप्रवृत्तिमुत्पादयति। प्रतीतेरिति। तथाच नञ्पदासमभिव्याहारस्थले लिङो यदि धात्वर्थकरणिकां भावनाख्यां प्रवृत्तिमुत्पादयतीति प्रतीतिजनकत्वं तदा नञ्पदसमभिव्याहारस्थले तद्विरोधिता प्रतिपादनावश्यम्भावात् सुतरां धात्वर्थकरणिकामिष्टभावनाख्यां प्रवृत्तिं प्रतिबध्नातीति प्रतीतिजनकत्वं सिध्यतीति भावः। अत्र शास्त्रदीपिकायां षष्ठाध्यायद्वितीयपादे—

"नञ्भक्षयत्योः सन्निवेशात् भक्षणाभावः प्रतीयते। तत्र भक्षणाभावोऽननुष्ठेयत्वादविधेय इति तद्धेतुः सङ्कल्पो विधीयत इति पूर्व्वपक्षयित्वा सिद्धान्तितम्।

नञ्भक्षयत्योरेवन्तु स्वार्थहानिः प्रसज्यते।
सङ्कल्पलक्षणा चात्र श्रुतेरत्यन्तबाधनम्॥" इति।

श्रुतेरिति भक्षणस्य लिङर्थभावनया यः सम्बन्धः स श्रुत्यावगम्यते तस्यैकान्ततो बाध इत्यर्थः।

अन्यत्रोक्तं तत्रैव—

"भक्षयेदिति पदं परिपूर्णं नञा सम्बध्यते भक्षयेन्नेति। भक्षयेदिति च भक्षणभावनायां प्रवर्त्तनावगम्यते। नञा सम्बद्धेन विधिना तद्विपरीतनिवर्त्तनाप्रतीतिः। निवर्त्तना च निवृत्तिफलो व्यापारः" इति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ततश्च सर्व्वत्र निषेधेषु निवर्त्तनैव वाक्यार्थः । एवञ्च विधि-निषेधयोर्भिन्नार्थत्वं सिद्धं भवति । हननादिवर्ज्जनकर्त्तव्यता-वाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात्, तच्च न युक्तम् । यथाहुः—

अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः ।
दृश्यते तादृशीवेदं विधानप्रतिषेधयोः ॥ इति ।

तथा—फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।
पञ्चधात्यन्तभिन्नत्वाद्भिदो विधिनिषेधयोः ॥ इति ।

---

उपसंहरति अतश्चेति । भिन्नार्थकत्वमिति । प्रवर्त्तनानिवर्त्तनाबोधकत्वादिति भावः । नञर्थेन धात्वर्थान्वयात् हननाद्यभावस्य कर्त्तव्यताबोधकत्वपक्षे तु भिन्नार्थत्वं न सम्भवतीत्याह हननादीति । एकार्थत्वमिति । तथाच विधिनिषेधत्वेन पारस्परीयः पृथग्विभागो न स्यादिति भावः । ननु द्वयोरेव विधित्वमिष्टमेव । पृथग्विभागस्तु नञ् पदासमभिव्याहार-तत्समभिव्याहाराभ्यां संज्ञाभेदादित्यत आह तच्चेति । अयुक्तत्वं प्रमापयति यथाहुरिति ।

अन्तरमिति । ब्रह्महत्याश्वमेधयोर्निषेध्यविधेययोरिति शेषः । इदम् अन्तरम् । तथाच विधिनिषेधयोर्द्वयोरेकार्थत्वे अश्वमेधादेरिव ब्रह्महत्याद्यभावस्यापि विधेयत्वे अश्वमेधादेर्विधेयत्व' ब्रह्महत्यादेस्तु निषेध्यत्वं नोपपद्यते । निषेध्यपदेनापि भवन्मते निषेधविधिबोधितत्वेन ब्रह्महत्या अभावस्यैव निषेध्यत्वापत्तेः । अस्मन्मते तु यथा यागेनेष्टोत्पत्तिं प्रति प्रवर्त्तेतेति विध्यर्थेन इष्टोत्पत्तेः प्रवृत्तिजन्यत्वस्य बोधनात् तत्करणस्यापि यागस्य प्रवृत्तिजन्यत्वस्य बोधितत्वेन यागस्य विधेयत्वम् । तथा ब्रह्महत्यया इष्टोत्पत्तितो निवर्त्तेतेति निषेधवाक्यार्थेन इष्टोत्पत्तेर्वर्ज्जनीयत्वस्य बोधितत्वेन तत्करणस्यापि ब्रह्महननस्य वर्ज्जनीयतया बोधितत्वात् ब्रह्महननस्य निषेध्यत्वं सुघटम् । विधिनिषेधवाक्यजन्यबोधविषयस्यैव विधेयनिषेध्यत्वादिति भावः ।

प्रमाणान्तरेणापि विधिनिषेधयोर्भेदं साधयति तथेति । फलेति । विधेयनिषेध्ययोः फलभेदः स्वर्गनरकादिरूपः । बुद्धिभेदः कर्त्तव्याकर्त्तव्यत्वप्रकारेण निश्चयभेदः । तथाच यजेतेत्युक्ते यागस्य कर्त्तव्यत्वप्रकारा बुद्धिर्न हन्यादित्युक्ते च हननस्याकर्त्तव्यत्वप्रकारा । न पुनर्हननाभावस्य कर्त्तव्यताबुद्धिः श्रुतिमात्रेण जायत इति भावः । प्रमेयभेदः विधि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यन्मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति। सर्व्वथापि तु नञः प्राधान्यात् प्रत्ययेनान्वयः। यदा तु तदन्वये किञ्चिद्बाधकं तदा अगत्या धात्वर्थेनान्वयः।

तच्च बाधकं द्विविधम्। तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च। अनेन बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्य्युदासाश्रयणं भवति, तदभावे निषेध एव।

पर्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्। इति।

---

निषेधश्रवणप्रमाणद्वयजन्यप्रमितिविषययोः प्रवृत्तिनिवृत्त्योर्भेदः। विधौ स्वर्गकामादि रूपोऽधिकारी निषेधे च प्रवृत्तिमानित्यधिकारिभेदः। बोधकभेदो नञ् पदासमभिव्याहृत-तत्समभिव्याहृतवाक्ययोर्भेदः। पञ्चधा पञ्चप्रकारैः। अत्यन्तभिन्नत्वाद्भ्रतोऽप्यैक्याभावात्।

लिङर्थमिष्टसाधनतां मन्यमानानां नैयायिकानां मतेऽपि नञ् पदसमभिव्याहारस्थले नञर्थस्य लिङर्थेन सहैवान्वय इत्याह यन्मते इति। सर्व्वथा उभयमतेऽपि। नञ इति। प्रत्ययेनान्वय इति सम्बन्धः। प्राधान्यात् प्रत्ययस्य विशेष्यीभूतार्थप्रकाशकत्वात्। यदा पुनर्नञर्थस्य विशेष्यीभूतार्थेनान्वयबाधस्तदा विशेषणीभूतार्थेनाप्यन्वयः। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः "सति विशेष्ये बाधे इति न्यायादित्याह यदा त्विति। अगत्येति। तथाच प्रकृतिप्रत्ययौ प्रकृत्यर्थविशिष्टं प्रत्ययार्थं सह ब्रूत इति नियमात् प्रकृतिप्रत्ययार्थयोरन्तराले पदार्थान्तरान्वयानौचित्येऽपि बाधकबलात् गत्यन्तराभावेन तदन्तराले नञर्थान्वयोऽभ्युपगन्तव्यो न तु गत्यन्तरसम्भवे तन्नियमभङ्गोऽङ्गीकार्य्य इति भावः।

किं तद्बाधकमित्यत्राह तच्चेति। तथाविधस्थले कीदृशो वाक्यार्थ इत्यत्राह अनेनेति। नञ्युक्तेषु नञ् पदसमभिव्याहृतेषु। पर्य्युदासाश्रयणमिति। पर्य्युदासरूपोऽर्थ आश्रयणीय इत्यर्थः। तदभावे बाधकाभावे। उत्तरपदे लिङ्पदे। न नञ् न नञ् पदान्वयः। तथाच यत्र यत्र लिङर्थेतरत्र नञर्थान्वयस्तत्र तत्र वाक्ये पर्य्युदास एवार्थ इति भावः। क्रियया लिङर्थशब्द

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ् । इति च तयोर्लक्षणम् । तत्र नेक्षेतोद्यन्तमादित्यमित्यादौ पर्य्युदासाश्रयणं तस्य व्रतमित्युपक्रमात् ।

तथाहि व्रतशब्देन कर्त्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्त्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् किं तत्कर्त्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यन्तमित्यादौ कर्त्तव्य एवार्थो वक्तव्यः, आकाङ्क्षिताभिधानात् । अर्थान्तरोक्तौ च पूर्व्ववाक्यस्य साकाङ्क्षत्वेनाप्रामाण्यं स्यात् । नहि कर्त्तव्यार्थस्य वक्तव्यत्वेनोपक्रमे अग्रे च तदनभिधाने पूर्व्ववाक्यस्य निराकाङ्क्षत्वं सम्भवति । न च साकाङ्क्षस्य प्रामाण्यम्, गौरश्वः पुरुष इत्यादावपि प्रसङ्गात् ।

---

भावनया । नञ् नञ् पदार्थान्वयः । तयोः पर्य्युदासप्रतिषेधयोः । बाधकद्वयमुदाहरिष्यन् आद्यं बाधकं प्रथममुदाहरति तत्रेति । तस्य व्रतमिति । उपक्रमादिति । स्नातकव्रतोपक्रमे हि नोद्यन्तमादित्यमीक्षेत नास्तं यान्तमित्यादयःश्रुता इति भावः ।

पर्य्युदासपरत्वं विवृणोति तथाहीति । कर्त्तव्यः कृतिसाध्यः । अर्थ इष्टसाधनम् । अग्रे अग्रिमवाक्ये । आकाङ्क्षितेति । पूर्व्ववाक्याकाङ्क्षितपदार्थाभिधानस्यौचित्यादित्यर्थः । कर्त्तव्यकर्म्मविशेषवक्तव्यताप्रतिज्ञायां वर्ज्जनीयकर्म्मविशेषाभिधानस्यानौचित्यमिति भावः । वर्ज्जनीयार्थाभिधानस्यानौचित्यं प्रतिपादयति अर्थान्तरोक्ताविति । वर्ज्जनीयार्थोक्तावित्यर्थः ।

पूर्व्ववाक्यस्य तस्य व्रतमित्युपक्रमवाक्यस्य । साकाङ्क्षत्वेन किं तत्कर्त्तव्यकर्म्मस्वरूपं व्रतमित्याकाङ्क्षाया अनिवृत्तत्वेन । अप्रामाण्यात् वक्तव्यस्य व्रतस्यानभिहितत्वेन तत्प्रतीतिजनकत्वाभावात् । ननु तस्य व्रतमिति पदद्वयार्थयोः परस्परान्वयात् कथं साकाङ्क्षत्वम् अन्वये सति आकाङ्क्षानिवृत्तेरावश्यकत्वादित्यत आह नहीति । निराकाङ्क्षत्वं सम्भवतीति । तथाच पदद्वयार्थयोरन्यतरेणान्यतरस्य निराकाङ्क्षीकृतत्वेऽपि किं तद्व्रतमित्याकाङ्क्षाया अनिवृत्तेः कथं निराकाङ्क्षत्वसम्भव इति भावः ।

ननु वक्तव्यार्थप्रतिपादकवाक्यान्तरविरहेण वाक्यान्तरसाकाङ्क्षपूर्व्ववाक्यस्य महावाक्यघटकत्वाभावेऽपि वाक्यत्वात् कथमप्रामाण्यमुच्यत इत्यत आह न चेति । गौरश्व इति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किञ्च नेच्छेतेत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात्, अर्थान्तरोक्तेः । अतश्चास्मिन् वाक्ये कश्चित्कर्त्तव्य एवार्थो वक्तव्यः । तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते । तत्सम्बन्धे कर्त्तव्यार्थोक्तेरनुपपत्तेः । प्रत्ययाच्चावतारितो नञ् धातुना सम्बध्यते । तत्सम्बन्धे च न नञः प्रतिषेधकत्वम् । विधायकसम्बन्धेनैव च तस्य प्रतिषेधकत्वात् । प्रतिषेधस्य विधायकप्रतिपक्षत्वात् ।

नामधातुयोगे तु न नञः प्रतिषेधकत्वम्, तयोरविधायकत्वात् । यथाहुः—

नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः ।
वदत्यब्राह्मणाधर्म्मावन्यमात्रविरोधिनौ ॥ इति

---

गौरित्यादिः साकाङ्क्षपदस्य वाक्यघटकत्वाभावेऽपि प्रमाणत्वप्रसङ्गादित्यर्थः । तथाच यथा गौरित्यादिः क्रियापदसाकाङ्क्षतया वाक्यघटकत्वाभावादभिप्रेतार्थविषयकप्रमाजनकत्वाभावेनाप्रामाण्यं तथा तस्य व्रतमित्यस्यापि वाक्यान्तरसाकाङ्क्षतया महावाक्यघटकत्वानुपपत्त्या वक्तव्यविषयप्रमाजनकत्वाभावेनाप्रामाण्यमिति भावः ।

न केवलमुपक्रमवाक्यस्याप्रामाण्यमापद्यते । उत्तरवाक्यस्योपक्रमवाक्येनैकतात्पर्य्यकत्वमपि व्याहन्यत इत्याह किञ्चेति । अर्थान्तरोक्तेः व्रतेतरपदार्थोक्तेः । अत इति । उपक्रमवाक्यानुरोधादित्यर्थः । तदुक्तौ कर्त्तव्यार्थस्य प्रतिपादनावश्यकत्वे । प्रत्ययेन लिङा । प्रत्ययाच्चावतारितः । प्रत्ययान्वयान्निवर्त्तितः । विधायकसम्बन्धेन प्रवर्त्तकलिङ्सम्बन्धेनैव । तस्य नञः । प्रतिषेधकत्वात् निवर्त्तकत्वात् ।

नञो विधायकसम्बन्धादेव प्रतिषेधकत्वे हेतुमाह प्रतिषेधकस्येति । विधायकेति । तथाच नञ् येन सम्बध्यते तदर्थप्रतिपक्षत्वं बोधयेदिति नियमात् विधायकलिङ्सम्बद्धस्य नञो लिङर्थप्रवर्त्तनाप्रतिपक्षत्वबोधकत्वमिति भावः ।

विधायकसम्बन्धेनैवेत्येवकारव्यवच्छेद्यमाह नामेति । नामान्वये धात्वन्वये चेत्यर्थः । अविधायकत्वादिति । विधायकभिन्नत्वादित्यर्थः । तथाच तदन्वये विधायकप्रतिपक्षत्वबोधकत्वासम्भव इति भावः । तत्र प्रमाणमाह यथाहुरिति ।

नामेति । नामान्वयी धात्वन्वयी चेत्यर्थः । ननु तर्हि अब्राह्मणाधर्म्मपदघटको नञ् किंवाचकमित्यत आह वदतीति । अब्राह्मणाधर्म्मपदघटको नञ् अब्राह्मणं ब्राह्मणादन्य-


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्च नेच्छेतेत्यत्र नञो धातुयोगान्नञीच्छतिभ्यामीच्छणविरोधी कथनार्थः प्रतिपाद्यते ।

ननु तदन्य-तद्विरुद्ध-तदभावेषु नञिति सत्यपि स्मरणे नञः स्वसंसृष्टाभावे शक्तिः, लाघवात् । न तदन्यत्वतद्विरुद्धत्वयोः, तयोरभावघटितत्वेन गौरवात् अनेकार्थत्वस्य चान्याय्यत्वात् । अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव । न तद्विरुद्धार्थ-बोधकत्वमिति चेत्, सत्यम्, नञोऽभाव एव शक्तिः । स्मरणन्तु प्रतीत्यभिप्रायम्, न शक्त्यभिप्रायम् ।

---

भावं वदति अधर्मञ्च धर्मविरोधिनं वदतीत्यर्थः । अतश्चेति । धात्वन्वयिनो नञः प्रतिषेधक-त्वासम्भवाच्चेत्यर्थः । नञीच्छतिभ्यां नञ्पदेच्छधातुभ्याम् । ईच्छणविरोधी ईच्छणभिन्नः ।

नञीच्छतिभ्यामीच्छणाभाव एव प्रतीयते न पुनरीच्छणविरोधीति पूर्व्वपक्षयति नन्विति । स्वसंसृष्टेति । स्वार्थान्वितार्थप्रतियोगिकाभावे इत्यर्थः । लाघवात् शक्यतावच्छेदकलघुत्वात् । तदन्यत्वादौ तु न शक्तिरित्याह न तदन्यत्वेति । अत्र हेतुमाह तयोरिति । तदन्यत्वतद्विरुद्ध-त्वयोरित्यर्थः । अभावघटितत्वेनेति । तथाच तदन्यत्वं तत्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिका-भाववत्त्वम् । तद्विरुद्धत्वञ्च तेन सहैकत्रावस्थानाभाववत्त्वमिति तयोर्द्वयोरेवाभावघटितत्वेन अभावत्वेनैव शक्त्यङ्गीकारे तयोरपि संग्रहात् तत्र तत्र शक्तिस्वीकारे अनेकशक्तिकल्पने गौरवमिति भावः । न केवलं गौरवं सिद्धान्तविरोधश्चेत्याह अनेकार्थत्वेति । अन्याय्यत्वादिति । तथाच अन्याय्यश्चानेकार्थत्वमिति मीमांसकसिद्धान्तविरोध इति भावः । अत इति । अभावत्वेनैव नञ्पदशक्तेरित्यर्थः ।

नञोऽभावत्वेनैव शक्तिरित्यभ्युपगम्योत्तरति सत्यमिति । प्रतीत्यभिप्रायमिति । क्वचिदन्यो-ऽन्याभावत्वेन क्वचिदेकत्रावस्थानाभावत्वेन च प्रतीतेस्तदभिप्रायमित्यर्थः । न तु नानाशक्त्यभि-प्रायमिति भावः । नञा असम्बन्धात् तस्य व्रतमित्युपक्रमानुरोधेन नञ्पदेन सम्बन्धानौचित्यात् । प्रत्ययस्य नञा सम्बन्धे प्रतिषेधस्यैव प्रतीतेरिति भावः । तेन नञीच्छतिरूपपदद्वयेन । प्रत्ययार्थे बाधिते नञीच्छत्योरेवावशिष्टत्वादिति भावः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथापि नेक्षेतेत्यत्रैतप्रत्ययस्य नञा असम्बन्धात्तेन तावत् कश्चिदर्थो विधेयः। तत्र न तावद्धात्वर्थो विधातुं शक्यते, नञा तदभावबोधनात्। नापि तदभावो विधातुं शक्यते, अभावस्याविधेयत्वात्। अतश्च नञोच्चतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते। स चेक्षणविरोधी लक्ष्यमाणः पदार्थो ऽनेक्षेतेत्यनीक्षणसङ्कल्पः, तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्व्वक्रियाऽविनाभूतत्वेन सङ्कल्पस्यैवाव्यभिचारात्। स एव नेक्षेतेत्यत्र कर्त्तव्यतया विधीयते।

---

ननु यदि यः कश्चिदर्थो विधेयः स्यात्तदा धात्वर्थ एव विधीयतामित्यत आह तत्र न तावदिति। नञेति। धात्वर्थान्वितेन नञा धात्वर्थाभावबोधनादित्यर्थः। तर्हि धात्वर्थाभाव एव विधीयतामित्यत आह नापीति। अविधेयत्वात् अनुपादेयत्वात् कृति साध्यत्वाभावादिति यावत्। विधानयोग्यः कृतिसाध्यः। ईक्षणविरोधी ईक्षणभिन्नः। लक्षणया अभावशक्तस्य नञोऽन्योऽन्याभावपरतया अजहत्स्वार्थलक्षणया, अन्योऽन्याभाव विशिष्टपरतारूपवैशिष्ट्यलक्षणया चेत्यर्थः। कोऽसावर्थः इत्यत्राह स चेति। अनीक्षण सङ्कल्प इति। सङ्कल्पः कर्म्म मानसमित्युक्तेर्मानसव्यापारविशेषः सङ्कल्पः। स च भावपदार्थयागादौ मयैतत्कर्त्तव्यमिति निश्चयः। अभावपदार्थे च मयैतन्न कर्त्तव्यमिति निश्चयः। प्रकृते चाभावस्थलीयत्वेन ईक्षणं मया न कर्त्तव्यमिति निश्चय एवानीक्षणसङ्कल्पः।

ननु पर्य्युदासाश्रयणादीक्षणभिन्नत्वेन कर्म्मान्तरस्यापि प्राप्तिः सम्भवति। तत्कथमनीक्षणसङ्कल्पो गृह्यत इत्यत आह तस्येति। तथाच ईक्षणेतरयावत्कर्म्मानुष्ठानस्यैकैकपुरुषाशक्यतया तद्विधानासम्भवात्, ईक्षणेतरस्य कर्म्मविशेषस्य विधानेऽपि ईक्षणस्यानिवार्य्यत्वापत्तेश्च ईक्षणविरोधिरूपस्य ईक्षणेतरस्यैव ग्रहणं न्याय्यमिति भावः।

ननु हस्ताद्यावरणरूपस्य ईक्षणविघटनपदार्थान्तरस्य सत्त्वात् कथमनीक्षणसङ्कल्पस्यैव ग्रहणमित्यत आह सत्यपीति। सर्व्वक्रियेति। सर्व्वासु क्रियासु अविनाभूतत्वेन अव्यभिचरित्वेनेत्यर्थः। तथाच सर्व्वक्रियायाः संङ्कल्पव्याप्यतया हस्ताद्यावरणस्यापि सङ्कल्पमूल-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अनीक्षणसङ्कल्पेन भावयेदिति । भाव्याकाङ्क्षायाञ्च एतावता ह्येनसा वियुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते ।

एवञ्चात्र पापक्षयार्थसङ्कल्पस्य कर्त्तव्यतया विधानात् तस्य व्रतमित्यनेनैकवाक्यता सिध्यति । तल्लिङ्गं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात् पर्य्युदासाश्रयणमिति ।

नानुयाजेषु येयजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदा

---

तया मूलभूतस्यानीक्षणसङ्कल्पस्यैव ग्रहणमुचितमिति भावः । विधानप्रकारमाह अनीक्षणेति । तथाचोक्तं न्यायमालायां चतुर्थाध्यायप्रथमपादे—

यद्यपि ईक्षणादितरे बहवो व्यापारा अनुष्ठानयोग्याः सन्ति तथापि कायिकवाचिकव्यापारविशेषस्याप्रतीयमानत्वान्मानसव्यापारस्यावर्ज्जनीयत्वाच्च सङ्कल्प एव परिगृह्यते । सङ्कल्पनीयस्यार्थः प्रत्यासत्त्या धात्वर्थनिषेधः । तथाच उद्यन्तमस्तं यान्तञ्चादित्यं नेक्षिष्ये इत्येवंरूपः सङ्कल्पोऽत्रानुष्ठेयत्वेन विधीयत इति ।

भाव्याकाङ्क्षायां भावयेदित्यत्र किं भावयेदिति कर्म्माकाङ्क्षायाम् । एतावतेति । एतावता व्रतजातेन । एनसा पापेन । वाक्यशेषेति । तस्यव्रतमित्युपक्रम्य आम्नातानां नेक्षेतोद्यन्तमित्यादिवाक्यानामन्तवाक्ये नावगत इत्यर्थः । मनुनापि चतुर्थाध्याये—

अतोऽन्यतमया वृत्त्या जीवंश्च स्नातको द्विजः ।
स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥

इत्युपक्रम्य नेक्षेतोद्यन्तमादित्यमित्यादीनि नञ् पदघटितानि बहूनि वाक्यान्यभिधायोपसंहृतम्—

अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित् ।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥ इति ।

उपसंहरति तल्लिङ्गमिति ।

विकल्पप्रसक्तेर्नञो लिङन्वयबाधकत्वं दर्शयति नानुयाजेष्विति । येयजामहं येयजामह इति मन्त्रविशेषम् । पर्य्युदासाश्रयणं नञोऽनुयाजपदेनान्वयादन्योन्याभावार्थतास्वीकरणम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रयणम्। तथाहि यत्रत्र प्रधानसम्बन्धलोभान्नञः प्रत्यय-सम्बन्धः स्वीक्रियेत तथा सत्यनेन वाक्येनानुयाजेषु येयजामहः प्रतिषिध्यत इति वक्तव्यम् अनुयाजेषु येयजामहं न कुर्य्यादिति। न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति। प्राप्तिसापेक्ष-त्वात् प्रतिषेधस्य।

अतएव नान्तरिक्षे न दिवीत्यस्य न प्रतिषेधकत्वम्। अन्त-रिक्षे चयनाप्राप्तेः। अतएव न ब्राह्मणो हन्तव्य इत्यस्य नित्यव-द्धननिवर्त्तकत्वमुपपद्यते। सर्व्वो हि पुरुषः कदाचिद्धननादौ

विकल्पप्रसक्तिमवगमयति तथाहीति। प्रधानेति। नञो लिङा सम्बन्धः प्रधानेन सम्बन्धस्तस्य लोभात् तस्याभ्यर्हितत्वबोधादित्यर्थः। प्रत्ययसम्बन्धो लिङ्सम्बन्धः। प्रतिषिध्यते वर्ज्जनीय-त्वेन बोध्यते। लिङन्वितस्य नञो लिङर्थप्रवर्त्तनाविरोधिनिवर्त्तनाबोधकतया वर्ज्जनीय-त्वप्रतिपादकत्वात्। कर्त्तव्यं प्रतिपादयितव्यम्। स च प्रतिषेधो न सम्भवति तस्य प्राप्ति-सापेक्षत्वात् अनुयाजेषु च येयजामहस्य रागादप्राप्तेरित्याह न चेति। तत्र अनुयाजेषु। तस्य येयजामहस्य। प्राप्तिसापेक्षत्वादिति। तथाच प्राप्तिः कर्त्तव्यताबुद्धिः। आदौ कर्म्मणः कर्त्तव्यताबुद्धिमन्तरेण वर्ज्जनीयताबुद्धिर्न जायत एव। नहि हस्तेनेन्दुमण्डलस्पर्शनस्य वर्ज्जनीय-ताबुद्धिः पुंसो दृष्टा। प्रागस्य कर्त्तव्यताबुद्धेरसम्भवात्। एवञ्च वर्ज्जनीयताप्रतिपादकः प्रतिषेधः कर्त्तव्यताज्ञानमपेक्षत एवेति भावः।

अतएवेति। प्रतिषेधस्य प्राप्तिसापेक्षत्वादेवेत्यर्थः। नान्तरिक्षे इति। तथाच श्रुतिः। न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति। अन्तरिक्षे अग्निचयनस्यासम्भवेनाप्राप्तेर्नान्तरिक्ष इति वाक्यं न प्रतिषेधः, किन्त्वनुवाद एव। तथाच प्रथमाध्यायद्वितीयपादे भाष्यम्—

> न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति। हिरण्यं निधाय चेतव्य इत्या-काङ्क्षितत्वादस्य शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्थां। असति प्रसङ्गे प्रतिषेधो नित्यानुवाद इति।

अतएव प्राप्तिसत्त्वं निषेधस्य निवर्त्तकत्वादेव। नित्यवत् सर्व्वथा। हननस्य रागतः प्राप्तत्वादिति भावः। हननस्य रागतः प्राप्तिं दर्शयति सर्व्वोहीति। निषेधस्य प्राप्तिसापेक्ष

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रवर्त्तते। तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागादि तिरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्त्तितव्यम्।

प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्ते रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः।

अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वम्। व्रीहीनवहन्यादित्यस्येवावघातनियमबोधकत्वम्। यथाखलु व्रीहीनवहन्यादित्यादिशास्त्रं वैतुष्यार्थमवघाते स्वतः

---

नभ्युपगमे दोषमाह तत्र यदीति। रागादि रागादिकं निमित्तम्। तिरोधाय विजित्य। प्रामाण्योपपत्ताविति। तथाच यः पुमान् रागादिकं न्यक्कृत्य हननादावप्रवृत्त एव वर्त्तते न हन्तव्य इति निषेधशास्त्रस्य तद्विषयत्वेनैवोपपत्तौ यो रागादिना प्रवर्त्तते तेन न निवर्त्तितव्यं, निषेधशास्त्रस्य प्रवृत्तविषयत्वानावश्यकत्वादिति भावः।

निषेधस्य प्राप्तिसापेक्षत्वाङ्गीकारे तु नैष दोष इत्याह प्राप्तीति। स्वयमप्रवृत्तं रागाद्यभावेनाप्रवृत्तम्। प्रसक्त्यभावेन। हननप्राप्त्यभावेन। प्रवृत्तं रागादिना हननप्रवृत्तम्। प्रत्येवेति। एवकारेण प्रतिषेधशास्त्रस्याप्रवृत्तविषयत्वे साफल्यं नास्तीति दर्शितम्।

भ्रान्तिनिमित्तरागबाधेनेति। भ्रान्तिर्निमित्तं यस्य तथाविधस्य रागस्य बाधेन रागनिमित्तभूतस्येष्टसाधनताज्ञानस्य भ्रान्तित्वसम्पादनया रागजन्यव्यवहारप्रतिबन्धेनेत्यर्थः। तथाच हननं बलवदनिष्टाननुबन्धीष्टसाधनं वैरनिर्यातनफलकत्वादनिष्टविशेषादर्शनाच्चेति हननस्य बलवदिष्टाननुबन्धीष्टसाधनताज्ञानमादौ भवति ततस्तस्मिन्निच्छा जायते तदनन्तरञ्च तस्मिन् प्रवर्त्तते। तदानीं न हन्तव्य इति प्रतिषेधवाक्येन हननं बलवदनिष्टसाधनमिति बोधिते हननस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वेन यज्ज्ञानं प्रागासीत् तस्य भ्रान्तित्वमेव पुरुषो निश्चिनोति। ततस्तज्जनितरागस्याप्यनुचितत्वावधारणेन जायमानामपि प्रवृत्तिं संहरन् चेष्टातो निवर्त्तत इति रागजन्यव्यवहारप्रतिबन्धाद्रागबाध इति भावः।

अतश्चेति। निषेधस्य प्रवृत्तविषयत्वादित्यर्थः। नियमबोधकत्वे दृष्टान्तमाह व्रीहीनिति। अवहन्यादित्यस्य नियमबोधकत्वं व्यञ्जयति यथा खल्विति। शास्त्रमिति। न

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात्। किन्तु दलनादौ प्रवृत्तं प्रति। एवं न हन्यादिति शास्त्रं हननात् स्वयं प्रवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात्। किन्तु हनने प्रवृत्तं पुरुषं प्रति, कर्त्तव्यत्वेन प्रसक्तस्य निषेधात् यत्कर्त्तव्यं तन्नेति।

अतश्च प्राप्तिसापेक्षत्वात् प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या, सा न तावद्धननादाविव रागतः सम्भवति। अतो यजतिषु येयजामहं करोतीति शास्त्रात् सा वक्तव्या। शास्त्रप्राप्तस्य निषेधे विकल्पः स्यात्। शास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात्।

---

प्रवर्त्तत इत्यन्वितम्। वैयर्थ्यादिति। स्वतः प्रवृत्तस्य पुरुषस्य अवघातप्रवृत्त्युत्पादनानावश्यकत्वादिति भावः। दलनादाविति। वैतुष्यस्य नानोपायसाध्यत्वेन अवघातमुत्सृज्य यः पुमान् वंशनाख्यादिना दलनादौ वैतुष्याय प्रवर्त्तते तं प्रतीत्यर्थः। एतत्सादृश्यं दार्ष्टान्तिके अवगमयति एवमिति। वैयर्थ्यादिति। निवृत्तस्य निवृत्त्युत्पादनानावश्यकत्वादिति भावः। कर्त्तव्यत्वेनेति। यत्कर्त्तव्यं कर्त्तव्यतया निश्चितं तद्वस्तुतो न कर्त्तव्यमिति निषेधादित्यर्थः।

तस्मादनुयाजेषु येयजामहप्रतिषेधाङ्गीकारे तत्र तत्प्राप्तिर्वक्तव्येत्याह अतश्चेति। सा च प्राप्तिर्न रागतः सम्भवतीत्याह सा नेति। एवञ्च शास्त्रादेव तत्प्राप्तिरङ्गीकार्येत्याह अत इति। यजतिष्विति। यजति यागेषु। एतच्च येयजामहसहितं मन्त्रगणमभिधायाम्नातायाः "एष वै सप्तदश प्रजापतिर्यज्ञे यज्ञे अन्वायत्त" इति श्रुतेस्तात्पर्य्यार्थमादायोपरचितं वाक्यं न तु साक्षात् श्रुतिरेषा। भाष्यादौ एष वै सप्तदश प्रजापतिरित्यादिश्रुतेरेव विषयवाक्यतया दर्शितत्वात्।

भवतु शास्त्रादेव प्राप्तिर्वक्तव्या का हानिरित्यत आह शास्त्रप्राप्तस्येति। विकल्पः इच्छया येयजामहमन्त्रं पठेन्न पठेद्वेत्येवंरूपः। ननु यथा रागप्राप्तस्य शास्त्रेण सर्व्वदा बाधो रागनिमित्तस्य भ्रान्तित्वकल्पनात्, तथा येयजामहस्यापि सर्व्वदैव बाधः स्यादित्यत आह शास्त्रेणेति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च पदशास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु येयजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्। शास्त्रयोर्हि न तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता। नहि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षास्ति। निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा।

एवञ्च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवत् विधि-

---

ननु यदि शास्त्रेण शास्त्रान्तरबाधो न युज्यते तदा आहवनीये जुहोतीति सामान्यशास्त्रप्राप्तस्याहवनीयस्य यागविशेषमात्रेन यदि जुहोतीत्यनेन बाधः सिद्धान्तसिद्धो विरुध्येत। तस्मात् तद्वत् येयजामहनिषेधशास्त्रेण विशेषेण येयजामहकरणशास्त्रं सामान्यं सर्व्वदैव बाध्यतामित्यापत्तिं परिहरति न चेति। परिहारकं हेतुमाह शास्त्रयोर्हीति। परस्येति। विशेषशास्त्रस्येत्यर्थः। निरपेक्षता स्वप्रवृत्तौ सामान्यशास्त्रानपेक्षित्वम्। पदाहवनीयशास्त्रयोर्मध्ये विशेषस्य पदशास्त्रस्य सामान्यशास्त्रनिरपेक्षत्वं प्रतिपादयन् शास्त्रयोर्बाध्यबाधकभावमुपपादयति नहीति। प्रतिषेधरूपे विशेषे तद्वैपरीत्यं प्रदर्शयन् सामान्यविधिविशेषनिषेधयोर्बाध्यबाधकभावासम्भवं प्रतिपादयति निषेधशास्त्रस्येति। नानुयाजेषु येयजामहं करोतीति निषेधरूपविशेषशास्त्रस्येत्यर्थः। प्रसक्त्यर्थं निषेध्यस्य येयजामहस्य प्राप्त्यर्थम्। तथाच यदि येयजामहविधिबलादनुयाजेषु येयजामहस्य कर्त्तव्यताज्ञानमेव न स्यात् तदा निषेधशास्त्रेण तत्र तद्बाध एव न घटते। प्रमाणविशेषेण कर्त्तव्यतया ज्ञानविषयस्य पदार्थस्य प्रमाणान्तरेण तज्ज्ञानस्य मिथ्यात्वकल्पनया तद्विषयव्यवहारप्रतिबन्धस्य बाधपदार्थत्वात्। तथाचोक्तं भाष्यकारैर्दशमाध्यायप्रथमाधिकरणे—

बाधो नाम यदेवेदमिति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कथ्यते इति।

तस्मात् प्रतिषेधेन प्रतिषेध्यप्राप्त्यर्थं विधिरपेक्षणीय एवेति भावः।

नतु प्रतिषेध्यप्राप्तये प्रतिषेधेनावश्यापेक्षणीयो विधिः प्रतिषेधाधिकरणे प्रवर्त्तताम्। अनन्तरन्तु विशेषविषयत्वेन बलीयसा प्रतिषेधेनासावत्यन्तमेव बाध्यतामिति न विकल्पावतारः, तुल्यबलत्वाभावादित्यतस्तुल्यबलत्वमेवोभयोर्दर्शयति एवञ्चेति। उपजीव्यत्वेन

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्। स च न युक्तः, विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति। न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति। व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य। द्विरदृष्टकल्पना च स्यात्।

विधेर्हि एवं ज्ञायते यदनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति निषेधाच्च तदकरणादिति ज्ञायते। अनृतवदनाकरणादिव दर्शपौर्णमासयोः। स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः। अतश्च विकल्पो न युक्तः। प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणम्।

---

प्रतिषेध्यसमर्पकत्वेन। प्रतिषेध्यमन्तरेण प्रतिषेधस्य जीवनासम्भवादिति भावः। विहितप्रतिषिद्धेति। विहितत्वात् प्रतिषिद्धत्वाच्चेत्यर्थः।

भवतु विकल्प एव को दोष इत्यत आह स च न युक्त इति। अयुक्तत्वे हेतुमाह विकल्पे हीति। उभयोः प्रामाण्यासम्भवं प्रतिपादयति नहीति। व्रीह्यनुष्ठानसमय इवेति। व्रीहिभिर्यजेत यवैर्यजेतेति श्रुतिभ्यां पुरोडाशसाधनद्रव्यत्वेन विहितयो र्व्रीहियवयोर्वैकल्पिकत्वेन सिद्धान्तसिद्धत्वम्। तत्र यथा व्रीहिप्रयोगे क्रियमाणे यवश्रुतेरप्रामाण्यम्, तथा यवप्रयोगे क्रियमाणे च व्रीहिश्रुतेरप्रामाण्यं, तथा प्रकृतेऽपीत्यर्थः। द्विरदृष्टेति। अनुयाजेषु येयजामहं कुर्यान्न कुर्यादिति श्रुतिभ्यां येयजामहकरणाकरणयोर्द्वयोरेवादृष्टजनकत्वप्रतीतेरावश्यकतया अदृष्टद्वयकल्पना स्यादित्यर्थः।

अदृष्टद्वयकल्पनाप्रकारं दर्शयति विधेरिति। विधिवाक्यादित्यर्थः। उपकार इति। प्रधानोपकार इत्यर्थः। तदकरणात् येयजामहाकरणात्। कश्चनोपकारो भवतीत्यनुषज्यते। ननु येयजामहाकरणस्याक्रियात्वेन कथमुपकारजनकत्वमित्यतो अक्रियाया अपि उपकारकत्वं दृष्टान्तेन साधयति अनृतेति। दर्शपौर्णमासयोः श्रुयते नानृतं वदेदिति। तत्रानृतवदनाभावादक्रियारूपादपि यथा दर्शपौर्णमासयोरुपकारस्तथा प्रकृतेऽपीत्यर्थः। स एवोपकारोऽदृष्टफलरूपत्वाददृष्ट इत्युच्यते इत्याह स चेति। अतश्चेति। यतो विकल्पे पाक्षिकाप्रामाण्यं द्विरदृष्टकल्पना च स्यादत इत्यर्थः। इदमुपलक्षणम्।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किन्तु नञो अनुयाजशब्देन सम्बन्धमाश्रित्य पर्य्युदास आश्रीयते। नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तत्वलक्षणात्। अनुयाजव्यतिरिक्तेषु येयजामहं करोतीति। अत्र च वाक्ये येयजामहः कर्त्तव्यतया न विधीयते, यजतिषु येयजामहं करोतीत्यनेनैव विहितत्वात्। किन्तु सामान्यशास्त्रविहित येयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते यद्यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति। एवञ्च सामान्य-

---

प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्।
तदुज्जीवमहानिभ्यां विकल्पे चाष्टदोषता॥

इत्युक्तदोषाष्टकस्यापि सम्भवादिति बोध्यम्। यतो नञः प्रतिषेधपरत्वाङ्गीकारमूलिका विकल्पापत्तिरतः प्रतिषेधपरत्वं नाश्रयणीयमित्याह प्रतिषेधाश्रयण इति।

तर्हि कीदृशो नञोऽर्थ इत्यत आह किन्त्विति। अनुयाजपदसम्बन्धेन नञा बोधनीयमर्थमाह नञनुयाजेति। नन्वनुयाजपदसम्बन्धेन नञा तदभावरूपं तद्विरोधित्वमेव बोध्यतां कथं तद्व्यतिरिक्तत्वं तस्य मुख्यार्थत्वाभावादित्यत आह लक्षणादिति। अनुयाजव्यतिरिक्तत्वेन लाक्षणिकत्वादित्यर्थः। विकल्पापत्तिरूपमुख्यार्थपरत्वबाधकसत्त्वादन्योऽन्याभाववत्परत्वेन लक्षणाया आवश्यकत्वादिति भावः।

नन्वनुयाजव्यतिरिक्तेषु येयजामहकर्त्तव्यताविधानमुखेन अनुयाजेषु येयजामहकरणाभाव एव विधीयते। शास्त्रान्तरेण तु यागमात्रे येयजामहकर्त्तव्यताविधानादनुयाजेष्वपि तद्विधानं जातमिति येयजामहकरणाकरणयोरेकत्रानुयाजे सन्निपाताद्विकल्प स्तदवस्थ एवेत्यत आह अत्र चेति। न विधीयत इति। तथाच नायं येयजामहकर्त्तव्यताविधिर्येन तद्द्वारेणानुयाजेषु येयजामहकरणाभावो विधेयः स्यादिति भावः। अनुयाजव्यतिरिक्ते येयजामहविधानस्यासम्भवं दर्शयति यजतिष्विति। विहितत्वादिति। यागसामान्ये येयजामहविधानादनुयाजव्यतिरिक्तेष्वपि तस्य प्राप्ततया विधानानुपपत्तेरिति भावः।

तर्हि किमर्थं तद्वाक्यमित्यत आह किन्त्विति। सामान्यशास्त्रेति। यजतिषु येयजामहं करोतीति शास्त्रेत्यर्थः। तस्य येयजामहकरणस्य। विधानप्रकारमाह यदिति। एवञ्चेति। नानुयाजेष्वित्यस्य अनुयाजव्यतिरिक्तत्वगुणविधायकत्वे सतीत्यर्थः। सामान्य-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शास्त्रस्य विशेषापेक्षिणो नानुयाजेष्वित्यनेन अनुयाजव्यतिरिक्त-विषयसमर्पणादनुयाजव्यतिरिक्तेषु यजतिषु येयजामहः कर्त्तव्यतया प्राप्तः। अनुयाजेषु तु स न कर्त्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः।

लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यम्। अतश्च पर्य्युदासाश्रयणे न किञ्चिद्बाधकम्। तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात् पर्य्युदासाश्रयणमिति।

ननु पर्य्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानुयाज-व्यतिरिक्ते सङ्कोचनात् पर्य्युदासस्योपसंहाराभेदः स्यात्। उप-संहारे हि सामान्ये प्राप्तस्य विशेषे सङ्कोचो भवति। यथा

---

शास्त्रस्य यजतिषु येयजामहमित्यस्य। विशेषापेक्षिणः अनुयाजव्यतिरिक्तत्वगुणविशेषा-काङ्क्षिणः। अनुयाजेति। अनुयाजभिन्नविषयत्वबोधनादित्यर्थः। एवञ्च अनुयाजेषु ये-यजामहविधेरौदासीन्यात् तेषु येयजामहस्य न कर्त्तव्यतया विधानं नापि प्रतिषेध इत्याह अनुयाजेष्विति। स येयजामहः। इति न विकल्प इति। यतोऽनुयाजेषु विधि-निषेधस्य न प्रवर्त्तते अतो न विकल्प इत्यर्थः। कष्टं कर्म्मेति न्यायादकरणमेवेति भावः। ननु नञ् पदसमभिव्याहृतस्य नानुयाजेषु येयजामहं करोतीति वाक्यस्य निवर्त्तकत्वा-भावादप्रामाण्यमापद्यत इत्यत आह लक्षणयेति। नाप्रामाण्यमिति। तथाच लक्षणयापि स्वार्थविषयकप्रमोत्पादकत्वान्नाप्रामाण्यम्। सर्व्वथा प्रमात्मकज्ञानानुत्पादकस्यैवाप्रमाणत्वा-दिति भावः। न किञ्चिद्बाधकमिति। प्रतिषेधपरत्वे यथा विकल्पापत्तिः पाक्षिकाप्रामाण्या-पत्तिश्च बाधिका तथा किमपि बाधकं नास्तीत्यर्थः। उपसंहरति तत्सिद्धमिति।

सामान्यशास्त्रप्राप्त्युपजीविपर्य्युदासस्योपसंहारेण सह साङ्कर्य्यमापादयति नन्विति। पर्य्युदासस्य सामान्यशास्त्रोपजीविपर्य्युदासस्य। उपसंहाराभेद इति। उपसंहार-लक्षणाक्रान्ततया साङ्कर्य्यापत्तिरित्यर्थः। उपसंहारलक्षणाक्रान्तताप्रदर्शनाय तल्लक्षणं प्रतिपादयति उपसंहारे हीति। सामान्ये प्राप्तस्येति। एतेन सामान्यप्राप्तस्य विशेष-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुरोडाशं चतुर्द्धा करोतीति पुरोडाशसामान्येन प्राप्तं चतुर्द्धाकरणमाग्नेयं चतुर्द्धा करोतीत्याग्नेये सङ्कोच्यत इति चेन्न। तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य तदन्यमात्रसङ्कोचार्थत्वात् पर्य्युदासस्येति केचित्।

---

निष्ठतया सङ्कोच इति तल्लक्षणं प्रतिपादितम्। एवञ्च प्रागुक्तपर्य्युदासस्यापि यागसामान्ये प्राप्तस्य येयजामहस्य अनुयाजातिरिक्तरूपविशेषनिष्ठतया सङ्कोचादभेदापत्तिः सिध्यति।

ननु साङ्कर्य्यं नाम परस्परात्यन्ताभावसमानाधिकरणयोर्धर्म्मयोरेकाधिकरणवृत्तित्वं यथा भूतत्वमूर्त्तत्वे। न तु द्रव्यत्वघटत्वयोरिव व्याप्यव्यापकभावापन्नधर्म्मयोः सामानाधिकरण्यम्। एवञ्च यदि पर्य्युदासस्योपसंहारव्याप्यत्वं यदि वोपसंहारस्य पर्य्युदासव्याप्यत्वं भवेन्न तदा साङ्कर्य्यापात इत्यतः पर्य्युदासस्य नेचेतोद्यन्तमादित्यमित्यादावुपसंहाराव्याप्यत्वस्य प्राक् प्रदर्शनादिदानीमुपसंहारस्य पर्य्युदासाव्याप्यत्वं प्रदर्शयति यथेति।

पुरोडाशमिति। तृतीयाध्यायप्रथमपादे दर्शपौर्णमासप्रकरणे श्रूयते। तं चतुर्द्धा कृत्वा पुरोडाशं वर्हिषद करोतीति। दर्शपौर्णमासे च आग्नेयोऽग्नीषोमीय ऐन्द्राग्नश्च पुरोडाशो विद्यते। तत्प्रकरणीयया चतुर्द्धाकरणश्रुत्या सर्व्वेषां पुरोडाशानां चतुर्द्धाकरणं प्रतीयते। श्रुत्यन्तरेण तु आग्नेयं चतुर्द्धा कृत्वा इदं ब्रह्मण इदं होतुरिदमध्वर्य्योरिदमग्नीध इति ऋत्विग्भक्ष्यत्वेन आग्नेयस्यैव चतुर्द्धाकरणं विधीयते। एतद्वाक्यगताग्नेयपदबोध्याग्निदेवताकपुरोडाशमात्रनिष्ठतया तं चतुर्द्धा कृत्वा पुरोडाशमित्युक्तपुरोडाशचतुर्द्धाकरणं सङ्कोच्यत इति तात्पर्य्यम्। एवञ्च पर्य्युदासेतरत्रापि उपसंहारसद्भावात् पर्य्युदासाव्याप्यत्वमुपसंहारस्य सिद्धमिति साङ्कर्य्यमापद्यत एवेत्याशङ्का सुघटेति।

आशङ्कां परिहरति नेति। तन्मात्रेति। सामान्यस्य उपसंहारवाक्यघटकपदविशेषबोध्यपदार्थविशेषविषयत्वरूपसङ्कोचफलकत्वादित्यर्थः। तथाच विशेषशास्त्रघटकपदविशेषबोध्यपदार्थविशेषविषयकत्वेन सामान्यशास्त्रस्य सङ्कोचनमुपसंहारपदार्थ इति भावः। पर्य्युदासस्य तद्वैलक्षण्यमाह तदन्येति। सामान्यशास्त्रस्य नञ्पदघटितवाक्यघटक,पदविशेष बोध्यपदार्थविशेषेतरनिखिलपदार्थनिष्ठतारूप-सङ्कोचफलकत्वादित्यर्थः। तथाच नञ्पदघटितवाक्यघटकपदविशेषबोध्यपदार्थविशेषेतर-निखिलपदार्थविषयकत्वेन सामान्यस्य सङ्कोचनं पर्य्युदासपदार्थ इति भावः।

इत्यञ्च उपसंहारस्थले सङ्कोचकवाक्यं नञ्पदाघटितम्, पर्य्युदासस्थले तु सङ्कोचक

CC-0- Jangamwadi Math Collection. Digitized by eGangotri

अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो व्यापारविशेषो विधेः। पर्य्युदासस्तु—

"पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्"

इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः सम्बन्धः। अतोऽनयोस्तावत् स्वरूपतः स्पष्ट एव भेदः।

एवं सत्यप्यभेद आशङ्क्येत यदि यत्र पर्य्युदासो विहितस्तत्रावश्यमुपसंहारः स्यात्। न चैतदस्ति, नेक्षेतोद्यन्तमादित्यमित्यादौ सत्यपि तस्मिन् उपसंहाराभावात्। नहि तत्राग्नेयचतुर्द्धाकरणमिव सामान्येन प्राप्तं किञ्चित् विशेषे सङ्कोच्यते। पापक्षयोद्देशेनानीक्षणसङ्कल्पमात्रविधानात्।

प्रकृतोदाहरणे तु यजिसामान्येन प्राप्तस्य येयजामहस्य अनुयाजव्यतिरिक्तेषु सङ्कोचनात् यदि विधेरुपसंहारविधित्वं भवति, नैतावता किञ्चिद्विरुध्यते। विध्यभावे कथं विधिकार्य्यमुप-

---

वाक्यं नञ्पदघटितम्। तथा उपसंहारे सङ्कोचकवाक्यघटकपदविशेषबोध्यपदार्थविशेषनिष्ठतया सामान्यवाक्यस्य सङ्कोचः, पर्य्युदासस्थले तु सङ्कोचकवाक्यघटकपदविशेषबोध्यपदार्थविशेषेतरनिष्ठतया सामान्यस्य सङ्कोचः। एवमुपसंहारस्थले यत्किञ्चित् स्वल्पविषयतया सामान्यस्य सङ्कोचः, पर्य्युदासे तु यत्किञ्चिदितरनिखिलविषयतया सामान्यस्य सङ्कोच इत्येतावान् भेद इति भावः।

सिद्धान्तान्तरमाह अन्ये त्विति। विशेषे सङ्कोचरूपः, विशेषविषयकलज्ञानानुकूलस्वरूपः। पर्य्युदासपदार्थमाह पर्य्युदासस्त्विति।

एवं सत्यपीति। स्वरूपतः स्पष्टभेदे सत्यपीत्यर्थः। अभेद आशङ्क्येत, अभेद आशङ्कनीयः स्यात्, भवतामिति शेषः। स्पष्टभेदेऽपि अभेदाशङ्का किम्प्रकारेण घटत इत्यत आह यदीति। यत्र पर्य्युदासः यत्र यत्र पर्य्युदासः। तथाच यत्र यत्र पर्य्युदासः स्यात्, तत्र तत्रैव यद्यवश्यमुपसंहारः स्यात्, तदा भवतामाशङ्का सम्भवेदिति भावः। नेक्षेतोद्यन्तमादित्यमित्यादौ व्यभिचारान्न तथाङ्गीकार्य्यमित्याह न चैतदिति।

प्रकृतोदाहरणे नानुयाजेष्वित्यादौ। किञ्चिद्विरुध्यते इति। एतन्मते धर्म्मयोरेव

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

संहारः पर्य्युदासेन क्रियते इति भवति विरोधः। न चात्र विधिर्नास्तीति, नञोऽनुयाजपदसम्बन्धेन विधेर्विधायकत्वसम्ख्यापनात्। अत हि पर्य्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पक आग्नेयपुरोडाशवत्। उपसंहारस्तु विधिरेव।

यच्चात्र तन्मात्रसङ्कोचाभावान्नोपसंहार इति। तत्र कोऽर्थः। आग्नेयमात्रे सङ्कोचो वा सामान्यप्राप्तस्य विशेषमात्रे सङ्कोचो वा। आद्ये अनारभ्याधीतसप्तदशत्वस्य मित्रविन्दादिप्रकरणस्थेन

---

साङ्कर्य्यापादौ विरुद्धः। न त्वनयोः साङ्कर्य्यं विरोधाय। यथा एकस्य विधेरुत्पत्त्यधिकारविधित्वमविरुद्धमिति भावः। विरोधमुन्नाययति विध्यभाव इति। उपसंहारस्य विधेर्व्यापाररूपत्वात् पर्य्युदासस्य विधित्वाभावेन कथं तेन विधिकार्य्यभूत उपसंहारः क्रियते इति विरोधी भवत्येवेति भावः। पर्य्युदासवाक्यस्यापि विधित्वसाधनेन विरोधं परिहरति न चात्रेति। अत्र विधिर्नास्तीति नेत्यर्थः। कुतो विधित्वं नञ्पदघटितवाक्यस्येत्यत आह नञ इति। आख्यापनात् ख्यापनात्। ननु पर्य्युदासः किं विधत्ते येनास्य विधायकत्वं स्यादित्यत आह अत्र हीति। अनुयाजेति। येयजामहं करोतीति श्रुतिविहितयेयजामहकरणस्य विषयोऽनुयाजेतरयागरूप इत्येवं विषयसमर्पको विषयविधायक इत्यर्थः।

आग्नेयपुरोडाशवदिति। यथा आग्नेयं चतुर्द्धा करोतीत्युपसंहारः तं चतुर्द्धा कृत्वा पुरोडाशं बर्हिषदं करोतीति सामान्यश्रुत्युक्तपुरोडाशचतुर्द्धाकरणस्य विषय आग्नेयपुरोडाशरूप इत्येवं विषयसमर्पकस्तथेत्यर्थः। उपसंहारस्तावद्विधिरेवेत्यत्र न कश्चिद्विवाद इत्याह उपसंहारस्त्विति। तथाच यद्युपसंहारस्य विधित्वं सिद्धं तदा तत्साहश्यात् पर्य्युदासस्यापि विधित्वमेषितव्यमेवेति भावः।

पूर्व्वमतं दूषयति यच्चेति। अत्र पर्य्युदासस्थले। तन्मात्रसङ्कोचाभावादित्यत्र तन्मात्रसङ्कोचपदस्य अर्थप्रतिपत्तये पृच्छति तत्र कोऽर्थ इति। दूषयितुमर्थं विकल्पयति आग्नेयमात्र इति सामान्यस्येति च। आद्ये उपसंहारान्तरे व्यभिचार इत्याह आद्य इति। उपसंहारान्तरं प्रदर्शयति अनारभ्येति।

तथाच सप्तदश सामिधेनीरनुब्रूयादिति श्रुत्या यागविशेषमुपक्रम्य सामिधेनीसाप्तदश्यं विहितम्। अपिसमिन्धनार्था ऋचः सामिधेन्य इति तृतीयाध्यायषष्ठपादे न्यायमाला।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वाक्येनोपसंहारो न स्यात्, आग्नेये सङ्कोचाभावात्। द्वितीये चतुर्द्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेयसङ्कोचवत् अनुयाजाननुयाजसाधारण्येन प्राप्तस्याननुयाजेषु सङ्कोचादुपसंहारस्यादेव।

एतावांस्तु विशेषः। आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थिताः। प्रकृते तु पर्य्युदासेन तस्योपस्थितिरिति। उपसंहारन्यायस्त्वविशिष्ट एव।

यच्च तदन्यमात्रसङ्कोचार्थत्वात् पर्य्युदासस्येति। तन्न नेच्चेतोऽयन्तमित्यत्र सत्यपि पर्य्युदासे सङ्कोचाभावात्। न ह्यत्र सामान्ये प्राप्तं तदन्यमात्रे सङ्कोच्यते, सङ्कल्पमात्रविधानादित्यास्तां तावत्। तस्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्य्युदासाश्रयणमिति।

---

तत्र सामिधेनीसाप्तदश्यं न प्रकृतिविषयम्। प्रकृतौ पञ्चदशसामिधेनीविधानात् तत्रानवकाशात्। अतो विकृतिविषयमिति सिद्धान्तितं तृतीयाध्यायषष्ठपादे। दशमाध्यायाष्टमपादे तु साप्तदश्यविधेर्न विकृतिसामान्यविषयत्वं, किन्तु मित्रविन्दाध्वरकल्पादिविकृतिविशेषविषयत्वमेव, तत्रैव साप्तदश्यविधानेनोपसंहारात्। तदितरविकृतिषु तु प्रकृतिवद्विकृतिरिति न्यायात् पाञ्चदश्यमेवेति सिद्धान्तितम्। तदुपसंहारस्य तन्मते उपसंहारत्वानुपपत्तिः। आग्नेयविषयत्वेन सङ्कोचाभावादित्याशयः। तन्मात्रसङ्कोचपदस्य सामान्यप्राप्तस्य विशेषमात्रे सङ्कोच इति द्वितीयार्थाभिमतौ तु नानुयाजेष्वित्यस्याप्युपसंहारत्वमेव सम्भवतीति तन्मात्रसङ्कोचाभावान्नोपसंहार इत्यसङ्गतमित्याह द्वितीय इति।

आग्नेयचतुर्द्धाकरणस्य अननुयाजे यैयजामहकरणस्य चोपसंहारत्वेऽपि विशेषमाह एतावांस्त्विति। स्वपदोपात्ता आग्नेयादिपदोपात्ताः। प्रकृते सामान्यशास्त्रप्राप्तप्रयोजविपर्य्युदासे। पर्य्युदासेन नञन्विततत्पदेन। तयोरुपसंहारत्वन्त्वविशिष्टमित्याह उपसंहारेति।

पूर्व्ववादिसम्मतं पर्य्युदासगतमसाधारणधर्म्ममपि दूषयितुमनुवदति यच्चेति। दूषयति तन्नेति। नेच्चेतेति। तत्र सङ्कोचासत्वेऽपि पर्य्युदासत्वावश्यम्भावात् सङ्कोचार्थत्वस्य पर्य्युदासासाधारणधर्म्मत्वानुपपत्तिरिति भावः। सङ्कोचासम्भवं दर्शयति न हीति। विकल्पापत्तिनिबन्धनपर्य्युदासाश्रयणविचारमुपसंहरति तस्सिद्धमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते। यथा नातिरात्रे षोड़शिनं गृह्णातीत्यत्र। न ह्यतिरात्रे षोड़शिनं गृह्णातीति शास्त्रप्राप्तमतिरात्रे षोड़शिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्य्युदास आश्रीयते, अशक्यत्वात्। यदि ह्यत्र नञः षोड़शिपदेन सम्बन्धः स्वीक्रियेत तदातिरात्रे षोड़शिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्। तत्र चातिरात्रे षोड़शिनं गृह्णातीति प्रत्यक्षश्रुतिविरोधः। अतएवाति-रात्रपदेन न नञः सम्बन्धः, अतिरात्रे षोड़शिनं गृह्णातीति प्रत्यक्षश्रुतिविरोधात्।

---

एवञ्च पर्य्युदासरूपगत्यभावे विकल्पोऽप्यङ्गीकरणीय एवेत्याह यत्रत्विति। स पर्य्युदासः। तत्प्रसक्तौ विकल्पप्रसक्तौ। तदुदाहरणमाह यथेति। अतिरात्राख्यः सोमयागविशेषः। षोड़शी सोमपात्रविशेषः। नह्मीति पर्य्युदास आश्रीयत इत्यन्वयः। अत्र नातिरात्रे षोड़शिनं गृह्णातीति वाक्ये। विहितप्रतिषिद्धत्वादिति। एकेन शास्त्रेण विहितत्वादन्येन प्रतिषिद्धत्वा-दित्यर्थः। अशक्यत्वात् पर्य्युदासस्याश्रयितुमशक्यत्वात्।

अत्र पर्य्युदासाश्रयणं कुतोऽशक्यमित्यत आह यदि हीति। पर्य्युदासाश्रयणे षोड़शिपदे अतिरात्रपदेन वा नञोऽन्वयोऽभ्युपेयः। न चातुना, तस्य व्रतमित्युपक्रमाभावात्। तत्रोभ यत्राप्यन्वयबाधं प्रदर्शयिष्यन् प्रथमं षोड़शिपदेन नञन्वयबाधं प्रतिपादयति षोड़शिपदेनेति। प्रत्यक्षश्रुतीति। षोड़शिव्यतिरिक्तं गृह्णातीत्यस्य षोड़शिनं विहायान्यत् पात्रं गृह्णातीति तात् पर्य्यकत्वावश्यकतया षोड़शिनं गृह्णातीति प्रत्यक्षश्रुत्या तद्ग्रहणविधानेन तद्विरोधादित्यर्थः। न च षोड़शिव्यतिरिक्तं गृह्णातीत्यस्य षोड़शिनं विहायान्यत् गृह्णातीति तात्पर्य्यकत्वे मानाभावात् षोड़शीतरपात्रग्रहणार्थकत्वमेव युक्तम्। तथा सति षोड़श्यन्तर्भावे विधेरौदासीन्यात् तद्ग्रहण विधानेन न विरोधसम्भव इति वाच्यम्। तथार्थत्वे षोड़शीतरपात्रग्रहणस्य तत्तद्विधिभिरेव प्राप्ततया वाक्यस्यानुवादतापत्तेः। तस्मार्थक्याय तद्वाक्यस्य षोड़शिवर्ज्जनार्थकत्वस्यावश्यवक्तव्य त्वात्। इदानीमतिरात्रपदेन नञन्वयबाधं प्रदर्शयति अतएवेति। प्रत्यक्षश्रुतिविरोधादेवेत्यर्थः। प्रत्यक्षश्रुतिमुल्लिख्य तद्विरोधं प्रतिपादयति अतिरात्र इति। विरोधादिति। नञन्वितातिरात्र पदेन अतिरात्रं वर्ज्जयित्वा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतश्चात्र पर्य्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते विकल्पापत्तिश्च स्वीक्रियते, अनन्यगतेः । अतश्चैतत्सिद्धं यत्र तस्य व्रतमित्याद्युपक्रमो विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः, यथा न कलञ्जं भक्षयेदिति । यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः, यथा नातिरात्रे षोड़शिनं गृह्णातीति ।

एतावांस्तु विशेषः, यत्र विकल्पापादकः प्रतिषेधस्तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम् । उभयोरपि विधिनिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः प्रसज्यते, प्राप्तिश्च रागतः,

---

अन्यथ षोड़शिनं गृह्णातीति तात्पर्य्यकत्वावश्यकत्वे अतिरात्रे षोड़शिनं गृह्णातीति श्रुतिविरोधादित्यर्थः ।

अनुपपत्तेरिति । असम्भवादित्यर्थः । निषेधस्वीकारमूलिका विकल्पापत्तिरपि स्वीकार्य्येत्याह विकल्पापत्तिश्चेति । अत्र हेतुर्गत्यन्तराभाव एवेत्याह अनन्यगतेरिति । प्रतिषेधपरत्वानुगमकमाह अतश्चैतदिति । उपक्रम इति । नास्तीत्यनेनान्वितम् । आश्रयितुं न शक्यत इति । पूर्व्वोक्तरीत्या नञर्थस्य क्रियेतरान्वयासम्भवादिति भावः । तत्र प्रतिषेधस्तत्रापि प्रतिषेधः ।

ननु विधेर्विधेयस्यार्थसाधनत्वमिव निषेधस्य निषिध्यमानानर्थसाधनत्वमपि प्रतिपाद्यमित्युक्तम् । अर्थसाधनत्वञ्च । बलवदनिष्टाननुबन्धीष्टसाधनत्वम् । अनर्थसाधनत्वन्तु बलवदनिष्टसाधनत्वम् । तथा सति एकस्मिन्नतिरात्राख्ययागे एकस्य षोड़शिग्रहणस्य विधिनिषेधप्रतिपाद्ये निरुक्तार्थसाधनत्वानर्थसाधनत्वे कथमुपपद्येतां विरोधादित्यतो वैकल्पिकनिषेधस्थले विशेषमाह एतावांस्त्विति । विशेषो रागप्राप्तनिषेधापेक्षयेति शेषः । विकल्पापादक इति । एतेन विकल्पस्थलीयप्रतिषेधस्यैव अनर्थहेतुत्वं नार्थः, ननु प्रतिषेधमात्रस्येत्युक्तं भवति ।

तर्हि विधिनिषेधयोः किमर्थत्वमित्यत आह क्रत्वर्थत्वादिति । करणाकरणयोर्द्वयोरेव क्रतूपकारकत्वादित्यर्थः । तथाच द्वयोरङ्गविधितया विधेरिव निषेधस्यापि क्रत्वर्थताप्रतिपादकत्वान्न विरोध इति भावः । ननु विकल्पस्यैच्छिकतया ग्रहणाग्रहणयोर्द्वयोरेव क्रतूप-



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रतिषेधस्य पुरुषार्थस्तत्र निषिध्यमानस्य अनर्थहेतुत्वम्, यथा कलञ्ज भक्षणस्य।

दीक्षितो न ददाति न जुहोतीत्यादिषु दानहोमादीनां

---

कारकतया च यागं कुर्य्यादिति न्यायादग्रहणेऽपि यागसिद्धौ ग्रहणस्येच्छाविषयत्वासम्भवेन ग्रहणविधेरननुष्ठानलक्षणमप्रामाण्यमापद्येतेति चेन्न। विधिदर्शनादनुष्ठाने प्रधानस्योपकारभूयस्त्वं स्यात्। निषेधदर्शनाच्च तदनुष्ठानाभावेऽपि तदङ्गवैकल्यनिबन्धनमुपकारहीनत्वं न स्यादित्येतद्विशेषस्य कल्पनीयत्वात्। न च यद्‌द्वयस्य साधनं तदभावस्तत्परिहारसाधनमिति नियमात् षोडशिग्रहणाभावस्य क्रतूपकारकत्वात् षोडशिग्रहणस्य क्रत्वनुपकारकत्वं प्रतीयतामिति विरोधतादवस्थ्यमिति वाच्यम्। शब्दप्रमाणविरोधेन तन्नियमस्य भावाभावविकल्पव्यतिरिक्तविषयताया आवश्यकत्वात्। क्व तर्हि प्रतिषिध्यमानस्यानर्थहेतुत्वमित्यत्रानुगमकमाह यत्र त्विति। न विकल्पः प्रसज्यत इति। विकल्पस्थले प्रतिषिध्यमानस्यानर्थहेतुत्वे बाधकसत्त्वादिति भावः। एतेन षोड़शिनं न गृह्णातीत्यादिव्यावृत्तिः।

प्राप्तिश्च रागतः प्रतिषेधस्य पुरुषार्थ इत्येतद्व्याचष्टमाह दीक्षितो न ददातीति। अत्रायं विस्तरः। ज्योतिष्टोमे श्रूयते, दीक्षितो न ददाति, न जुहोति, न पचतीति। एते रागप्राप्तानां शास्त्रप्राप्तानां वा दानादीनां प्रतिषेधाः पर्य्युदासा वा इत्यत्र मतभेदा दृश्यन्ते। तत्र सूत्रकारभाष्यकारमते पर्य्युदासा एव। तथाहि, न ददातीत्यादिश्रुतौ संशयः, किमयमहरहर्दद्यात्, सायम्प्रातर्जुहोतीत्यादिशास्त्रप्राप्तानां पुरुषार्थानां दानादीनां प्रतिषेध उत ज्योतिष्टोमार्थत्वेन प्राप्तानां दानादीनां प्रतिषेधः। अथवा अविशेषात् सर्व्वेषामेवेति। अत्राविशेषात् सर्व्वेषामेवेति पूर्व्वपक्षः। तथाच दशमाध्यायाष्टमपादे पूर्व्वपक्षसूत्रम्—

दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्व्वदानहोमपाकप्रतिषेधः स्यादिति।

एवं पूर्व्वपक्षे प्राप्ते सिद्धान्तसूत्रम्—

अपि तु वाक्यशेषत्वादितरपर्य्युदासः स्यात् प्रतिषेधे विकल्पः स्यादिति।

अत्र भाष्यम्—“अहरहर्दद्यादित्यस्य शेषो न दीक्षित इति। एवं होमपाकयोरपि। असति पर्य्युदासे प्रतिषेधे विकल्पः स्यादिति”।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात् तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वम्,

---

एतेन ज्योतिष्टोमार्थत्वेन विहितानां दानहोमादीनां निषेधाङ्गीकारे पर्युदासासम्भवात्, षोडशिग्रहणाग्रहणवत् विकल्पापत्तेर्नित्यदानहोमादीनामेव पर्युदास इति सिद्धान्तो दर्शितः।

माधवाचार्य्यास्तु पुरुषार्थानामहरहर्विहितानां दानहोमादीनां निषेध एवेति सिद्धान्तयित्वा "यदि प्रतिषेधपक्षे वाक्यभेद आशङ्क्येत तदा पुरुषार्थदानादिव्यतिरिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु"त्यन्तेन ग्रन्थेन नञ्पदान्वित-ददाति-जुहोति-पचतिभिर्नित्यदानातिरिक्तं नित्यहोमातिरिक्तं नित्यपाकातिरिक्तञ्च ज्योतिष्टोमकाले कुर्य्यादिति दशमाष्टमपादे प्रदर्शितवन्तः।

पार्थसारथिमिश्रास्तु "अदीक्षितो नित्याग्निहोत्रादिकं कुर्य्यादिति पर्युदासे प्रकरणानुग्रहो न स्यात्। नहि ज्योतिष्टोमप्रकरणे ज्योतिष्टोमोपकारकं धर्मं विहाय नित्यदानहोमादिकर्म्मणामदीक्षितत्वधर्म्मविधानमुचितम्। तस्मान्नित्यदानहोमादीनां क्रत्वर्थतया प्रतिषेध एवाय"मिति सिद्धान्तमाहुः।

ग्रन्थकृताप्येतन्मिश्रमतानुसारित्वादुच्यते शास्त्रप्राप्तावपीति। ननु यदि शास्त्रतः प्राप्तिस्तदा कथं न विकल्प इत्यत आह पुरुषार्थत्वेनेत्यादि। प्राप्तत्वात् अहरहर्दद्यात्, सायम्प्रातर्जुहोतीति शास्त्रात् पुरुषार्थत्वेन प्रतीतत्वात्। क्रत्वर्थत्वेन ज्योतिष्टोमोपकारकत्वेन। तुल्यार्थत्वाभावेनेति। क्रत्वर्थत्वपुरुषार्थत्वाभ्यां तुल्यप्रयोजकत्वाभावेनेत्यर्थः। विकल्पाप्रसक्ताविति। अतएव पार्थसारथिमिश्रैः शास्त्रदीपिकादशमाध्यायाष्टमपादेऽभिहितम्—

"तस्मात् प्रतिषेध एवायम्। न च विकल्पप्रसक्तिरेकार्थ्याभावात्। यद्युभावपि विधिनिषेधौ पुरुषार्थौ क्रत्वर्थौ वा अभविष्यतां तदा व्यकल्पिष्येताम्। पुरुषार्थतया तु विहितानामग्निहोत्रादीनां क्रतुमध्येऽपि प्राप्तानां प्रतिषेधः क्रत्वर्थतया क्रियते। स्त्र्युपगमनादिप्रतिषेधवत्। क्रतुमनुतिष्ठता अवश्यं वर्ज्जनीयान्यग्निहोत्रादीनि भवन्तीति नास्ति विकल्पप्रसङ्ग" इति।

यथा—"विकल्पाभावात् फलतः पर्युदासत्वं भवतीति मत्वा सूत्रभाष्यकाराभ्यां पर्युदासत्वमुक्त"मिति च।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

रागप्राप्तप्रभावात् । रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्येऽपि नानर्थोत्पत्तिः, यथा स्वस्त्र्युपगमना-दिप्रतिषेधः । रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिध्यमान-स्यानर्थहेतुत्वमिति दिक् । तत्सिद्धं निषेधानां पुरुषार्थानु-बन्धित्वम् ।

सर्व्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वं प्रकृतमनुसरामः ।

---

तेषां याज्ञप्राप्तदानहोमादीनाम् । अनर्थहेतुत्वाभावे हेतुमाह रागप्राप्तप्रभावादिति । तथाच प्रागुक्तानर्थहेतुत्वानुगमकवाक्ये यत्र न विकल्पः प्रसज्यते तत्र निषिध्यमानस्यानर्थहेतुत्वमित्ये तावन्मात्रोक्तौ दीक्षितो न ददातीत्यादिनिषिध्यमानदानादीनामपि विकल्पाभावादनर्थहेतुत्वमा पद्येत । प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थ इत्युपादाने तु न तेषामनर्थहेतुत्वापत्तिः तेषां रागप्राप्तत्वाभावात् प्रतिषेधस्य पुरुषार्थत्वाभावाच्च । नन्वेवं प्राप्तिश्च रागत इत्येवोच्यतां न पुनः प्रतिषेधश्च पुरुषार्थ इति । दीक्षितदानादीनां रागप्राप्तत्वाभावादेवानर्थहेतुता निराकरणादित्यत आह रागप्राप्तस्यापीति । तदनुष्ठानात् क्रत्वर्थतया प्रतिषिध्यमानस्य रागप्राप्तस्यानुष्ठानात् । नान र्थोत्पत्तिरिति । तथाच तदनुष्ठानात् क्रतोर्वैगुण्यमेवोत्पद्यते न पुनरनिष्टम् । एवञ्च यत्र न विकल्पः प्रसज्यते प्राप्तिश्च रागत इत्येतावन्मात्रोक्तौ क्रत्वर्थतया प्रतिषिध्यमानस्य रागप्राप्तस्यानुष्ठाने ऽप्यनर्थोत्पत्तिः प्रसज्येत । प्रतिषेधश्च पुरुषार्थ इत्युक्तौ तु न तत्र तत्प्रसक्तिः । प्रतिषेधस्य तत्र क्रत्वर्थत्वादिति भावः ।

ननु कोऽयं रागप्राप्तस्य क्रत्वर्थतया प्रतिषेध इत्यत आह यथेति । अत्र प्रतिषेधो यागा-ङ्गतया प्रतिषेध इत्यर्थः । यागे ब्रह्मचर्य्यविधानात् ब्रह्मचर्य्यस्य चाष्टाङ्गमैथुननिवृत्तिरूपत्वात् । रागतः प्राप्तस्येति । एतेन तदुभयदलनिवेशनिबन्धनं यत्रानर्थहेतुत्वं फलितं तदेवोपदर्शितम् । एतच्च विस्तरेणोक्तम् । यत्र प्रतिषेधः पुरुषार्थस्तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वमित्येव नन्वनु गमकं द्रष्टव्यम् । निषेधानां पुरुषार्थानुबन्धित्वमुपसंहरति तत्सिद्धमिति । पुरुषार्थानुबन्धित्वं साक्षात्परम्परोदासीन्येन पुरुषार्थप्रयोजकत्वम् ।

प्रागुक्तवेदभागेष्ववशिष्टस्यार्थवादस्य पुरुषार्थानुबन्धित्वप्रतिपादनाय प्रकृतमनुसरति प्रकृत मिति । अतिविप्रकृष्टतया किं तत्प्रकृतमिति श्रोतृजिज्ञासापरिहाराय प्रकृतस्वरूप-मुक्तं सर्व्वस्येत्यादिना । अनुसराम इति । अवशिष्टस्यार्थवादस्य पुरुषार्थानुबन्धित्वप्रति-पादनेन अनुगच्छाम इत्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यम् एवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः। स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्य्यवसानं वक्तव्यम्। ते चार्थवादा द्विविधाः, विधिशेषा निषेधशेषाश्च। तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्त्वम्।

बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोऽरोदीदित्यादीनामर्थवादानान्तु निषेध्यनिन्दकतयेति। अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते।

---

इदानीमर्थवादस्य पुरुषार्थानुबन्धित्वं साधयति तदेवमिति। एवम् अतीतग्रन्थसन्दर्भोक्तवत्। अध्ययनविधीति। स्वाध्यायोऽध्येतव्य इतीत्यर्थः। तदुपात्तत्वेन स्वाध्यायविधिविषयत्वेन। तथाच स्वाध्यायोऽध्येतव्य इति विधिना सर्व्वस्यैव वेदस्याध्ययनमर्थसाधनमिति प्रतिपादनात् अर्थवादानाञ्च तदन्तःपातात्तेषामपि पुरुषार्थसाधनत्वप्रतीतेः कथमानर्थक्यमनाव इति भावः। ननु तेषां स्वारसिकार्थपरत्वे किमपि प्रयोजनं नोपलभ्यते तत्कथं पुरुषार्थानुबन्धित्वसम्भव इत्यत आह स्वार्थेति। स्वारसिकार्थेत्यर्थः। लक्षणयेति। प्राशस्त्यनिन्दितत्वान्यतरस्याश्चयिकार्थप्रतिपादकतयेत्यर्थः।

कुत्र प्राशस्त्यं कुत्र वा निन्दितत्वं लक्षणीयमित्यतस्तत्प्रतिपादनायार्थवादद्वैविध्यं दर्शयति तेचेति। विधिशेषा विध्युपकारकाः। निषेधशेषास्तदुपकारकाः। वायव्यं वायुदेवताकम्। श्वेतं पशुम्। स च च्छाग एव। छागोऽनादिशे पशुरिति स्मृतेः। विधेयार्थेति। विधेयो यो वायुदेवताकपश्वालम्भनयागस्तद्रूपार्थस्य स्तावकतया प्राशस्त्यप्रतिपादकतयेत्यर्थः। तथाच वायव्यं श्वेतमालभेत भूतिकामः। वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एनं भूतिं गमयतीति श्रूयते। अनया श्रुत्या यतः क्षिप्रगामितया क्षिप्रफलप्रदो वायुरस्य पशोर्देवता अतः प्रशस्तमिदं वायव्यश्वेतालम्भनमिति प्रतिपाद्यत इति भावः।

निषेध्यनिन्दकतयेति। तथाच बर्हिषि रजतं न देयमिति निषेधोपक्रमे यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सराद् गृहे रोदनं भवतीत्युक्त्वा रोदनं प्रति हेतुरुपन्यस्तते "सो-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तच्च प्राशस्त्यज्ञानं शाब्दभावनायामितिकर्त्तव्यतात्वेन सम्भ-
त्स्यते। तदिदं वक्ष्यमाणार्थभावनाभाव्यका लिङादिज्ञानकर-

रोदीत् यदरोदीत तद्रुद्रस्य रुद्रत्व"मित्यर्थवादः श्रूयते। तत्र यतोऽस्य रोदनं जातम् अतो वर्हिष्यन्तरे रोदनस्यावश्यम्भावितापतिपादनद्वारेण वर्हिषि रजतदानस्य निषेध्यस्य अनिष्टफल-जनकतया निन्दितत्वमिति प्रतिपाद्यत इति भावः।

अतश्चेति। पूर्व्वोक्तयुक्तेरर्थवादस्यार्थवत्त्वावश्यकत्वादित्यर्थः। अर्थवादैः स्तुत्यर्थवादैः। तथाच—

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्। तस्मादनित्यमुच्यते।

इति प्रथमाध्यायद्वितीयपादसूत्रेण वाक्यानां क्रियाप्रतिपादकतयैव प्रामाण्यम्। यानितु क्रियां क्रियासम्बद्धं वा किञ्चिन्नावगमयन्ति तेषामप्रामाण्यमित्यर्थवादानामप्रामाण्यमिति पूर्व्व-पक्षयित्वा—

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः।

इति सिद्धान्तसूत्रेण विध्येकवाक्यतया तेषां प्रामाण्यं सिद्धान्तितम्। सूत्रार्थस्तु विधिना एक-वाक्यत्वादेकतात्पर्य्यकत्वादर्थवादानां प्रामाण्यम्। स्तुत्यर्थेन क्रियाप्राशस्त्यप्रतिपादनेनार्थवाद-वाक्यानि विधीनामुपकारकाणि स्युरिति।

एवं निन्दार्थवादानां निषेध्यनिन्दितत्वप्रतिपादनेन एकवाक्यतया प्रामाण्यम्। एकवाक्यता च एकतात्पर्य्यकत्वम्। तच्च विधिनिषेधयोरिव स्तुत्यर्थवादनिन्दार्थवादयोरपि प्रवृत्तिनिवृत्तिफल-कतया सिध्यतीति बोध्यम्।

स्तुत्यर्थवादजनितप्राशस्त्यज्ञानस्योपयोगमाह तच्चेति। शब्दभावनायां प्रवर्त्तनायां पुरुष-प्रवृत्त्युत्पादनायामिति यावत्। इति कर्त्तव्यत्वात्वेन लिङ्पदं केन प्रकारेण पुरुषप्रवृत्तिं भावयेदित्याकाङ्क्षासमुत्थितक्रियाप्रकारत्वेन। तथाच लिङ्पदमर्थवादोपनीतकर्म्मप्राशस्त्यज्ञान-सहकारेण पुरुषप्रवृत्तिं भावयेदिति सिध्यतीति भावः। यद्यपि विधेर्निष्कम्पप्रवृत्तिजनकतया प्राशस्त्यमनुपयोगीत्यापाततोऽवगम्यते, तथापि प्रवृत्तिप्रतिबन्धकालस्यादिनिवारकतया कर्म्मप्राशस्त्य-ज्ञानमुपयुज्यत एव। एवमुत्कटरागादिनिवारकतया कर्म्मणो निन्दितत्वज्ञानस्यापि निवृत्त्युप-योगित्वमिति बोध्यम्।

इति कर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेनान्वेतीति सर्व्वादौ शब्दभावना-निरूपणावसरे यदभिहितं तदिदानीमुपसंहरति तदिदमिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पिका प्राशस्त्यज्ञानेतिकर्त्तव्यताका शाब्दी भावना लिङ्त्वांशेनोच्यत इति।

ननु केयं शाब्दी भावना, उच्यते पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः। स एव विध्यर्थः। लिङादिश्रवणे अयं मां प्रवर्त्तयतीति नियमेन प्रतीतेः। यत्तु इष्टसाधनत्वं लिङर्थस्तत्र तथा सति इष्टसाधनमिति शब्दस्य विधिशब्दः पर्य्यायः स्यात्। न च पर्य्यायत्वं युज्यते। सन्ध्योपासनं ते इष्टसाधनं तस्मात् तत् त्वं कुर्व्विति सहप्रयोगात्। पर्य्यायाणाञ्च सहप्रयोगाभावात्। अतश्च व्यापारविशेष एव विध्यर्थः। स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्य्यायं इत्युक्तम्।

---

प्रागुक्तमपि लिङर्थस्य शब्दभावनारूपत्व मतान्तरनिराकरणाय पुनराह नन्विति। दूषयितुं मतान्तरमुत्थापयति यत्त्विति। तत्र मते। तथा सति इष्टसाधनत्वस्य लिङर्थत्वे सति। पर्य्यायः स्यादिति। सास्नादिमत्पशुशब्दस्य गोशब्द इव एकार्थबोधकतया इष्टसाधनशब्दस्यापि विधिशब्दः पर्य्यायः स्यादित्यर्थः। इष्टापत्तिं निराकरोति न चेति। एकार्थताविरोधिन सहप्रयोगं निराकरणहेतुमाह सन्ध्योपासनमिति। यद्यपि तथाविधप्रयोगस्य सहप्रयोगत्वे स्वमतेऽपि इदं वाक्यं प्रवर्त्तकं तस्माद्विधिरिति सहप्रयोगात् प्रवर्त्तकत्वमपि विध्यर्थो न सम्भवति। अथोच्यते तत्र विधिर्विधिपदवाच्य इत्यर्थो वक्तव्य इति। तर्हि तन्मतेऽपि कुरु इत्यस्य कर्त्तव्यतया निश्चिनु इत्यर्थस्यापि सुवचत्वं स्यात्। तथापि लिङ्पदस्य पुरुषप्रवृत्तिजनकतया प्रवृत्तेश्चेष्टत्वाभावेन लिङंशस्य इष्टसाधनतार्थकत्वानुपपत्तिरेव तत्र दोषः। तस्मादाख्यातांशस्य स्वर्गादिजनकताबोधकत्वेन इष्टसाधनताभ्युपगमः कथञ्चिद्भवितुमर्हति न लिङंशस्येति बोध्यम्। व्यापारविशेषः प्रवृत्त्यनुकूलव्यापारः। उक्तम् आदावेवेति शेषः।

ननु लौकिकव्याकरणकोषादौ लिङ्पदस्य प्रेरणाख्यव्यापारविशेषे शक्तिरित्येवं शब्दप्रमाणाभावेन तत्र तस्य शक्तिग्रहासम्भवात् स्वनिष्ठव्यापारस्य कथं लिङ्पदवाच्यत्वावधारण-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ननु लोके शब्दनिष्ठे प्रेरणापरपर्य्यायव्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात् कथं तस्य विधिशब्दात् प्रतीतिरिति चेत्। सत्यमेतत् तथापि बालस्तावत् स्तन्यपानादौ स्वरोदनादिजनित-मातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्वावधारणात् सविधिक-प्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्-कारणत्वेन तस्य प्रवर्त्तनाज्ञानमनुमिमीते।

---

मित्याशङ्कते नन्विति। लोके व्याकरणकोषादौ। शब्दप्रयोगाभावादित्यनेनास्यान्वयः। शब्दनिष्ठे लिङ्पदनिष्ठे। व्यापार इति। शक्तिग्रहाभावादित्यनेनान्वयः। शब्दप्रयोगेति शक्तिग्राहकशब्दप्रयोगेत्यर्थः। विधिशब्दात् लिङ्पदात्।

तथापि—शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इत्युक्तशक्तिग्राहकप्रमाणेषु मध्ये व्याकरणकोषाप्तवाक्यादीनामभावेऽपीत्यर्थः। व्यवहाररूपस्य शक्तिग्राहकप्रमाणस्येह सद्भावोऽस्तीति दर्शयति बालस्तावदिति। बालो बाल्यावस्थतया अव्युत्-पन्नः। अनुमिमीत इत्यनेनास्यान्वयः। अनुमाने व्याप्तिग्रहं दर्शयति स्तन्यपानादाविति। मातृ-प्रवृत्तेरित्यनेनान्वितम्। अत्र पानपदे अन्तर्भूतो णिजर्थः। आदिपदात् दुग्धपानादिपरिग्रहः स्वरोदनेति। स्वस्य बालस्य अतिबाल्यावस्थायामिति शेषः। यद्रोदनादि तज्जनिता या स्तन्य-पानादौ मातृप्रवृत्तिस्तस्या इत्यर्थः। स्वाभिप्रायेति। स्वस्य योऽभिप्रायः पानाभिलाषस्तद्रूपाया प्रवर्त्तना तस्या ज्ञानं मातृकर्त्तृकानुभवस्तज्जन्यत्वावधारणात् स्तन्यपानादौ मातृप्रवृत्तेस्तज्जन्यत्व-निश्चयादित्यर्थः। एतेन अन्यदीयशब्दजन्या अन्यदीयप्रवृत्तिः शब्दकर्त्तुरभिप्रायरूपप्रवर्त्तना-ज्ञानादेव भवतीति व्याप्तिर्दर्शिता। सविधिकेति। लिङ्पदघटित गामानयेत्यादिरूपेत्यर्थः। प्रयोजकेति। यत्र द्वौ प्रयोज्यप्रयोजकौ व्युत्पन्नावपरश्च बालोऽव्युत्पन्न इत्येते वर्त्तन्ते तत्रेति भावः। प्रयोज्येति। यं प्रत्युपदिशति तथाभूतव्युत्पन्नेत्यर्थः। तस्य प्रवृत्तिं गवानयनादिप्रवृत्तिम्। उपलभ्य अनुभूय। तत्कारणत्वेन गवानयनादिप्रवृत्तिजनकत्वेन। प्रवर्त्तनाज्ञानं प्रवृत्तिजनकताज्ञानम्। अनुमीयत इति। तथाच इयं प्रयोज्यवृद्धस्य गवानयनादिप्रवृत्तिर्वाक्यविशेषसूचितप्रयोजकवृद्ध-निष्ठाभिप्रायरूपप्रवर्त्तनाजन्या, अन्यदीयशब्दादन्यदीयप्रवृत्तित्वात्। स्तन्यदानादौ मातृप्रवृत्ते-रस्मद्रोदनसूचिताभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्ववदित्यनुमितिप्रक्रिया।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि भोजनादौ प्रवृत्ते: समीहितसाधनताज्ञानपूर्व्वकत्वावधारणात् प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्व्वकत्वाध्यवसानं युक्तम्। तथाप्यन्यप्रेरितप्रवृत्तौ प्रवर्त्तनाज्ञानजन्यत्वस्योत्तमवृद्धप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात् तत्कारणत्वेन प्रवर्त्तनाज्ञानस्यैवाध्यवसानम्।

तच्च प्रवर्त्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्य-

---

ननु प्रवृत्ते: प्रवर्त्तनाज्ञानजन्यत्वं न सार्व्वत्रिकं भोजनादिप्रवृत्तौ व्यभिचारात्। इष्टसाधनताज्ञानजन्यत्वन्त्वव्यभिचारि। यत्र यत्र हि लोक: प्रवर्त्तते तत्र तत्रेष्टसाधनतामवध्यैव, न पुन: सर्व्वत्र प्रवर्त्तनाम्। तस्मात् प्रयोज्यवृद्धप्रवृत्तेरपीष्टसाधनताज्ञानजन्यत्वमेवानुमेयं न तु प्रवर्त्तनाज्ञानजन्यत्वमित्यत आह यद्यपीति। समीहितसाधनता इष्टसाधनता। अध्यवसानमवधारणम्। प्रवृत्तेरिष्टसाधनताज्ञानजन्यत्वावधारणेऽपि अन्यप्रेरितपुरुषविशेषप्रवृत्तेरिष्टसाधनताज्ञानस्य प्रवर्त्तनाज्ञाननिबन्धनत्वात् प्रवर्त्तनाज्ञानस्यैवान्वयव्यतिरेकाभ्यां मूलकारणत्वमित्याह तथापीति। तत्कारणत्वेन प्रवृत्तेर्मूलकारणत्वेन।

तथाच सर्व्वत्रैव इष्टसाधनताज्ञानस्य प्रवृत्तिकारणत्वमस्तु। परन्तु अन्यत्रेष्टसाधनताज्ञानं स्वत एवोत्पद्यते न पुन: प्रवर्त्तनामपेक्षते। अन्यप्रेरितपुरुषप्रवृत्त्युत्पत्तिस्थले तु नियमेन प्रवर्त्तनाज्ञानमपेक्षत एव। तज्ज्ञानमन्तरेण प्रवृत्तिविषयकर्म्मणि इष्टसाधनताज्ञानानुपपत्ते:। तथाहि इष्टं द्विविधं सुखप्राप्तिरूपं दु:खपरिहाररूपञ्च। तत्र स्वर्गकामो यजेत ओदनकाम: पचेदित्यादिवैदिकलौकिकवाक्याभ्यां प्रवर्त्तनाज्ञाने जाते समनन्तरमेव तत्तत्कर्म्मण: सुखरूपेष्टसाधनताज्ञानमुत्पद्यते। एवं सन्ध्यामुपासीत गामानयेत्यादिवाक्यश्रवणजन्यप्रवर्त्तनाज्ञानोत्पादानन्तरमेव च सन्ध्योपासनादे: प्रत्यवायपरिहार-प्रभुक्रोधपरिहाररूपेष्टसाधनताज्ञानं सम्भवति, न पुनस्तत्तद्वाक्यश्रवणात् प्राक्। तस्मात् परप्रेरितप्रवृत्तेरिष्टसाधनताज्ञानजन्यत्वेऽपि इष्टसाधनताज्ञानस्य प्रवर्त्तनाज्ञानजन्यत्वात् तस्यैव मूलकारणतया कारणत्वेन व्यपदेश: समुचित:। यथा घटस्य भ्रमिजन्यत्वेऽपि दण्डं विनाभ्रमेरुत्पत्त्यसम्भवात् दण्डस्यैव मूलकारणत्वेन कारणत्वव्यपदेशस्तद्वदत्रापीति भाव:।

नन्वस्तु परप्रेरितप्रवृत्ते: प्रवर्त्तनाज्ञानजन्यत्वम्। प्रवर्त्तनाज्ञानन्तु प्रयोजकवाक्यजन्यमित्यत्र किं मानमित्यत आह तच्चेति। अन्वयव्यतिरेकाभ्यामिति। तथाविधज्ञानसत्त्वे प्रवर्त्तनाज्ञानसत्ता तदसत्त्वे च तदसत्तेत्यन्वयव्यतिरेकाभ्यामित्यर्थ:।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मित्यवधारयति। तत्र चावापोद्वापाभ्यां प्रवर्त्तनायां विधिशक्तिमवधारयति।

प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना। स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्त्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति। एवञ्च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्त्तनात्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण। तथैव शक्तिग्रहात्। विशेषरूपेण तु प्रतीतिर्लक्षणयैव।

---

ननु वाक्यस्य प्रवर्त्तनाज्ञानजनकत्वे अङ्गीक्रियमाणे किं संहतपदानां तथाविधज्ञानजनने शक्तिरभ्युपेया, वाक्यघटकपदविशेषस्य वा। पदविशेषस्येति चेत् कतमस्य पदस्येत्यपेक्षायामाह तत्रेति। सविधिकवाक्ये इत्यर्थः। आवापेति। वाक्ये पदान्तरस्य सन्निवेशनमावापः। वाक्यघटकपदविशेषस्योद्धरणमुद्वापः। ताभ्यामित्यर्थः। प्रवर्त्तनायां प्रवर्त्तनाज्ञानजनने। विधिशक्तिर्लिङादिपदशक्तिः।

तथाच गामानयेत्युक्ते प्रयोज्येन गवानयने कृते अव्युत्पन्नः प्रथमं गामानयेतिवाक्यस्यैव प्रवर्त्तनाज्ञानजनने शक्तिमवधारयति। अनन्तरम् आनयपदोद्वापपूर्वकमानीतवत्पदनिवेशेन गामानीतवानित्युक्ते कस्यापि प्रवृत्तेरदर्शनेन तथा गोपदोद्वापपूर्वकाश्वपदनिवेशेन अश्वमानयेत्युक्ते चाश्वानयनप्रवृत्तिदर्शनादसौ द्रष्टा लिङ एव प्रवर्त्तनाज्ञानजननशक्तिमत्त्वं न गोपदस्य नापि धातोरित्यनुमिनोतीति भावः।

ननु केयं प्रवर्त्तना यत्र विधेः शक्तिरवधार्य्येत्यत आह 'प्रवृत्त्यनुकूल' इति। कोऽसौ व्यापार इत्यत आह स चेति। प्रैषादीति। लोके पुरुषनिष्ठोऽभिप्रायरूपः प्रैषः प्रेरणम्। आदिना अनुज्ञानसंग्रहः। वेदे तु पुरुषाभावात् लिङ्निष्ठशक्तिरूप इति विविध इत्यर्थः। तेषां तत्तद्रूपेण विधिशब्दवाच्यत्वमनुपपन्नम्, तच्छब्दादेकनैकमात्रोपस्थितावपरस्योपस्थित्यभावादन्वयव्यभिचारापत्तेः। तस्मात् सामान्यतः प्रवर्त्तनैव विधिशब्दवाच्येत्यवधारयतीत्याह प्रत्येकमिति। लक्षणया सामान्यवाचकशब्दस्य विशेषनिष्ठत्वरूपाजहत्स्वार्थलक्षणया।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च वैदिकलिङादिश्रवणेऽपि प्रवर्त्तनासामान्यमेव प्रतीयते। तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदेऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्य्यायः कश्चिद्व्यापार इति कल्प्यते। अतश्च शब्दनिष्ठ एव प्रेरणापरपर्य्यायो व्यापारः शाब्दी भावना। सैव प्रवर्त्तनात्वेन रूपेण विध्यर्थ इति।

अयमेव चार्थो "अभिधाभावनामाहुरन्यामेव लिङादय" इति वार्त्तिकस्य। अभिधीयते अनेनेति व्युत्पत्त्या अभिधाशब्देन शब्द उच्यते। तद्व्यापारात्मिका भावना लिङ्वाच्येति केचिदाहुः।

---

लौकिकवाक्यात् सामान्यतः शक्तिग्रहं प्रदर्श्य वैदिकवाक्यादपि सामान्यतः शक्तिग्रहं प्रतिपादयति एवञ्चेति। लिङादीत्यादिपदात् तव्यादिपरिग्रहः। ननु वैदिकलिङादिश्रवणे सामान्यतः प्रवृत्त्यनुकूलव्यापारप्रतीतावपि तथाविधव्यापारादर्शनादप्रामाण्यमस्तु वाक्यस्येत्यत आह तत्रेति। शब्दनिष्ठव्यापारत्वादेव शाब्दभावनात्वव्यपदेश इत्याह अतश्चेति।

अत्रैव भट्टसम्मतिमाह अयमेवेति। वार्त्तिकस्याभिप्राय इत्यन्वयः। अभिधाभावनापदेन कथं शाब्दी भावना लभ्यत इत्यभिधापदं व्याचष्टे अभिधीयत इति।

वस्तुतस्तु अभिधापदेन शक्तिरुच्यते मुख्यत्वात्। तेन अभिधाभावनां शक्तिरूपां भावनां लिङादय आहुरित्यर्थः। तथाच लिङ्पदशक्तिरेव प्रवर्त्तकतारूपार्थबोधनद्वारा पुरुषप्रवृत्तिमुत्पादयन्ती प्रवर्त्तनापदवाच्या भवति। सा चाभिधा शब्दनिष्ठवृत्तिरूपत्वात् शाब्दी भावनेत्युच्यते। अतएव "अर्थात्मभावना त्वन्या सर्व्वाख्यातेषु गम्यते" इत्युत्तरार्द्धे अर्थात्मभावनापदेन पुरुषनिष्ठप्रवृत्तिरूपा द्वितीया भावनेत्युक्तम्। तथाच एका भावना लिङ्शब्दनिष्ठवृत्तिरूपत्वात् शाब्दी अन्या तु पुरुषनिष्ठप्रवृत्तिरूपत्वादार्थीति वार्त्तिकतात्पर्य्यम्। शक्त्यतिरिक्तस्य शब्दनिष्ठतथाविधव्यापारस्याननुभवात्। अतएवोक्तम्—

लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्यां पुरुषप्रवृत्तिः।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥ इति।

इति केचिदिति। शब्दनिष्ठव्यापारविशेष प्रवर्त्तनेति प्रागुक्तमतं केषाञ्चिदित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अन्ये त्वाहुः सत्यं प्रवर्त्तनासामान्यं विध्यर्थः, तथैव शक्तिग्रहात्। प्रवृत्त्यनुकूलस्य व्यापारः प्रवर्त्तना। अपौरुषेये च वेदे प्रेषादेरसम्भवात् कश्चित् पुरुषप्रवृत्त्यनुकूलो व्यापार-विशेषः कल्पनीयः। विधिशब्दाभिधेयप्रवर्त्तनासामान्यस्य विशेषमन्तरेणापर्य्यवसानात्। तत्र कोऽसौ व्यापार इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते। तस्यापि प्रवृत्त्यनुकूलत्वात्। सर्व्वोऽहि समीहितसाधनतां ज्ञात्वा प्रवर्त्तते। अन्यप्रेरितो यदीष्ट-साधनतां न जानाति तदा नैव प्रवर्त्तते।

स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव। अन्यथा विधेः प्रवर्त्तकत्वानुपपत्तेः।

---

मतान्तरमाह अन्ये त्विति। सत्यमित्यनेन सर्व्वं पूर्व्ववादिमतमङ्गीकृत्य व्यापारविशेषस्य केवलमन्यप्रकारत्वं दर्शयति तत्र कोऽसाविति। धात्वर्थनिष्ठं यागादिनिष्ठम्। समीहित-साधनत्वं बलवदनिष्टाननुबन्धीष्टसाधनत्वम्। तस्य प्रवर्त्तनापदवाच्यत्वबीजमाह तस्यापीति। धात्वर्थगतसमीहितसाधनत्वस्य प्रवृत्तिजनकतायामन्वयव्यतिरेकौ दर्शयति सर्व्वोऽहीति। प्रवर्त्तत इत्यन्वयप्रदर्शनम्। नैव प्रवर्त्तत इति व्यतिरेकप्रदर्शनम्।

ननु लिङ्पदनिष्ठः स्वतन्त्रप्रेरणाख्यव्यापार एव प्रवर्त्तनेत्यङ्गीक्रियतामलं धात्वर्थगत-समीहितसाधनताकल्पनेन गौरवादित्यत आह स्वतन्त्रेति। तथाच लिङ्निष्ठस्वतन्त्र-प्रेरणाख्यव्यापारविशेषस्य प्रवर्त्तनात्वाङ्गीकारेऽपि विधेयगतेष्टसाधनताज्ञानस्यावश्याभ्युपेय-त्वम्। प्रागुक्तान्वयव्यतिरेकाभ्यां प्रवृत्तिं प्रति तस्य हेतुत्वावश्यम्भावात्। तस्मादङ्गीकृत-प्रवर्त्तनाख्यस्वतन्त्रव्यापारेण विधेयगतमिष्टसाधनत्वमपि बोध्यत इति भावः। तदनाक्षेपे का हानिरित्यत आह अन्यथेति। विधेयगतेष्टसाधनत्वानवबोधने इत्यर्थः। प्रवर्त्तकत्वेति। तथाच विधेयस्य समीहितसाधनताज्ञानमन्तरेण विधिशतेनापि पुरुषप्रवृत्तिकत्पादयितु-मशक्येति भावः। एतन्मते तु विधिबोधितपदार्थस्य समीहितसाधनतायाः प्रवर्त्तकत्वेन विधेरपि प्रवर्त्तकत्वं निर्व्वहतीति बोध्यम्। एवञ्च यदि स्वतन्त्रव्यापाराङ्गीकारेऽपि धात्वर्थ

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अतस्तावश्यकत्वात् समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः ।

एवञ्च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति। किञ्च एको व्यापारः स्पन्दाद्यतिरिक्तः कल्पनीयः। तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य प्रवर्त्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वं शब्दस्य च परनिष्ठ-

---

गतसमीहितसाधनताऽवश्यमभ्युपेया तदा तस्या एव विधिशब्दबोध्यं प्रवर्त्तनात्वं वक्तव्यमलं स्वतन्त्रप्रेरणाख्यव्यापाराङ्गीकारेण गौरवादित्याह अतश्चेति।

एवञ्चेति। विधेर्धात्वर्थगतसमीहितसाधनताऽऽत्मप्रवर्त्तनाबोधकत्वे इत्यर्थः। लोकसिद्धमिति। सर्व्वेषां गवादिशब्दानां गवादिव्यक्तिनिष्ठगोत्वादिबोधकत्वस्य सर्व्वत्र दर्शनात् तत्तच्छब्दनिष्ठधर्म्मविशेषबोधकत्वस्य च कुत्राप्यदर्शनात् विधिशब्दोऽप्यन्यनिष्ठधर्म्मविशेषबोधक एव शब्दत्वादित्यनुमानेन विधिशब्दस्यापि लोके अन्यनिष्ठव्यापारबोधत्वसिद्धिरिति भावः। सिद्धमव्यभिचरिततया निश्चितम्।

ननु विधेः प्रवर्त्तकत्वं सर्व्ववादिसिद्धम्। तच्च भवन्मते स्वप्रतिपाद्यं यत् धात्वर्थनिष्ठसमीहितसाधनत्वं तज्ज्ञानद्वारैणैव वाच्यम्। अस्मन्मते तु स्वगतप्रवर्त्तनाद्वारेणेति लाघवात् शब्दनिष्ठ एव प्रेरणापरपर्य्यायो व्यापारोऽभ्युपेय इवत आह किञ्चेति। भवन्मत एव गौरवं नास्मन्मत इति दर्शयति एको व्यापार इति। स्पन्दाद्यतिरिक्त इति। तथाच अप्रत्यक्षोऽनिर्व्वचनीयश्चायं व्यापार इति भावः। इत्येकं गौरवम्।

गौरवान्तरमप्याह तस्य चेति। स्पन्दाद्यतिरिक्तशब्दनिष्ठव्यापारस्येत्यर्थः। प्रवृत्त्यनुकूलमित्यनेनान्वयः। स्वप्रवृत्तौ स्वभावजन्यपुरुषप्रवृत्त्युत्पत्तिस्थले। पराधीनेति। पुरुषान्तराभिप्रायजन्यपुरुषान्तरप्रवृत्त्युत्पत्तिस्थले। वेदे लोके चेति भावः। कारणत्वेनेति। तथाच यदि तथाविधव्यापारस्य प्रवृत्त्यनुकूलत्वं कुत्रापि क्लृप्तं स्यात् तदा तस्य प्रवृत्तिहेतुत्वं सम्भवति। परन्तु वेदे लोके वा कुत्रापि तस्य प्रवृत्तिहेतुत्वं न क्लृप्तमिति तत्कल्पनमपरं गौरवमिति भावः। ननु यदा तथाविधव्यापारः प्रवर्त्तनापदवाच्यस्तदास्य प्रवृत्तिहेतुत्वं सुतरां सिद्धं न कल्पनीयमित्यत आह प्रवर्त्तनात्वेनेति। तथाच तथाविधव्यापारो न प्रवर्त्तनापदवाच्यः। परन्तु भवता प्रवर्त्तनापदवाच्यमनुपलभमानेन कल्पिततथाविधव्यापार एव प्रवर्त्तनात्वेन रूपेण ज्ञात इति भावः। प्रवृत्त्यनुकूलत्वं पुरुषप्रवृत्तिहेतुत्वम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

व्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम्। विधेश्च प्रवर्त्तकत्वनिर्व्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पना गौरवादरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्त्तनात्वेन रूपेण विध्यर्थत्वकल्पनम्, लाघवात् अनन्य-निष्ठत्वाच्च।

न च विधेः प्रवर्त्तकत्वनिर्व्वाहार्थं समीहितसाधनत्वकल्पनात् प्रेरणानभिधाने च विधेः प्रवर्त्तकत्वाभावात् धात्वर्थस्य समीहित-साधनत्वकल्पकमेव नास्तीति वाच्यम्। प्रवर्त्तनाभिधानेनैव त्वन्मतेऽपि विधेः प्रवर्त्तकत्वात्। विध्यभिहितस्य प्रवर्त्तना-

---

गौरवान्तरमप्याह शब्दस्य चेति। स्वनिष्ठव्यापारबोधकत्वमिति। तथाच शब्दः परनिष्ठ-धर्म्मविशेषबोधक इति नियमभङ्गोऽपि गौरवान्तरमिति भावः। अस्मदभिमतधात्वर्थगतसमी-हितसाधनतापि भवताङ्गीकार्य्येति तत्कल्पनमपि गौरवान्तरमित्याह विधेश्चेति। इति कल्पनात् एवं नानापदार्थकल्पनापेक्षया। आवश्यकस्य भवतोऽपि सम्मतस्य। क्लृप्तस्येति। इष्टसाधनता-ज्ञानमन्तरेण चिकीर्षायास्तामन्तरेण च प्रवृत्तेः कुत्रापि सम्भवाभावादिष्टसाधनताज्ञानस्य प्रवृत्ति-प्रयोजकतायाः क्लृप्तत्वमिति भावः। लाघवात् केवलं धात्वर्थगतसमीहितसाधनताया एव विध्यर्थत्वं कल्पनीयं नान्यत् किमपि कल्पनीयमिति कल्पनालाघवात्। एतन्मते शब्दस्य परनिष्ठधर्म्म-विशेषबोधकत्वनियमोऽपि न भज्यत इत्याह अनन्येति।

ननु विधेः प्रवर्त्तकत्वनिर्व्वाहार्थमेव धात्वर्थस्य समीहितसाधनत्वकल्पना। भवन्मते विधेः प्रेरणाख्यव्यापारानङ्गीकारात् प्रवर्त्तकत्वासिद्ध्या धात्वर्थस्य कथं समीहितसाधनत्वं कल्पनीयं कल्पकाभावादित्यापत्तिं निराकरोति न चेति। प्रवर्त्तनाभिधानेनैव प्रवर्त्तनाबोधकत्वेनैव। अत्रायमाशयः। विधौ लिङ् इत्यनुशिष्यते। विधिः प्रवर्त्तनारूपः। एवञ्च लिङः प्रवर्त्त-नार्थकत्वेन प्रवर्त्तनाबोधकत्वं प्रवर्त्तनाबोधकत्वेनैव च प्रवर्त्तकत्वं सिद्धम्। लिङ्पदश्रुताविदं मां प्रवर्त्तयतीत्यवगमानन्तरमेव पुरुषप्रवृत्तेरौचित्यादिति प्रवर्त्तनाबोधकत्वेन विधेः प्रवर्त्तकत्व-मुभयवादिसिद्धम्। परन्तु सा प्रवर्त्तनाख्या केति जिज्ञासायां भवता शब्दनिष्ठोऽनिर्व्वचनीयो

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सामान्यस्य विशेषमन्तरेणापर्य्यवसानात् समीहितसाधनत्वाक्षेपकत्वात्।

न चेष्टसाधनत्वस्य विध्यर्थत्वे सन्ध्योपासनन्ते इष्टसाधनं तत् त्वं कुर्व्विति सह प्रयोगानुपपत्तिरिति वाच्यम्। इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात् प्रवर्त्तनात्वेन रूपेणाभिधानात्। सामान्यशब्दस्य विशेषशब्देन दृष्टः सहभावः। पाञ्चालराजो द्रुपद इत्यादौ। तस्मात् समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः। सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना। उक्तवार्त्तिकस्यापि अयमेवाभिप्रायः।

अभिधीयते सा अभिधा समीहितसाधनता सैव प्रवर्त्तनाभिहिता। पुरुषप्रवृत्तिं भावयतीति भावनां लिङादय आहु-रिति। यथाहुः—

---

व्यापारविशेषः प्रवर्त्तनात्वेन कल्प्यते। अस्माभिस्तु धात्वर्थगतसमीहितसाधनत्वमिति विशेष इति।

प्रागुक्तदूषणमुद्धरति न चेति। विशेषरूपेणेति। यथाच यन्मते इष्टसाधनत्वमेव विध्यर्थस्तन्मते सह प्रयोगोऽनुचितः। अस्मन्मते तु इष्टसाधनत्वेन विशेषरूपेण विधिना नाभिधीयते किन्तु प्रवर्त्तनात्वेन सामान्यरूपेण। एवञ्च सन्ध्योपासनन्ते इष्टसाधनमित्यनेन विशेषरूपेणेष्टसाधनत्वं बोध्यते। तत्त्वं कुर्व्वित्यनेन तु नेष्टसाधनत्वं बोध्यते, किन्तु प्रवर्त्तनामात्रं बोध्यते। तत्कथं सहप्रयोगानुपपत्तिरिति भावः।

ननु प्रवर्त्तनात्वसामान्यरूपेणापि इष्टसाधनताया एवोपस्थितेः। कथं सहप्रयोगोपपत्तिरित्यत आह सामान्यशब्दस्येति। सामान्यवाचकशब्दस्येत्यर्थः। विशेषशब्देन विशेषवाचकशब्देन। क्व दृष्ट इत्यत्राह पाञ्चालराज इति। अयं सामान्यशब्दः। द्रुपद इति विशेषशब्दः। उपसंहरति तस्मादिति। तस्याः शाब्दभावनात्वं साधयति सैव चेति। अभिधाभावनामाहुरन्यामेव लिङादय इति वार्त्तिकोक्तस्याप्येतन्मत एव स्वरस इत्याह उक्तवार्त्तिकस्येति।

व्याख्यानेनाभिप्रायं व्यञ्जयति अभिधीयत इति। एवन्मतप्रवर्त्तकस्पष्टप्रमाणमाह यथाहुरिति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्म्मञ्च प्रवदन्ति प्रवर्त्तनाम्॥ इति।

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इति।

आख्यातत्वांशेनार्थी भावनोच्यते। ननु केयमार्थी भावना। कर्त्तृव्यापार इति चेन्न। यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः। न चेष्टापत्तिः। तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेत्। अत्राहुः। सत्यं न यागो भावना, किन्तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः सा भावना। स एव चाख्यातत्वांशेनोच्यते। यजेतेत्याख्यातश्रवण एव यागे यतेतेति प्रतीतेर्जायमानत्वात्।

यस्य प्रयत्नपूर्व्वकं गमनादि करोति तस्मिन् देवदत्तो गमनं

---

पुंसामिति। इष्टाभ्युपायत्वात् इष्टसाधनत्वादन्यः कोऽपि पदार्थः। पुंसां क्रियासु प्रवर्त्तकः प्रवृत्तिहेतुर्न भवति। तथाच इष्टसाधनत्वमेव प्रवृत्तिहेतुरिति भावः। तथा प्रवृत्तिहेतुं धर्म्मं प्रवर्त्तनां प्रवदन्ति। एवञ्च यदि प्रवृत्तिहेतुधर्म्मस्य प्रवर्त्तनात्वं तर्हि सुतरामेव इष्टसाधनत्वस्य प्रवर्त्तनात्वमिति सिध्यति। शाब्दभावनानिरूपणमुपसंहरति तत्सिद्धमिति।

आर्थभावनाभाव्यका लिङादिज्ञान॥रणिका प्राशस्त्यज्ञानेतिकर्त्तव्यताका शाब्दी भावना लिङ्त्वांशेनोच्यत इति प्रागुक्तवाक्येन आर्थभावना शाब्दभावनाया भाव्येत्युक्तम्। सा पुनरार्थभावना किंस्वरूपेति जिज्ञासायां तां निरूपयति आख्यातत्वांशेनेति। लिङि द्वौ धर्म्मौ विद्येते आख्यातत्वं लिङ्त्वञ्चेति। तयोराख्यातत्वांशेनेत्यर्थः। तद्व्यापारत्वेन कर्त्तृव्यापारत्वेन तस्य यागादिरूपकर्त्तृव्यापारस्य। प्रकृत्यर्थत्वेन धात्वर्थत्वेन। अत्र जिज्ञासायाम्। आहुरिति। पार्थसारथिमिश्रादय इति शेषः। स एव प्रयत्न एव। तस्याख्यातत्ववाच्यत्वे प्रमाणमाह यजेतेति। यागे यागविषये। यतेत यत्नं कुर्व्वीत।

ननु यजेतेत्यत्र यागे यतेतेति प्रतीतौ प्रमाणाभावः। गच्छतीत्यादौ गमनं करोतीत्यादि प्रतीतेर्थागं कुर्य्यादिति प्रतीतेरेवौचित्यात्। तत्कथं यत्नस्याख्यातवाच्यत्वसम्भव इत्यतः करोत्यर्थप्रयत्नयोरभेदात् करोत्यर्थप्रतीतावेव प्रयत्नप्रतीतिरिति दर्शयति यस्येति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

करोतीति करोतिप्रयोगदर्शनात्। वातादिना स्पन्दमाने तु नायं करोति किन्तु वातादिना अस्य स्पन्दो जायत इति प्रयोगात्। करोत्यर्थस्तावत्प्रयत्नः। करोतिसामानाधिकरण्यञ्चाख्याते दृश्यते यजेत यागेन कुर्य्यात्, पचति पाकं करोति, गच्छति गमनं करोतीति।

अतश्च करोतिसामानाधिकरण्यात् प्रयत्नस्याख्यातवाच्यत्वम्। न च रथो गच्छतीति प्रयोगानुपपत्तिः, रथे प्रयत्नाभावादिति वाच्यम्। वोढृरथगतं रथे आरोप्य प्रयोगोपपत्तेः।

---

करोतिप्रयोगदर्शनादिति। एतेन प्रयत्नसत्त्वे करोतिप्रयोग इत्यन्वयो दर्शितः। प्रयत्नाभावे करोतिप्रयोगाभावरूपं व्यतिरेकं दर्शयति वातादिनेति। स्पन्दः कम्पनम्। ननु कृतिप्रयत्नयोरेकत्वेऽपि प्रयत्नस्याख्यातवाच्यत्वे किं मानमित्यत आह करोतिसामानाधिकरण्यमिति। करोतिना आख्यातार्थप्रतिपादनमित्यर्थः। दर्शनं प्रकाशयति यजेतेति। यागेनेति। विधिवाक्ये धात्वर्थस्य करणत्वेनान्वयस्य सिद्धान्तितत्वादिति भावः। विधीतरत्र तु धात्वर्थस्य कर्मतयैवान्वयस्तत्रापि करोत्यर्थप्रतीतिरस्त्येवेति दर्शयति पचतीति।

अतश्चेति। यतः करोत्यर्थप्रयत्नयोरेकत्वम् आख्यातेन च प्रयत्नप्रतीतौ विवादेऽपि करोत्यर्थप्रतीतेर्वेदलोकयोः सिद्धत्वमतः करोत्यर्थप्रत्यायकस्याख्यातस्य प्रयत्नप्रत्यायकत्वमपि सुतरामङ्गीकार्य्यमिति भावः।

नन्वाख्यातेन करोत्यर्थप्रतीतिरपि रथो गच्छतीत्यादौ व्यभिचारिणी चेतनव्यापाररूपायाः कृतेरचेतने असम्भवादित्यापत्तिं निराकरोति न चेति। अश्वगतं प्रयत्नमिति शेषः। तथाच वोढृरश्वादेश्चेतनस्य यः प्रयत्नोऽवगम्यते तं रथे आरोप्य अप्रयत्नवत्यपि रथे प्रयत्नवत्त्वेन ज्ञात्वा प्रयोग उपपाद्य इत्यर्थः। तथाचोक्तम्—

स्त्रीत्वाभावेऽपि शब्दादौ टावादिप्रत्ययो यथा।
प्रयुज्यते तथाख्यातं यत्नाभावेऽप्यचेतने॥
वोढ्रश्वादिगतं यत्नं रथादावुपचर्य्यथा।
उपपाद्यः प्रयोगोऽत्र मुख्यार्थानुपपत्तितः॥ इति।

न केवलमस्मन्मत एव एष प्रयोग औपचारिकः। अर्थोत्पादानुकूलव्यापारसामान्यमेव



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यन्मतेऽप्यन्योत्पादानुकूलं व्यापारसामान्यं भावना, तन्मतेऽपि रथे-गमनातिरिक्तव्यापारानुपलब्धेः रथो गच्छतीति प्रयोगस्यौप-चारिकत्वमेकमेवेति । अतश्च प्रयत्न एवार्थी भावना । यथाहुः—

प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्यपरस्य्यते ॥ इति ।

अन्ये त्वाहुः । भवितुर्भवनानुकूलो भावकव्यापारस्ताव-द्भावना । यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । कुठारेण च्छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशो मतिः कुठा-रेण तथा व्याप्रियते यस्मिन् व्यापारे कृते कुठारेण च्छेदनं भव-तीति । एवं यजेत स्वर्गकाम इत्यस्यायमर्थः यागेन तथा व्याप्रियेत यस्मिन् व्यापारे कृते यागात् स्वर्गो भवतीति ।

---

भावनेति मतान्तरेऽपि एतत्प्रयोगस्योपचारिकत्वं समानमित्याह यन्मत इति । व्यापार-सामान्यमिति । तथाच तथाविधव्यापारस्य स्वरूपभेदेन नानारूपत्वेऽपि तथाविधव्यापार-त्वस्य शक्यतावच्छेदकत्वान्न नानाशक्तिकल्पनेति भावः । गमनातिरिक्तेति । तथाविधो व्यापारोऽनुभवविरुद्ध इति भावः । एकमेव समानमेव । उपसंहरति अतश्चेति । एतन्मते प्रमाणमाह यथाहुरिति ।

प्रयत्नेति । इह यजेतेत्यादौ प्रस्तुता विचार्यमाणा आख्यातवाच्या आर्थभावना प्रयत्नव्यति रिक्ता काचिद्वक्तुं न शक्यते इति हेतोरुपरम्यते पदार्थान्तरवादाद्विरम्यते इत्यर्थः ।

अन्योत्पादानुकूलं व्यापारसामान्यं भावनेति वादिनां मतमुत्थापयति अन्ये त्विति । भवितुरित्यादि । भवितुरुत्पत्तुर्भवनमुत्पत्तिस्तदनुकूलस्तज्जनको यो भावकस्य उत्पादकस्य व्यापारः स इत्यर्थः । अत व्यापारविशेष इत्यनुक्त्वा व्यापार इत्यभिधानाद्व्यापारसामान्य-मेव भावनेत्यायाति । कृते इति । उत्पादकेनेति शेषः । करणं वेदे धात्वर्थयागादि, लोके कुठारादि । तादृशव्यापारस्य आख्यातार्थत्वं प्रतिपादयति कुठारेणेति । व्याप्रियते व्यापारवान् भवति, कर्त्तेति शेषः । भवति निष्पद्यते ।

लौकिकप्रयोगं प्रदर्श्य वैदिकप्रयोगं दर्शयति एवमिति । व्याप्रियेत व्यापारवान्

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स च व्यापारः क्वचिदुद्यमननिपातनादिः। क्वचिदग्न्यन्वाधानादि-ब्राह्मणतर्पणान्तः। कथञ्चावाकाङ्क्षायां विशेषरूपेण पश्चादव-गम्यते।

अन्योत्पादानुकूलत्वेन सामान्यतस्त्वाख्यातादेव। रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रती-यते। रथस्तत्र गमने व्याप्रियते यस्मिन् व्यापारे कृते गमना-द्ग्रामप्राप्तिर्भवतीति प्रतीतिः। न त्वत्र गमनमात्रमाख्यातार्थः। तस्य धातुनोक्तत्वात्। तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्व्वो-त्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते। पूर्व्वेण देशेन विभज्य उत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात्। उद्यम्य निपात्य कुठारेण छिनत्तीतिवत्।

---

भवेत्। तद्व्यापारस्य स्वरूपमाह स चेति। क्वचिदिति। छिनत्तीत्यादौ। क्वचिच्चेति। यजेतेत्यादौ। अग्नीति। साङ्गयागप्रकारोऽयम्। ननु यजेतेत्यनेन तथाविधव्यापारो नोपलभ्यते। तत्कथं तथाविधव्यापार आख्यातार्थ इत्यङ्गीक्रियत इत्यत आह कथ ञ्चावेति। यागप्रकाराकाङ्क्षायामित्यर्थः। पश्चादिति। प्राक् यजिना यागमात्रप्रतीता-वपि कथं कुर्य्यादित्याकाङ्क्षायामितिकर्त्तव्यताबोधकवाक्ये यदा क्रियाप्रकारः प्रतिपाद्यते तदा अग्न्याधानादिसाङ्गयागक्रियाप्रतिपत्तौ तथा व्यापारविशेषावगम इति भावः।

ननु यदीतिकर्त्तव्यताबोधकवाक्यार्थज्ञानानन्तरमेव तथाविधव्यापारावगमस्तदा यजे-तेतिवाक्यात् तद्व्यापाराप्रतीतेः कथमस्याख्यातवाच्यत्वसम्भव इत्यत आह अन्योत्पादेति। भवितुर्भवनानुकूलो भावकव्यापार इत्यत्र भवितृपदेन क्वचित्फलं क्वचिच्च धात्वर्थ इति सामान्यत उक्तमन्यतीत्यादेति। सामान्यत इति। तथाच आख्यातपदादन्योत्पादानुकूल-व्यापारत्वेन सामान्यधर्म्मेण तदुपस्थितिः प्रागेव भवति विशेषरूपेण तु पश्चादितिकर्त्तव्यता-प्रतिपादकवाक्यादिति सामान्यतस्तस्याख्यातवाच्यत्वं सम्भवत्येवेति भावः। पूर्व्वमते रथो-गच्छतीत्यादावौपचारिकत्वमेतन्मते तु तन्नेत्याह रथो गच्छतीति। गमने गमनविषये। पूर्व्वोत्तरेति। पूर्व्वदेशविभजन उत्तरदेशसंयोजनरूप इत्यर्थः। प्रयोगात् गमनप्रकारजिज्ञासायां तत्प्रकारप्रतिपादनात्। पश्चादवगम्यत इत्यत्रार्थं हेतुः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवं देवदत्तः प्रयतते इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति। प्रयत्नानुकूलो व्यापार एवाख्यातार्थः। न तु प्रयत्नस्तस्य धातुनोक्तत्वात्। व्यापारविशेषापेक्षायाञ्चेच्छादिः। पश्चादवगम्यते, उद्यमननिपातनवत्।

तथाच सर्व्वत्रानुगतत्वादन्योत्पादानुकूलव्यापारसामान्यमेवाख्यातार्थः, न तु प्रयत्नमात्रम्। रथोगच्छति देवदत्तः प्रयतते इत्यादिषु तदभावात्। न चात्रौपचारिकत्वं वक्तुं युक्तम्। मुख्यत्वे सम्भवति तस्यान्याय्यत्वात्। करोत्यर्थोऽप्यन्योत्पादानुकूलो-व्यापार एव प्रयत्नमात्रम्। करोतेश्चेतनकर्त्तृकाख्यातसामाना-

---

पूर्व्वमते प्रयतते इत्यत्रापि आख्यातस्य न स्वार्थप्रतिपादकत्वं पौनरुक्त्यापत्तेः। अस्मन्मते तु न तथेत्याह प्रयतत इतीति। इच्छादिः इच्छादिरूपः प्रयत्नानुकूलो व्यापारविशेष इत्यर्थः। इच्छादिरित्यादिपदात् इच्छतीत्यादाविच्छानुकूलेष्टसाधनताज्ञानपरिग्रहः।

अन्योत्पादानुकूलव्यापारार्थकत्वे न कुत्राप्यनुपपत्तिरिति दर्शयति तथाचेति। न तु प्रयत्नमात्रमिति। अत्र मात्र पदात् क्वचिदन्योत्पादानुकूलव्यापारत्वेन प्रयत्नोऽप्याख्यातार्थः स्यादिति सिध्यति। इत्यादिष्वित्यादिपदात् करोति जानाति इच्छतीत्यादिपरिग्रहः। तदभावात् प्रयत्नाभावात्। तस्य चौपचारिकत्वस्य। अन्याय्यत्वात् मुख्यार्थानुपपत्तावेव तस्याङ्गीकार्य्यत्वादिति भावः। ननु तर्हि गच्छति गमनं करोतीत्यादौ करोतिना आख्यातार्थप्रतिपादनविरोधस्तयोर्विभिन्नार्थकत्वादित्यतस्तयोरभिन्नार्थं प्रतिपादयति करोत्यर्थोऽपीति। कोऽयमन्योत्पादानुकूलव्यापारः करोत्यर्थ इत्यत्र व्यापारस्वरूपमाह प्रयत्नमात्रमिति।

ननु तथापि करोतिनाख्यातार्थप्रतिपादनं न सम्भवति। आख्यातस्य व्यापारसामान्यवाचकत्वात् करोतेस्तु प्रयत्नरूपव्यापारविशेषवाचकत्वात्। नहि पशुपदस्य हस्तिशब्देनार्थप्रतिपादनं भवितुमर्हतीत्यतो यत्राख्यातस्य व्यापारत्वेन प्रयत्नबोधकत्वं तत्रैव करोतिसामानाधिकरण्यम्। न सर्व्वत्रेत्याह करोतेरिति। चेतनकर्त्तृकेति। चेतनः कर्त्ता वाच्यो यस्य तथाविधाख्यातसामानाधिकरण्यात् तथाविधाख्यातार्थस्यैव प्रतिपादकत्वादित्यर्थः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

धिकरण्यादिति। तस्सिद्धमन्योत्पादानुकूलव्यापार आर्थी भावनेति।

---

एवञ्च यत्र देवदत्तो गच्छतीत्यादावाख्यातेन चेतनकर्त्ता वाच्य स्तत्रान्योत्पादानुकूलव्यापारत्वेन रूपेण प्रयत्न एवाख्यातेन बोध्यते। तत्रैव गमनं करोतीति करोतेराख्यातसामानाधिकरण्यं न त्वचेतनरथादिकर्तृकाख्यातसामानाधिकरण्यं रथो गमनं करोतीति,तथाविधप्रयोगाभावात्। एवञ्च यदि करोतेश्चेतनकर्त्तृकाख्यातसामानाधिकरण्यं तदा प्रयत्न एवान्योत्पादानुकूलव्यापारः करोत्यर्थ इति भावः। उत्तरमनेनार्थभावनानिरूपणमुपसंहरति तस्सिद्धमिति।

अत्र ब्रूमः। अन्योत्पादानुकूलव्यापारसामान्यमाख्यातमात्रार्थ इति मते अन्यपदेन विधिवाक्ये वैदिकफलं ग्राह्यम्। यजेतेत्यत्र यागकरणकस्वर्गानुकूलव्यापारप्रतीतेः। स च व्यापारः प्रयत्न एव, व्यापारान्तरानुपलब्धेः। लौकिकवाक्ये तु धात्वर्थ एवान्यपदेन ग्राह्यः। कुठारेण छिनत्तीत्यत्र कुठारकरणकच्छेदनानुकूलव्यापारस्यैव प्रतीतेः। सोऽपि प्रयत्न एव, प्रयत्नातिरिक्तच्छेदनानुकूलव्यापारान्तराप्रतीतेः।

एवञ्च "स च व्यापारः क्वचिदुद्यमननिपातनादिः। क्वचिच्चान्यन्वाधानादिब्राह्मणतर्पणान्तः। कथम्भावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते" इति यदुक्तं तन्न मनोरमम्। तथाविधव्यापारस्य धातुनैवोक्तत्वादाख्यातार्थत्वानुपपत्तेः। द्वैधीभावानुकूलव्यापाररूपस्य छिदधात्वर्थस्य कुठारोद्यमननिपातनानतिरिक्तत्वात्। साङ्गदेवतोद्देश्यकद्रव्यत्यागरूपस्य यजधात्वर्थस्यापि अन्यन्वाधानादिब्राह्मणतर्पणान्तक्रियाप्रचयानतिरिक्तत्वात्। छेदनयजनक्रियाप्रकारविशेषाकाङ्क्षायां तत्तत्क्रियाप्रकारविशेषस्यैव विशेषरूपेणप्रतिपादनसम्भवाच्च।

यच्च "तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्व्वोत्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते" इत्युक्तं तदपि "न त्वत्र गमनमात्रमाख्यातार्थस्तस्य धातुनोक्तत्वा"दिति स्वोक्तिविरुद्धम्। पूर्व्वदेशविभजनोत्तरदेशसंयोगानुकूलव्यापारस्य गमधात्वर्थानतिरिक्तत्वात्।

न च द्वैधीभाव एव छिदधात्वर्थो गमधात्वर्थश्चोत्तरसंयोगरूप इत्युद्यमनादिक्रियायास्तदनुकूलव्यापारत्वेनाख्यातार्थत्वसम्भव इति वाच्यम्। तथात्वे वृक्षच्छेदनक्रियावान् न देवदत्त इति प्रतीत्यापत्तेः। उत्तरसंयोगं प्राप्य निवृत्तपादविहरणो यावत्कालं तत्संयोगवांस्तिष्ठति तावत्कालमपि गमनवानयं न गतिनिवृत्तिमानिति प्रतीतिव्यवहारापत्तेश्च।

यदप्यभिहितं "उत्तरेण संयुज्य रथो ग्रामं गच्छती"ति, तत्रापि क्त्वाप्रत्ययार्थानुप

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मैव च यजेतेत्याख्यातांशेनोच्यते भावयेदिति। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादिर्भाव्यत्वेन सम्बध्यते। करणाकाङ्क्षायां यागादिः करणत्वेन सम्बध्यते। प्रयाजादयः इतिकर्त्तव्यतात्वेन।

---

पत्तिः। गमनस्य उत्तरसंयोगानुकूलव्यापाररूपत्वे उत्तरसंयोगरूपत्वे वा उभयथापि गमनस्य उत्तरसंयोगपूर्व्वकत्वासम्भवात्। गमनाद्ग्रामप्राप्तिर्भवतीति लोकोक्तिविरोधाच्च।

तस्मात् यजेतेत्यादौ छिनत्तीत्यादौ च प्रयत्न एवान्योत्पादानुकूलव्यापारत्वेनाख्यातार्थो न तु व्यापारान्तरम्। नन्वेवं प्रयत्नस्यैवाख्यातवाच्यत्वमङ्गीक्रियतां न त्वन्योत्पादानुकूल-व्यापारस्येति चेन्न। प्रयतते इत्यत्र इच्छायाः, इच्छतीत्यत्रेष्टसाधनताज्ञानस्य, जानातीत्यत्र आत्ममनःसंयोगादेश्च संग्रहाय अन्योत्पादानुकूलव्यापारसामान्यस्यैवाख्यातार्थत्वाङ्गीकारावश्यकत्वात्। नहि तत्र प्रयत्नाद्यनुकूलः प्रयत्नः सम्भवति।

रथो गच्छतीत्यत्र तु रथस्य प्रयत्नासम्भवात् गमनाद्यनुकूलव्यापारान्तरानुपलब्धेश्च धात्वर्थात्मकव्यापार एवाख्याते लक्षणा। तथाच प्रकृतिप्रत्यययोरेकार्थबोधकत्वमेव नत्वाख्यातस्यार्थान्तरमस्तीति। अतएव एको द्वौ वहव इत्यादावपि प्रकृतिप्रत्यययोरेकार्थबोधकत्वात् तदभेदेनान्यतर वैयर्थ्यमिति सिद्धान्तः। एवं करोतीत्यत्रापि अन्यतरवैयर्थ्यमेव। करोतेरन्योत्पादानुकूल व्यापारबोधकत्वात् आख्यातस्यापि तदर्थबोधकत्वादित्येवम्प्रकारेणैवद्वितीयमतं परिष्करणीयं न तु यत्नकृदुत्तारीत्येति सुधीभिरालोचनीयम्।

भाव्याकाङ्क्षायामिति। भावनायाः किं भावयेत् केन भावयेत् कथम्भावयेदित्याकाङ्क्षा त्रयवत्त्वेन किं भावयेदिति भाव्याकाङ्क्षायामित्यर्थः। स्वर्गादिरिति। स्वर्गकामो यजेतेत्यादिविधौ स्वर्गादेः फलत्वेन कीर्त्तनादिति भावः। करणाकाङ्क्षायामिति। केन भावयेदित्याकाङ्क्षायामित्यर्थः यागादिरिति। तथाच यागेन स्वर्गं भावयेदिति बोधः। तथाचोक्तम्—

भावनैवहि भाव्येन फलेनान्वेतुमर्हति।

धात्वर्थः करणं तस्यां लाघवात् सन्निकर्षतः॥ इति

इतिकर्त्तव्यतात्वेनेति। कथं कुर्य्यादिति क्रियाप्रकारविशेषाकाङ्क्षायामिति शेषः। वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म्मः। यथा यागादिरिति धर्म्मस्य लक्षणस्वरूपे

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

एवञ्च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात् सिद्धं यागादेर्धर्म्मरूपत्वम्। प्रयोजनमुद्दिश्य वेदे विहितत्वादिति।

सोऽयं धर्म्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः।

---

यत्प्रागभिहितं तदिदानीं सङ्गमयति एवञ्चेति। भावनायां स्वर्गादेर्भाव्यत्वेनान्वये सतीत्यर्थः।

इदानीं धर्म्मस्य यागादेः किं विधिसमभिव्याहृतफलजनकत्वमेव, उत फलान्तरजनकत्वमपीत्यवाह सोऽयमिति। यदुद्दिश्य यत्फलमभिप्रेत्य। तदुद्देशेन तत्फलप्रत्यवैमुख्येन। तत्फलकामनयेति व्याख्यानमनुचितम्। स्वर्गादिफलवैमुख्यरहितस्याज्ञानकृतकर्म्मणापि फललाभश्रवणात् कामनाया अवश्यापेक्षणीयत्वाभावात्। ननु तर्हि किं तत्तत्फलविमुखेनानुष्ठितं यागादिकर्म्म पण्डमेव स्यादित्यवाह श्रीगोविन्देति। नाहं कर्त्ता ईश्वराय भृत्यवत्करोमीत्यनया बुद्ध्येत्यर्थः। निःश्रेयसहेतुर्मोक्षहेतुः। तथाच फलकामनाविमुखानां पापक्षयोत्पादनद्वारा यागादिर्मोक्षमेव जनयतीति न पण्ड इति भावः।

ननु जैमिनिना मोक्षेश्वरयोरनुल्लेखात्तन्मते तयोरङ्गीकार एव नोचित इति कथमीश्वरार्पणबुद्ध्या क्रियमाणयागादेर्मोक्षहेतुत्ववर्णनमिति चेत्, उच्यते। वेदस्य कर्म्मकाण्डे ईश्वरस्य मोक्षस्य चानाम्नानात् तन्मीमांसावसरे तयोः कीर्त्तनस्यानवकाशादेव तेन तदुल्लेखो न कृतः। न त्वेतौ प्रतिषिद्धौ। नह्यनुल्लेखमात्रेणानङ्गीकारनिश्चयो युक्तः। अप्रतिषिद्धं परमतमनुमतं भवतीति तन्त्रयुक्तेस्तन्त्रान्तरसिद्धयोराचार्य्यजैमिनेरप्यभ्युपगमस्यावधारणीयत्वात्।

अतएव बादरायणाचार्य्यैरीश्वरविषयकजैमिनिमतमनेकधोल्लिखितम्। अतएव च पार्थसारथिमिश्रेण शास्त्रदीपिकाप्रथमाध्यायप्रथमपादे वैशेषिकमतं तदङ्गीकृतपदार्थेषु मीमांसकसम्मतिञ्चाभिदधता वैशेषिकाभिमतौ मोक्षेश्वरावपि मीमांसकसम्मताविति प्रतिपादितम्। अतएव पार्थसारथिमिश्रेण तत्रादौ मोक्षस्वरूपमपि वर्णितं यथा—

तस्मान्न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः। त्रेधा हि प्रपञ्चः पुरुषं बध्नाति। भोगायतनं शरीरं, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः। भोग इति च सुखदुःखविषयोऽपरोक्षानुभव उच्यते। तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो मोक्ष इति।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

इतिस्मृतेः। अस्याश्चाष्टकादिवत् प्रामाण्यादित्यन्यत्र विस्तरः।

ख्यातं मन्दमतेः क्वेयं प्रक्रिया भट्टसम्मता।

तस्मादुक्तोर्विलासोऽयं गोविन्दगुरुपादयोः॥

---

ननु कर्म्मण्यनुष्ठीयमाने सत्यपि वैमुख्ये श्रुतत्वात् फलमवश्यम्भावि। अश्रुतफलजनकत्वे प्रमाणाभावादित्यापत्तिमपाकरोति न चेति।

आपत्तिनिरासकं भगवद्वाक्यं प्रमाणमाह यदिति। यत्करोषि यदाचरसि शास्त्रीयं स्वतः प्राप्तं वा। मदर्पणं मयि अर्पितं यथा भवति एवं कुरुष्वेत्यर्थः। इदमुपलक्षणम्।

युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।

अयुक्तः कामकारेण फले सक्तो निबध्यते॥

इत्यादि भगवद्वाक्यान्तरस्यापि प्रमाणत्वात्।

ननु धर्म्मस्य वेदैकप्रमाणत्वमुक्तं तत्कथं धर्म्मनिर्णयायाधुना स्मृतिवचनमुपन्यस्यसि तस्याप्रामाण्यादित्यत आह अस्या इति। स्मृतेरित्यर्थः। अष्टकादिवदिति। तथाच प्रथमाध्यायतृतीयपादे अष्टकाः कर्त्तव्याः, गुरुरनुगन्तव्यः, तड़ागं खनितव्यम्, उपनयीत इत्यादि स्मृतीनां प्रामाण्यमप्रामाण्यं वेति संशये चोदनालक्षणोऽर्थो धर्म्म इति सूत्रेण धर्म्मस्य वेदमात्र सूत्रकत्वाभिधानात् स्मृतीनां धर्म्मे प्रामाण्यं नास्तीति पूर्व्वपक्षयित्वा स्मृतीनां श्रुतिमूलकत्वात् प्रामाण्यमिति सिद्धान्तितम्।

ख्यातमिति। तथाच भट्टसम्मतप्रक्रिया अतीव दुरूहत्वान्मादृशमन्दबुद्धेरशक्येति भावः। तर्हि कथं भवता सा प्रक्रिया निष्पादितेत्यत आह तस्मादिति। मादृशमन्दबुद्धीनामशक्यत्वात् गुरुगोविन्दचरणभक्तेरेवायं विलास इति मन्तव्यम्। तथाच गुरुगोविन्दचरणभक्तिरेवैतद्ग्रन्थरूपेण परिणता न पुनर्मत्कौशलमिति भावः। यतोऽयं गोविन्दभक्तेरेव विलासस्तस्मादनेन ग्रन्थरूपवाग्व्यापारेण भगवान् सुतरामेव प्रीयतां

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः॥

इति श्रीआनन्ददेव-सूनुना आपोदेवेन कृतं
मीमांसा-न्यायप्रकाश-संज्ञकं
मीमांसा-प्रकरणं
समाप्तम्।

---

यतोऽसौ भक्तवत्सल इत्याह ग्रन्थरूप इति। सुशोभन इति। धर्म्मनिर्णयगर्भत्वादिति भावः।

चन्द्रद्विवसुभूमाब्दे शाके रविदिने निशि।
ऊर्ज्जशुक्लतृतीयायां टीकेयं पूर्णतां गता॥

नवद्वीपासन्नभूमौ श्रीमद्भागीरथीतटे।
ग्रामं पूर्व्वस्थलीं नाम विद्धि वासस्थलीं मम॥

इति श्रीमद्भारतेश्वरीप्रसादलब्ध महामहोपाध्यायोपाधिक
श्रीकृष्णनाथशर्म्मविरचिता अर्थदर्शनी नाम
मीमांसान्यायप्रकाशटीका समाप्ता।

——:०:——

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI.
Acc. No. ~~1043~~ 1487

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

महामहोपाध्याय-श्रीकृष्णनाथ-न्यायपञ्चानन-प्रकाशिता

## पुस्तकावली ।

—०—

| पुस्तकनामानि | | | मूल्यानि |
|---|---|---|---|
| सटीकमभिज्ञानशकुन्तलम् | ... | ... | १।० |
| सटीका रत्नावली | ... | ... | १।० |
| दायभागप्रबोधिनी टीका | ... | ... | १) |
| सटीक वेदान्तपरिभाषा | ... | ... | २) |
| बृहन्मुग्धबोधव्याकरणम् | ... | ... | २॥० |
| अर्थसंग्रहः ( लौगाक्षिभास्करप्रणीतः ) | | | |
| सटीकं मीमांसाप्रकरणविशेषः | ... | ... | १।० |
| न्यायप्रकाशः ( आपोदेवप्रणीतः ) | | | |
| सटीक-मीमांसाप्रकरणविशेषः | ... | ... | १॥० |
| सटीक-मलमासतत्त्वम् | ... | ... | २) |
| सटीकं कर्पूरादिस्तोत्रम् | ... | .... | ।० |
| श्यामासन्तोषः ( श्यामापूजाकालनिर्णयः ) | | ... | ।० |
| सटीकं वातदूतनामक-दूतकाव्यम् | ... | ... | ।≠० |
| सटीका तत्त्वकौमुदी ( साङ्ख्यशास्त्रम् ) | | ... | १॥० |
| स्मृतिसिद्धान्त प्रथम खण्डम् | ... | ... | १) |
| स्मृतिसिद्धान्त द्वितीय खण्डम् | ... | ... | ॥० |

एतानि पुस्तकानि कलिकातानगर्य्यां कर्णओयालिस् वर्त्मस्थ त्रिंशदङ्क चिह्नित-संस्कृत-यन्त्र-पुस्तकालये प्राप्तव्यानि ।

—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri